द्रुरूपत्वात्, प्रागवस्थात्यागेनोत्तरावस्थाधिष्ठानतया कस्मादनित्यं न भवतीत्यत आह–नित्यं बहुरूपमपि च सत्, यतो ह्यनेनैवानादिमताऽऽविर्भावतिरोभावाध्यासेन बहुरूपेण भवनीयं, क इवेत्याह–नट इव, किंविशिष्टो नट इत्याह–वेषान्तरापन्नो, यथा हि नटो नायकविदूषककपिराक्षसादिपात्रविशेषाननुगच्छन् परमार्थवृत्त्या स एवासौ एवमत्रापीति गाथार्थः ॥ ६७ ॥ अपि च–कोऽयमसदाताधियामप्यसदाकारग्रहस्तथाहि–'पिंडो' इत्यादि । पिण्डो–मृत्पिण्डः कारणमिष्टं–कारणमात्रमभ्युपगम्यते, परिणामित्वात्पयोवत् , सिद्धश्च दृष्टान्तः, 'सव्व'न्ति यथा पिण्डस्तथा सर्वं मृत्स्थासकोशकुशूलादि त्रैलोक्यं वेति स्वपक्षसिद्धिः, परदूषणमाह–आकारादि न वस्तु, निष्कारणत्वात् कारणमात्रानभ्युपगमात् खपुष्पवदिति, स्वातन्त्र्यख्यापनार्थं चैतदिति पौनरुक्त्ययोगः, तथा चैषोऽत्र व्यवहारो–द्रव्येणाद्रव्येण चेति,सैव च रभिकेति [नीतिः] द्रव्यनय इति गाथार्थः ॥६८॥ भावनयः प्राह–'भाव' इत्यादि, भवनानि भूतयो भवन्तीति चेति भावाः, तेभ्योऽर्थान्तरभूतं किं द्रव्यं नाम येनोच्यते–द्रव्यपरिणाममात्रमित्येवमादि, ननु भाव एवायं मुहुर्मुहुरुन्मंक्तिमासादयतीति, एतदुक्तं भवति–यदि हि किञ्चिदनादिकालीनमवस्थितं सद्वस्त्वन्तरारम्भे व्याप्रियेत ततो न्याय्या स्यादियं कल्पना–यावता 'भवणं पडिक्खणं चिय'त्ति भवनं प्रतिक्षणमेवानुभूयते,किमुक्तं भवतीत्याह–भावापत्तिः भावोद्भूतिर्विपत्तिविनाशश्च,एतदुक्तं भवति–पूर्वकक्षणो निवर्त्तते उत्तरस्तूत्पद्यते, 'आरम्भो सरिसवोवमा' इति वचनादिति गाथार्थः ॥६९॥ यद्यसत्कारणं कुत उत्तरोत्पत्तिः ? इति चेत्, अथवा यदङ्गीकृत्य कार्यक्षण उदेति तत्कारणम् ? इति चेत्,अत आह–'नव' इत्यादि,'नवः' 'भावः'कार्यक्षणलक्षणः 'भावान्तरं' कारणक्षणलक्षणं 'अपेक्षते' अङ्गीकरोति, किन्तु 'हेतुनिरपेक्षं' कारणक्षणव्यापारविमुखं 'उत्पद्यते' समाविर्भवति, 'पुञ्जो नत्थि अणागते'त्ति वचनात् , तथा 'तदनन्तरमपैति' उत्पत्त्यनन्तरं विगच्छति, 'संस्कृतं (यत् सत् तत् )क्षणिक' मिति वचनात्,

र्थान्तरत्वात् तस्य चाध्यक्षसिद्धत्वात्, फलमप्याकारः कारणपर्यायत्वात्, अभिधानमप्याकारः शब्देऽन्तर्भावात्, अत आह–पच्छर्द्धं कण्ठ्यम् ॥६४॥ प्रयोगः–'न'इत्यादि, न परानुमतं वस्त्वित्यत्र हि परं शब्दमाह, द्रव्यभावनययोरप्यभिमतत्वोपदर्शनार्थं, 'आकाराभावतो'त्ति असदाकारत्वात् खपुष्पवत्, अत्रैव पक्षे हेत्वन्तरमाह–उपलम्भाभावात्, न हि शृङ्गग्राहिकया सत् परेणेत्थं दर्शयितुं पार्यत इति भावः, तथा व्यवहाराभावादिति, तदेव विकल्पद्वयं यदभ्यधायि आद्येनेति, विधिप्रतिषेधाभ्यां शास्त्रप्रवृत्तिरिति स्वपक्षे तदस्तित्वस्थितिं प्रतिजानीमहे–आकारस्यैवाभ्युपगमाद् घटवदिति, आह च–नाणगारं च वस्तु, किन्तु साकारं सत्त्वाद् दधिवदित्याकारनय इति गाथार्थः ॥६५॥ द्रव्यनय आह–को हि नाम चेतनावानित्थमभिदध्यात्, तथाहि–'दव्वे'त्यादि, द्रव्यं अनादिमदुत्प्रेक्षितपर्यायशृङ्खलाधारं मृदादिधर्ममात्रतिरोभाव(घटादि)धर्ममात्राविर्भावपरिणामः, द्रव्यस्य परिणामो द्रव्यपरिणामः, द्रव्यपरिणाम एव द्रव्यपरिणाममात्रं, मात्रशब्दः प्रतिसमयमुत्प्रेक्षितविचित्रावस्थाप्रतिषेधार्थः, तत् मुक्त्वा–हित्वा किं तदाकारदर्शनं अन्यद् यदुच्यते–'आकारो च्चिय'एवमादि, ननु द्रव्यमेव तत्, किंविशिष्टं ?–उत्पादव्ययरहितं यतो निर्विकारं–अवस्थितं पूर्वापरकोटिविमुक्तं कारणमात्रमुत्फणविफणकुण्डलिताकारसमन्वितसर्पद्रव्यवत्, 'किं हि तत्रापूर्वमुत्पन्नं विद्यमानं वा विगत'मिति वचनादिति गाथार्थः ॥६६॥ अथैतत्स्याद्, अहिद्रव्ये इत्कणादिकार्यस्य प्रत्यक्षसिद्धत्वात् कार्यत्वाच्च सम्बन्धिशब्दत्वेन च कार्यव्यपदेशप्रवृत्तेर्न कारणमात्रं वस्त्विति, उच्यते, नैतद्, अस्याविर्भावतिरोभावमात्र एव कार्योपचाराद्, उपचारस्य चावस्तुत्वात्, आह च–'आविब्भाव' इत्यादि, आविर्भावश्च तिरोभावश्च तौ तावेव तन्मात्रं तदेव परिणामः तस्य कारणं यतो द्रव्यं, प्रदीप इव ध्वान्तघटयोरिति, तस्मान्नैतदिति, प्रकृतं आह–यद्येवं कस्मात्तदेकस्वभावत्वादनन्तकालभाविनोरप्यनयोर्हेलयैव कारणं न भवतीत्यत आह–'अचिन्त्यम्' अचिन्त्यस्वभावं क्रमतस्तथावृत्तेः, आह–एवं च-

हुरूपत्वात्, प्रागवस्थात्यागेनोत्तरावस्थाधिष्ठानतया कस्मादनित्यं न भवतीत्यत आह–नित्यं बहुरूपमपि च सत्, यतो ह्यनेनैवानादिमताऽऽविर्भावतिरोभावाभ्यासेन बहुरूपेण भवनीयं, क इवेत्याह–नट इव, किंविशिष्टो नट इत्याह–वेषान्तरापन्नो, यथा हि नटो नायकविदूषककपिराक्षसादिपात्रविशेषाननुगच्छन् परमार्थवृत्त्या स एवासौ एवमत्रापीति गाथार्थः ॥ ६७ ॥ अपि च–कोऽयमवदाताधियामप्यसदाकारग्रहस्तथाहि–'पिंडो' इत्यादि । पिण्डो–मृत्पिण्डः कारणमिष्टं–कारणमात्रमभ्युपगम्यते, परिणामित्वात्पयोवत्, सिद्धश्च दृष्टान्तः, 'सच्च'न्ति यथा पिण्डस्तथा सर्वं मृत्स्थासकोशकुशूलादि त्रैलोक्यं वेति स्वपक्षसिद्धिः, परदूषणमाह–आकारादि न वस्तु, निष्कारणत्वात् कारणमात्रानभ्युपगमात् खपुष्पवदिति, स्वातन्त्र्यख्यापनार्थं चैतदिति पौनरुक्त्ययोगः, तथा चैषोऽत्र व्यवहारो –द्रव्येणाद्रव्येण चेति,सैव च रभिकेति [नीतिः] द्रव्यनय इति गाथार्थः ॥६८॥ भावनयः प्राह–'भाव' इत्यादि, भवनानि भूतयो भवन्तीति चेति भावाः, तेभ्योऽर्थान्तरभूतं किं द्रव्यं नाम येनोच्यते–द्रव्यपरिणाममात्रमित्येवमादि, ननु भाव एवायं मुहुर्मुहुरुन्मंक्तिमासादयतीति, एतदुक्तं भवति–यदि हि किञ्चिदनादिकालीनमवस्थितं सद्वस्त्वन्तरारम्भे व्याप्रियेत ततो न्याय्या स्यादियं कल्पना–यावता 'भवणं पडिक्खणं चिय'त्ति भवनं प्रतिक्षणमेवानुभूयते,किमुक्तं भवतीत्याह–भावावत्तिः भावोद्भूतिर्विपत्तिश्च विनाशश्च,एतदुक्तं भवति–पूर्वकक्षणो निवर्त्तते उत्तरस्तूत्पद्यते, 'आरग्गे सरिसवोवमा' इति वचनादिति गाथार्थः ॥६९॥ यद्यसत्कारणं कुत उत्तरोत्पत्तिः ? इति चेत्, अथवा यदङ्गीकृत्य कार्यक्षण उदेति तत्कारणम् ? इति चेत्,अत आह–'नव' इत्यादि,'नवः''भावः'कार्यक्षणलक्षणः 'भावान्तरं' कारणक्षणलक्षणं 'अपेक्षते' अङ्गीकरोति, किन्तु 'हेतुनिरपेक्षं' कारणक्षणव्यापारविमुखं 'उत्पद्यते' समाविर्भवति, 'पुञ्जो नत्थि अणागते'त्ति वचनात्, तथा 'तदनन्तरमपैति' उत्पत्त्यनन्तरं विगच्छति, 'संस्कृतं (यत् सत् तत्)क्षणिक' मिति वचनात्,

तदिति तत्कार्यं क्षणरूपं, किं सहेतुकं?, नेत्याह—अहेतुत एव—निर्हेतुकमेव, अत एवोक्तं—"णिव्वुया णेव चिट्ठंति, आरग्गे सरिसवोवमा" इति, अत्र हि भूरि वक्तव्यं तत्तु ग्रन्थान्तरेभ्यो भावनीयमिति गाथार्थः ॥७०॥ अपिच—कोऽयं शास्त्रखेदितधियां द्रव्यमात्रग्रहः, तथाहि—'पिंडो' इत्यादि, पिण्डो—मृत्पिण्डः कार्यं, नतु कारणमित्यभिप्रायः, प्रतिसमयभवनात् यथा दधीति दृष्टान्तः, 'झटित्येव कथं युत्ते'ति वचनात्, तथा सर्वमिति प्राग्वत्, अनभिमतं प्रतिषेधमाह—'नत्थि कारणं कज्जाभावातो' कोऽस्यार्थः?—पिण्डे प्रतिसमयभवनाभ्युपगमाभावात् खरविषाणवदिति, अपि चायं लोकव्यवहारो भावाद्वा भवेदभावाद्वेति सैव नीतिरिति भावनय इति गाथार्थः ॥७१॥ अथोपसंजिहीर्षुराह—'एव' मित्यादि, एवं—उक्तेन विधिना विवदन्ति, विविधपक्षग्राहका भवन्तीत्यर्थः, के?—'नयाः'—शब्दादयः, कुतः इत्याह—'मिथ्याभिनिवेशतो' मिथ्यात्वाभिमानादिभ्यः 'परोप्परतो' मिथः, प्रयोगश्चात्र—मिथ्यादृष्टयो नामादयः, एकांशग्राहित्वेनासम्पूर्णत्वग्राहित्वात्, गजमात्रभिन्नदेशसंस्पर्शने बहुविधविवादमुखरजात्यन्धवृन्दवत्, तस्मात्सावद्यमिदं दर्शनमित्यभिप्रायः, किं तर्ह्यनवद्यमित्याह—इदं—अनुभवप्रत्यक्षसिद्धं 'सव्वनयमयं' सर्वनयविवादानास्पदं, किञ्च तदित्याह—'जिनमतं' जिनप्रवचनं 'अत्यन्तं सुतराम् 'अनवद्यं' अदोषम्, प्रयोगो—जिनमतं तथ्यं समस्तवस्तुपर्यायाध्यासितपदार्थसंग्राहित्वात् चक्षुष्मतः समन्तात् समस्तहस्तिदर्शनोल्लापवदिति गाथार्थः ॥ ७२ ॥ तथा च—'नामाती'त्यादि, नामादयश्च ते भेदाश्चेति, भेदाः—पर्यायाः, तेषु नामादिभेदेषु नामाकारद्रव्यभावेषु, शब्दार्थे बुद्धिः स एव परिणामः २ तस्य भावः—उत्पत्तिः २ तस्मात्० 'नियतम्' अस्खलितं सदाकालमिति यावत्, किमत आह—यद्वस्त्वस्ति लोके चतुष्पर्यायं तत्सर्वमिति—प्रयोगः—यत्र शब्दार्थबुद्धिः प्रसूयते तत्र चतुष्पर्यायता यथा घटे, विपक्षे शशशृङ्गं, चतुर्णामप्यन्योऽन्याविनाभाव इति भावनीयम्, 'आकारवियुक्तं नाम, आकारो नामवर्जितः। शुकशुकावदि'त्येवमादि-

वचनादिति गाथार्थः ॥ ७३ ॥ उपसंहारमाह—

इय सव्वभेअसंघायकारिणो भिन्नलक्खणा एते। उप्पायाइतियं पिव धम्मा पइवत्थुमाउज्जा ॥ ७४ ॥

'इय' इत्येवमादि, 'इय' एवं 'एते'त्ति ये नामादयो धर्माः,किंविशिष्टाः ?—'सर्वभेदकारिणः' सर्वसंघातकारिणो नयाः,तत्र सर्व-मेदकारिणो यथा मङ्गलमित्याकारिते प्रतिवस्तु अभिधानादिभेदादानन्त्यमिष्टितोऽध्यवसीयते, अथवा सर्वस्येन्द्रस्य भेदकारिणः सर्व-भेदकारिणः, प्रतिभेदं स्पष्टतः प्रतीतेः, एवं सर्वस्येन्द्रस्य सङ्घातकारिणः केचित्,समस्तभावाध्यारोपेणैकत्वप्रतिपत्तेः, तथाहि—नामेन्द्र एवाभिधानाकारद्रव्यभावाः प्रतीयन्ते, इत्येवमादि, भिन्नलक्षणाश्चैते भिन्नप्रत्ययहेतुत्वाद् घटपटकटशकटा इव, किमिवेत्याह—उत्पातादित्रयमिव, उत्पादविगमध्रौव्याणीवेत्यर्थः,'प्रतिवस्तु' प्रतिपदार्थं 'आयोज्याः' अनुसरणीया इति गाथार्थः ॥७४॥ इदानी-मयं नामादिनिक्षेपः सामान्यतो विशेषतश्च नयैः परिमृग्यते इति, अत आह—

नामाइतियं दव्वट्ठियस्स भावो य पज्जवनयस्स। संगहववहारा पढमगस्स सेसा य इयरस्स ॥ ७५ ॥

जं सामन्नग्गाही संगिण्हइ तेण संगहो निययं। जेण विसेसग्गाही ववहारो तो विसेसेइ ॥ ७६ ॥

सद्दुज्जुसुया पज्जायवायगा भावसंगहं बेंति। उवरिमया विवरीआ भावं भिंदंति तो निययं ॥ ७७ ॥

'नामाइ' इत्यादि, तत्र नामादिनिक्षेपत्रयं द्रव्यास्तिकस्य मतं, तदर्थशून्यत्वात् तस्य चाभावावलम्बित्वाद् द्रव्यास्तिकत्वाद्, 'भावो य पज्जवणयस्स मतं'तदर्थाशून्यत्वाद् ,तथा संग्रहव्यवहारौ द्वावपि 'पढमगस्स'त्ति प्रथमनयमतावलम्बिनौ, शेषास्तु—ऋजुसू-त्रादयः,इतरस्य—द्वितीयस्य मतमालम्बत इति वाक्यशेषः,एतच्चाचार्यसिद्धसेनाभिप्रायेण उच्यते,न सूत्राभिप्रायेण,तथाहि सूत्रेऽभि-

हितं-"उज्जुसुयस्स एगे अणुवउत्ते [एगं दव्वं] आगमतो एगं दव्वावस्सयं, पुहत्तं नेच्छइ" इत्यतोऽसौ द्रव्यमिच्छन् कथं भावमात्रग्राहिणं पर्यायनयमालम्बते इति गाथार्थः ॥७५॥ उक्तमेवार्थं प्रपञ्चितज्ञविनेयजनानुग्रहार्थं पुनरप्याह-यस्मात् सामान्यग्राही संग्रहः संगृह्णाति तस्मात्संग्रहः, त्रितयं नामाद्येकत्वेन, एतदुक्तं भवति-यावन्ति कानिचिद् भुवनविवरभाञ्जि नामानि तदेकं नाम, एवं स्थापना द्रव्यं चेति, तथा येन विशेषग्राही व्यवहारस्तेनासौ नामादि विशिनष्टि-भिनत्ति, प्रभूतानीच्छतीत्यर्थः, इति गाथार्थः ॥७६॥ 'सेसा उ इतरस्स' त्ति विभावयिषुराह-'सद्दज्जु'गाहा, शब्दऋजुसूत्रौ पर्यायवादिनौ भावसंग्रहं ब्रूतः, पर्यायशब्दैर्भावमिच्छत इत्यर्थः, तथा उपरितनौ-समभिरूढैवंभूतौ एतद्विपरीतौ, पर्यायध्वनिभिरसंग्रहात्, नह्येतौ भावमङ्गलमिन्द्रं वा भिन्नप्रवृत्तिभिर्ध्वनिभिरभिधत्त इति भावना, 'तो' इति तस्मान्नियतमासंसारं यावदिमौ भावं भावमङ्गलादिकमर्थं, किं ?, भिन्तः, तथाहि-समरूढस्यान्योऽर्थो मङ्गलशब्देनोच्यते अन्यश्च विघ्नविघातकृदित्यनेन, एवंभूतस्य तु यदा साधुधर्मोपचयमादत्ते तदाऽसौ वस्तु, तत्कार्यकरणात्, अन्यदा त्ववस्तु, तत्कार्याकरणात् स्तम्भवत् ॥ एवं तावत् तत्त्वभेदपर्यायैर्मङ्गलमाख्यातमिति गाथार्थः ॥ ७७ ॥

मंगलमहवा नन्दी चउव्विहा मङ्गलं व सा नेया। दव्वे तूरसमुदओ भावम्मि य पञ्च नाणाइं ॥ ७८ ॥

'मंगल'मित्यादि, अथवा नोआगमतो मङ्गलं नन्दी, साऽपि च चतूरूपैव मङ्गलमिव नामादिभेदात्, तत्र नामस्थापना प्राग्वत्, द्रव्ये-द्रव्यविषया नन्दी तूर्यसमुदायो, यथोक्तं "भम्भामुकुन्दमद्दलकडंबझल्लरी" त्येवमादि, एष च प्रक्रमात् व्यतिरिक्तेति गम्यते, तथा भावे च-भावविषया नोआगमतो नन्दी, केत्यत आह-पञ्च ज्ञानानीति गाथार्थः ॥ ७८ ॥

आभिणिबोहियनाणं सुयनाणं चेव ओहिनाणं च। तह मणपज्जवनाणं केवलनाणं च पञ्चमयं ॥७९॥(नि० १)

अत्थाभिमुहो निअओ बोहो जो सो मओ अभिनिबोहो। सो चेवाऽभिणिबोहिअमहव जहाजोगमाउज्जं ॥८०॥
तं तेण तओ तम्मि व सो वाऽभिणिवुज्झए तओ वा तं। तं तेण तओ तम्मि व सुणेइ सो वा सुअं तेण ॥८१॥
तेणावहीयए तम्मि वाऽवहाणं तओऽवही सो य। मज्जाया जं तीए दव्वाइ परोप्परं मुणइ ॥ ८२ ॥
पज्जवणं पज्जयणं पज्जाओ वा मणम्मि मणसो वा। तस्स व पज्जायादिन्नाणं मणपज्जवं नाणं ॥ ८३ ॥
केवलमेगं सुद्धं सगलमसाहारणं अणन्तं च। पायं च नाणसद्दो नामसमाणाहिगरणोऽयं ॥ ८४ ॥

'आभिणिबोहियनाणं' गाहा। बोधनं बोधः-सम्बोधः, पञ्चानां ज्ञानानामप्याद्यो वर्त्तते, किंविशिष्टः ?-अर्थाभिमुख इति,तत्र 'ऋ गतौ'विति अर्यत इति अर्थः तमर्थं प्रत्यभिमुखः,भवण इत्यर्थः,अर्थबलायाततया तत्त्वा(न)न्तरीयकप्रादुर्भूतिरिति भावना,स चैवमपटुत्वात् क्षयोपशमस्याविनिश्चिततत्त्वोऽपि स्यादत उच्यते-नियतो-निश्चितः-संशयाद्यपोहेन रूपमेवेदमिति प्रत्यवधारणात्मकः,एवं चावग्रहोऽपि 'निश्चितमवगृह्णाती'ति वचनाद्, कार्यत उपलब्धेः, तत्रैतत् स्यात्-नियतस्यार्थाभिमुखताऽव्यभिचारान्नियतग्रहणमेवास्त्विति, तन्न, द्विचन्द्रप्रतिभासस्यापि तैमिरिकं प्रति नियतत्वे सत्यप्यर्थाभिमुखताया अभावात्,ततश्च "अत्थाभिमुहो नियतो बोहो जो"इत्येवमादिभाष्यगाथा,स एवं "अत्थाभिमुहो नियतो बोहो जो" स किमित्यत आह-'सो मतोऽभिनिबोहो'त्ति स मतः-अभिप्रेतस्तीर्थकरगणधरादीनामभिनिबोधः, 'सो चेवाभिनिबोहियं'ति स एव स्वार्थिकप्रत्ययोपादानादाभिनिबोधिकम्, 'अहव'त्ति अथवा नात्र स्वार्थिको विवक्ष्यते, किन्तु 'यथायोगं' यथासम्बन्धम् 'आयोज्यं' आयोजनीयं, तथाहि-'अत्थ' इत्यादि, अर्थाभिमुखो निश्चितो बोधोऽभिनिबोधः, अभिनिबोधे भवमाभिनिबोधिकं, न यत्संशयज्ञान विपर्ययादि वेत्यभिप्रायः,अभिनिबोधेन वा निर्वृत्तं-घटितमाभिनिबोधिकं, न यद्वि-

पर्यायादिज्ञानं संशयादि चेति, अथवाऽर्थाभिमुखनियतबोधमयं, न यदनध्यवसायज्ञानमितरे चेति, तत्प्रयोजनं वा अभिनिबोधफलं वाऽभिनिबोधिकं, न त्वनभिनिबोधकार्यमिति गुरवो व्याचक्षते, आभिनिबोधिकं च तत् ज्ञानं चेत्याभिनिबोधिकज्ञानमिति गाथार्थः ॥ ८० ॥ अथवा—'तं'इत्यादि ॥ 'तमभिणिबुज्झइ'त्ति,कोऽस्यार्थः ?, अभिनिबुध्यते आत्मा तदित्याभिनिबोधिकं—अवग्रहादि, तस्य स्वसंवेद्यत्वेनाऽऽभिमुख्यतो निश्चीयमानत्वात्, अभिनिबुध्यते वाऽनेनास्मादस्मिन् वेत्याभिनिबोधिकं,किञ्च तत् ?, क्षयोपशमः, कारणे कार्योपचारात्,'सो व'त्ति अभिनिबुध्यते वाऽसावित्याभिनिबोधिकं, कोऽसौ ?,आत्मा, तदभिन्नत्वात्, 'ततो वा तं'ति ततः—अस्मात्कारणादभिनिबोधिकमनेन प्रकारान्तरेण कारकवशाद् व्युत्पत्तिपक्षमस्याह ॥ अथ श्रुतज्ञानव्युत्पत्तिं विवक्षुः पश्चार्द्धमाह—'सुणेइ'त्ति, अस्यायमर्थः—शृणोति तदित्यात्मेति श्रुतं श्रूयते वाऽनेनास्मादस्मिन् वेति क्षयोपशम एव, 'सो व'त्ति शृणोत्यसाविति श्रुतमात्मैव, भावना प्राग्वत्, 'सुयं तेणं'ति, येनैवं तेन कारणेन श्रुतं, श्रुतं च तत् ज्ञानं चेति श्रुतज्ञानमिति गाथार्थः ॥ ८१ ॥ 'तेणावहीयते' इत्यादि । अवधीयते—मर्यादया परिच्छिद्यतेऽनेनेति 'तंमि व'त्ति अवधीयतेऽस्मिन् सतीत्यवधिः, 'अवधाणं वे' त्यवधानं वा—मर्यादया परिच्छेदनं वा, येन कारणेनैवं 'ततोऽवहि'त्ति तेन कारणेनावधिरित्याख्यायते,स चावधिः—मर्यादा यद्—यस्मात्तेन—अवधिना,स्त्रीलिङ्गनिर्देशस्तु प्राकृतशैल्या, 'द्रव्यादि' द्रव्यक्षेत्रकालभावान् परस्परतो 'मुणति' जानाति, यत्तेन परस्परोपनिबन्धना द्रव्यादयोऽवधीयन्ते अतोऽवधिरिति भावनेति गाथार्थः ॥ ८२ ॥ 'पज्जवण' मित्यादि । तत्र 'पज्जवणं 'अव गत्यादिष्वि'ति वचनात्, अवनं अवः, अवनं गमनं वेदनमिति पर्यायाः, परिः—सर्वतोभावे, पर्यवनं पर्यवः—सर्वतः परिच्छेदनमिति भावः, क्व तदित्याह—'मणम्मि मणसो व'त्ति मनसि ग्राह्ये मनसो वा ग्राह्यस्य सम्बन्धी पर्यवो मनःपर्यवो, मनःपर्यवश्चासौ ज्ञानं च मनःपर्यवज्ञानं, अथवा

'पज्जयणं'ति 'अय वय मय' इत्यादि दण्डकधातुः, अयनं अयः, अयनं गमनं वेदनमिति पर्यायाः, परिः सर्वतोभावे, पर्ययनं पर्ययः सर्वतः परिच्छेदनमिति भावः, क्व तादित्याह—'मणम्मि मणसो व'त्ति मनसि ग्राह्ये मनसो वा ग्राह्यस्य सम्बन्धी पर्ययो मनःपर्ययः, पुनः समानाधिकरणः, अथवा 'पज्जायो'त्ति 'इण् गतौ' आयो लाभः प्राप्तिरिति पर्यायाः, परिः सर्वतोभावे, समन्तादायः पर्यायः, क्वासावित्याह—'मणम्मि मणसो व'त्ति मनसि ग्राह्ये मनसो वा ग्राह्यस्य सम्बन्धी पर्यायो मनःपर्यायः, मनपर्यायश्चासौ ज्ञानं च मनःपर्यायज्ञानं, एवं तावत्सामानाधिकरण्यमङ्गीकृत्योक्तं, अथ वैयधिकरण्यमङ्गीकृत्योच्यते—मनसः पर्यवाः ( पर्ययाः ) पर्यायाः भेदा धर्मा बाह्यवस्त्वालोचनप्रकारा इत्यर्थः, ततश्च 'तस्स वे'त्यादि पच्छद्धं, तस्य वा द्रव्यमनसः सम्बन्धिषु पर्यायादिष्वधिकरण-भूतेषु तेषां वा सम्बन्धि, आदिशब्दात् पर्ययपर्यवयोर्ग्रहः ज्ञानं—परिच्छेदनमिदमनेन चिन्तितमिति मनःपर्यायज्ञानमिति वैयधिकरण्यं, अत एव वक्ष्यति—'पायं च णाणसद्दो नाणसमाणाहिगरणोऽय'मिति गाथार्थः ॥ ८३ ॥ 'केवल' मित्यादि । केवलं एकं शुद्धं सकलमसाधारणमनन्तं चेत्यर्थः, ज्ञानशब्दश्च सर्वत्राभिनिबोधिकादिषु समानाधिकरणो द्रष्टव्यः, तद्यथा—आभिनिबोधिकं च तज्ज्ञानं चेत्येवं सर्वत्र, प्रायोग्रहणादन्योऽपि समासः स्यात्, स च मनःपर्यायज्ञान उक्तः, एवमन्यत्रापि च सम्भवतः स्यादिति गाथार्थः ॥ ८४ ॥ ननु च केन पुनः कारणेनादौ मतिश्रुते उपन्यस्ते ? इत्यत आह—

जं सामिकालकारणविसयपरोक्खत्तणेहिं तुल्लाइं । तब्भावे सेसाणि य तेणाईए मइसुयाइं ॥ ८५ ॥
मइपुव्वं जेण सुयं तेणाईए मई विसिट्ठो वा । मइभेओ चेव सुयं तो मइसमणंतरं भणियं ॥ ८६ ॥
कालविवज्जयसामित्तलाभसाहम्मओऽवही तत्तो । माणसमित्तो छउमत्थविसयभावादिसामण्णा ॥ ८७॥

अन्ते केवलमुत्तमजइसामित्तावसाणलाभाओ । एत्थं च मइसुयाइं परोक्खमियरं च पच्चक्खं ॥ ८८ ॥

'जं'इत्यादि । यद्–यस्मात्तुल्ये–समाने एते, कैरित्याह–स्वामिकालकारणविषयपरोक्षत्वैः, तत्र स्वामितुल्यता एकस्वामित्वात् 'जत्थे'त्येवमादिवचनात्, कालतुल्यता सर्वकालानुच्छेदात्समानस्थितिकत्वाद्वा, कारणतुल्यतेन्द्रियानिन्द्रियनिमित्तत्वात् क्षयोपशमनिमित्तत्वाद्वा, विषयतुल्यता सर्वद्रव्यादिविषयत्वात्, परोक्षत्वतुल्यता परनिमित्तत्वात्, तथा तद्भावे च–मतिश्रुतभावे च शेषाण्यवध्यादीनि यस्मात् तेणादीए मतिसुयाइं इति गाथार्थः ॥ ८५ ॥ अथ मतिरादौ किमित्यत आह–'मती'त्यादि । मतिः पूर्वमस्येति मतिपूर्वं येन कारणेन श्रुतं–श्रुतज्ञानं तेन कारणेनादौ मतिः–मतिज्ञानं,अभ्यधायि भद्रबाहुस्वामिनेति गम्यते एवेति,अथवेन्द्रियानिन्द्रियनिमित्तत्वादुभयमप्यविशिष्टा मतिस्ततश्च 'विसिट्ठो मतिभेदो चेव सुतं'ति, विशिष्ट एव कश्चिन्मतिभेदः श्रुतमभिधीयते, परोपदेशमात्रभेदभागर्हद्वचनकारणश्चेति भावना, येन कारणेनैवं तो मतिसमणंतरं भणिअंति गाथार्थः ॥ ८६ ॥ 'काल' इत्यादि । मतिश्रुतसमानकालत्वात् मिथ्यादर्शनपरिग्रहाच्च तद्विपर्ययसाधर्म्यात् स्वामित्वसाधर्म्यात् क्वचिल्लाभकालैकत्वाच्च ताभ्यां समनन्तरोऽवधिरिति, ततश्छद्मस्थस्वामिसामान्यात्पुद्गलमात्रविषयसामान्यात् क्षायोपशमिकभावसामान्यात् प्रत्यक्षादिसामान्याच्च मानसमिति गाथार्थः ॥ ८७ ॥ 'अंते'इत्यादि । अन्ते केवलमुत्तमत्वात्, सर्वशुद्धत्वादित्यर्थः, तथा यतिस्वामिसामान्यात् सर्वावसानलाभाच्च । अत्र ज्ञानपञ्चके मतिश्रुते परोक्षम्, इतरच्च अवध्यादित्रयं प्रत्यक्षं, 'तं समासओ दुविहं पन्नत्तं, तंजहा–पच्चक्खं च परोक्खं चे'ति वचनादिति गाथार्थः ॥ ८८ ॥ अथ प्रत्यक्षलक्षणमाह–

जीवो अक्खो अत्थव्वावणभोयणगुणण्णिओ जेणं । तं पइ वट्टइ नाणं जं पच्चक्खं तयं तिविहं ॥ ८९ ॥

अक्खस्स पोग्गलकया जं दव्विन्दियमणा परा तेणं। तेहिंतो जं नाणं परोक्खमिह तमणुमाणं व ॥ ९० ॥
केसिंचि इंदिआइं अक्खाइं तदुवलद्धि पच्चक्खं। तन्नो ताइं जमचेअणाइं जाणंति न घडो व्व ॥ ९१ ॥
उवलद्धा तत्थाऽऽया तव्विगमे तदुवलद्धसरणाओ। गेहगवक्खोवरमेऽवि तदुवलद्धाऽणुसरिया वा ॥ ९२ ॥
इंदियमणोनिमित्तं परोक्खमिह संसयादिभावाओ। तक्कारणं परोक्खं जहेह साभासमणुमाणं ॥ ९३ ॥
होन्ति परोक्खाइं मइसुयाइं जीवस्स परनिमित्ताओ। पुव्वोवलद्धसंबन्धसरणओ वाऽणुमाणं व ॥ ९४ ॥
एगंतेण परोक्खं लिंगियमोहाइयं च पच्चक्खं। इंदियमणोभवं जं तं संववहारपच्चक्खं ॥ ९५ ॥

'जीवो' इत्यादि 'जीवो अक्खो'त्ति इहाक्षशब्देन जीवो भण्यते, अत्र हेतुमाह–'अत्थव्वावणगुणण्णिओ जेणं'ति, अस्यायमर्थः–अर्थव्यापनगुणान्वितत्वात्, तेनैतदुक्तं भवति–ज्ञानात्मना अश्नुते–व्याप्नोत्यर्थानित्यक्षः, अथवा 'जीवो अक्खो'त्ति, कुत इत्याह–'अत्थभोयणगुणण्णिओ जेणं'ति, अर्थभोजनगुणान्वितत्वात्, तेनैतदुक्तं भवति–पालयति भुङ्क्ते चेत्यर्थः, अशेर्भोजनार्थत्वात् भुजेश्च पालनाभ्यवहारार्थत्वात्, अतः–'तं पइ वट्टइ नाणं जं पच्चक्खं तयंति, अक्षं प्रति यद्वर्त्तते ज्ञानं साक्षात्कारितया तत् प्रत्यक्षमिति सञ्ज्ञीयते, तच्च त्रिविधमवध्यादीति गाथार्थः ॥८९॥ अथ परोक्षलक्षणमाह–'अक्खस्से'त्यादि, 'अक्षस्य' जीवस्य 'पुद्गलकृतानि' पुद्गलैर्घटितानि यद्–यस्मात्, कानि तानि इत्याह–'द्रव्येन्द्रियमनांसि, द्रव्येन्द्रियाणि द्रव्यमनश्चेत्यर्थः, परा तेणं ति, तस्मात् तानि पराणीत्यर्थः, मूर्तामूर्तयोर्वैलक्षण्याद्, अतस्तेभ्यः पुद्गलमयेभ्य इन्द्रियमनोभ्यो यज्ज्ञानं–रूपादिपदार्थपरिच्छेदनं 'तत् परोक्खमिह'त्ति तदिह परोक्षमभिदध्महे, असाक्षादुत्पत्तेर्धूमादग्निज्ञानवदिति गाथार्थः ॥ ९० ॥ एवं च स्थिते–'केसिंची' त्यादि, केषांचिद्–वैशेषिकादी-

नामिन्द्रियाणि–स्पर्शनादीनि अक्षाणि, नाक्षोऽक्षाणि, अतः तदुपलब्धिः–इन्द्रियाणामव्यवधानेनोपलब्धिः प्रत्यक्षमुच्यते, उच्यतां न दोष इति चेत्, अत आह–तत्र, मिथ्यादर्शनत्वात्, कुत इत्याह–तानि–इन्द्रियाणि यद्–यस्मादचेतनानि जानन्ति न घटवदिति दृष्टान्त इति गाथार्थः ॥ ९१ ॥ ननु च प्रत्यक्षविरोधिनीयं प्रतिज्ञा, इन्द्रियाणां साक्षात्कारेणानुभवात्, उच्यते, नैवं, भ्रान्तत्वादस्यानुभवस्य, तथाहि–'उवलद्धा' इत्यादि, 'तत्थ'त्ति तस्मिन् पौद्गलिकेन्द्रियरन्ध्रे 'तेन' देहकुटीरकेन्द्रियगवाक्षकेण, करणभूतेनेत्यर्थः, किमत आह–'उवलद्धा आया'त्ति उपलब्धा आत्मा–जीवो वर्त्तते, कुत इत्याह–तद्विगमेऽपि–इन्द्रियरन्ध्रविगमेऽपीन्द्रियावरणक्षयोपशमविगमेऽपि 'तदुवलद्धसरणाओ'त्ति तदुपलब्धार्थानुस्मरणात्, क्षयोपशमविशिष्टेन्द्रियोपलब्धार्थानुस्मरणादिति भावना, दृष्टान्तमाह–गृहगवाक्षोपरमेऽपि–स्थगनेऽपि सति तदुपलब्धार्थानुस्मर्तृवत्–गृहगवाक्षोपलब्धार्थानुस्मर्तृपुरुषवत्, एतदुक्तं भवति–यथा गृहस्थः पुरुषो गवाक्षेणोपलब्धा, न तु गवाक्षः, तद्विगमे तदुपलब्धार्थानुस्मरणाद्, एवमत्रापीति गाथार्थः ॥ ९२ ॥ आह–कस्येदं दर्शनं स्वतन्त्राणीन्द्रियाणि उपलब्धिमन्ति, नन्वेतावद् ब्रूमो–यदात्मन इन्द्रियमनोनिमित्तं तत्प्रत्यक्षं, 'आत्मा मनसा युज्यते, मन इन्द्रियेण, इन्द्रियमर्थेने'ति वचनात्, अत्रोच्यते, चीर्णं चरसि गान्धारि!, तथाहि–उक्तमेतत् प्राक् 'अक्खस्स पोग्गलकया' इत्यादिगाथयेति ॥ इतश्च–'इंदिये'त्यादि । इन्द्रियमनोनिमित्तं परोक्षं, संशयविपर्ययानध्यवसायनिश्चयसद्भावाद्, दृष्टान्तमाह–यथेह सासासमनुमानं तत्कारणत्वात् परोक्षमेवमत्रापीति, प्रयोगौ–यदिन्द्रियमनोनिमित्तं तत्परोक्षं संशयविपर्ययादिसद्भावात्, इन्द्रियमनोनिमित्तासिद्धानैकान्तिकविरुद्धविषयानुमानाभासवत्, एवमिन्द्रियादिनिमित्तं परोक्षं निश्चयसद्भावादनुमानज्ञानवत्, यच्च प्रत्यक्षं न तत्र संशयादयो यथाऽवध्यादिषु, न चात्रध्यादिषु निश्चयबुद्धिरिति व्यपदेशो ज्ञानविशेषत्वादिति गाथार्थः ॥ ९३ ॥ साम्प्रतं विशेषं

पक्षीकुर्वन्नाह—'होंति' इत्यादि ।' इह हि जीवस्य-आत्मनो मतिश्रुते परोक्षे परनिमित्तत्वादनुमानवत्, अथवाऽऽत्मन एते परोक्षे पूर्वोपलब्धसम्बन्धस्मरणद्वारेण जायमानत्वात् धूमदर्शनादग्निज्ञानवत्, तस्मादिन्द्रियप्रत्यक्षं परोक्षं परनिमित्तत्वात्, अवध्यादि तु प्रत्यक्षं अपरनिमित्तत्वात् ॥ ९४ ॥ 'एगंतेण परोक्खं' मित्यादि । आह-ननु इन्द्रियप्रत्यक्षं परोक्षमित्युत्सूत्रमुक्तं "पचक्खं दुविहं पण्णत्तं, तंजहा-इंदियपच्चक्खं च नोइंदियपच्चक्खं चे" ति वचनात्, उच्यते, सत्यमेवमेतत्, किन्तु यदात्मन इन्द्रियमनोभिर्बाह्यलिङ्ग-प्रत्ययमुत्पद्यते तदेकान्तेनेन्द्रियाणामात्मनश्च परोक्षमनुमानत्वाद् धूमादग्निज्ञानवत्, अवध्यादि त्वात्मनः प्रत्यक्षमव्यवधानेनोत्पत्तेः इन्द्रियाणां धूमज्ञानवदिति मुख्यं, यत्पुनः साक्षादिन्द्रियमनोनिमित्तं तत्तेषामेव प्रत्यक्षमलिङ्गत्वादात्मनोऽवध्यादिवत् आत्मनस्तु परोक्षं 'अक्खस्स पोग्गलकया' इत्यादि समासादित्वाद्, अपिच-तेषामपीदं संव्यवहारतः प्रत्यक्षं 'तन्नो ताइ जमचेयणाइं' इत्यादि सिद्धत्वात्, आह-न सूत्रे विशेष्योक्तं यथा संव्यवहारत इदं प्रत्यक्षमिति 'इंदियपच्चक्खं चे'ति सामान्यश्रवणात्, सत्यं, प्रदेशान्तरे उक्तत्वात्, 'परोक्खं दुविहं पन्नत्तं-आभिणिबोहियनाणपरुक्खं सुयनाणपरुक्खं चे'ति श्रवणात्, न चाभ्यामनन्यदिन्द्रियनिमित्तमस्ति यदञ्जसेन्द्रियप्रत्यक्षं स्यात्, ननु यत् सांव्यवहारिकमलैङ्गिकत्वेन साक्षात्कारोद्भवं तदञ्जसा प्रत्यक्षमस्तु, यच्चात्मनो लिङ्गिकं इन्द्रियाणां च धूमादनलज्ञानमिव तत्तु मतिश्रुते भविष्यत इति को दोष ?, उच्यते, नैतदेवं, लैङ्गिकस्येन्द्रियनिमित्तत्वाभावाद् इन्द्रियस्य प्रत्युत्पन्नमात्रविषयत्वात्, मतिश्रुतयोश्चेन्द्रियानिन्द्रियनिमित्तत्वात्, इन्द्रियप्रत्यक्षमेव तर्हि मतिश्रुतयोरन्यदस्तु इति चेतन्न, षष्ठज्ञानप्रसङ्गात्। आह-एवमिन्द्रियनिमित्तं परोक्षमिति श्रद्धध्महे, मनोनिमित्तं न, उच्यते, यथेदं परनिमित्ततया परोक्षमिति श्रद्धत्से एवमिदमपि कस्मान्न श्रद्धीयते ? इति, सूत्रेऽनुपदिष्टत्वात् 'इंदियपच्चक्खं चे'ति सामान्येनाभिधानादिति चेत्, सूरिराह-यद्येवं तत्तत्र प्रत्यक्षमपि नोक्तं,

सामान्येनैवाभिधानात्, आह–एवं द्वितीयावयवे विशेष्य प्रत्यक्षमुक्तं 'नोइन्दियपचक्खं चे'ति वचनात्, नोइन्दियं च मन इत्यभिप्रायः, उच्यते, न, सर्वनिषेधवचनत्वेन नोशब्दस्य तत्रावधिज्ञानादिविशेषणात्, तत्रैतत् स्यात्–नोइन्द्रियं–मनः, ततश्च तन्निमित्तमवध्यादि भविष्यतीति नोइन्द्रियनिमित्तं परोक्षमिति न श्रद्दध्महे इति, एतदपि नास्ति, मनःपर्याप्त्या अपर्याप्तकस्यावधिज्ञानाभावेन तदुपयोगाभावतोऽनिष्टापत्तिप्रसङ्गात् 'चुतेमित्ति जाणती'त्यस्यासम्बध्यमानत्वात्, सिद्धस्य चाज्ञत्वप्रसङ्गः स्यादमनस्कत्वात्, तस्मात् स्थितमेतत्–यथेन्द्रियप्रत्यक्षं परोक्षमुक्तं मतिश्रुतयोः परोक्षत्वेन पठितत्वात्, एवं मतिश्रुतपरोक्षवचनादेव मनोनिमित्तमपि तदन्तर्गतत्वादेव परोक्षमिति श्रद्धातव्यं, मतेश्चाष्टाविंशतिभेदभिन्नत्वात्, अन्यथाऽस्यापि पञ्चत्वप्रसङ्गात्, नच तदिष्टमिति । साम्प्रतं गाथाक्षरार्थः प्रतन्यते–एकान्तेन परोक्षं लैङ्गिकमात्मनः परनिमित्तत्वात्, अवध्यादि च प्रत्यक्षमात्मनोऽपरनिमित्तत्वात्, इन्द्रियादिजं कथं तर्हि प्रत्यक्षमित्यत आह–संव्यवहारः (रप्रत्यक्षं) साक्षादिवेन्द्रियाणां तदुत्पत्तेः,अन्यथोक्तं–'नो इंदियावि उवलद्धिमन्ति विगतेसु विसयसंभरणा' इत्येवमादि, तदेवं ज्ञानपञ्चकं परोक्षं प्रत्यक्षं चेति लक्षणत उक्तमिति गाथार्थः ॥९५॥ अथ परोक्षाधिकार एव परश्चोदयति–मतिश्रुतयोः स्वामिकालादिसामान्यादेकत्वमेवास्तु, मा भूद् भेदकल्पना, तथोक्तं–'जत्थ मइनाणं तत्थ सुयनाणं, जत्थ सुयनाणं तत्थ मइनाणं'ति, तथा चाह–

सामित्ताइविसेसाभावाओ मइसुएगया नाम । लक्खणभेआदिकयं नाणत्तं तयविसेसेऽवि ॥ ९६ ॥
लक्खणभेआ हेउफलभावओ भेय इन्दियविभागा । वागक्खरमूगेयरभेआ भेओ मइसुयाणं ॥ ९७ ॥

'सामि' इत्यादि, स्वामित्वादिभिर्विशेषाभावः तस्मात् किमत आह–मतिश्रुतयोरेकता एकत्वं, नाम इति निपातो, निपातस्य

चानेकार्थत्वादयमर्थः-अस्त्विति, आचार्य आह-लक्षणभेदकृतं आदिशब्दात् कार्यकारणभावादिकृतं नानात्वं तयोर्बोद्धव्यं, 'तदवि-
शेषेऽपि' स्वाम्याद्यविशेषेऽपि सत्ताद्यविशेषेऽपि घटाकाशयोरिवेति, उक्तं च पूर्वाचार्यैः-'लक्खणे'त्यादि, गाथार्थः ॥९६-९७॥
किंचेह तदस्त्यस्ति यत्केनचिदन्यधर्मिसम्बन्धिना धर्मेण न तुल्यमितिय,थोक्तम्-"जत्थ मइनाणं तत्थ सुयनाणं,"मित्यादि-
वचनादैकत्वमनयोरस्त्विति, ननु तत्राप्यनन्तरं लक्षणभेदेन भेदमभिदधतोक्तं 'तहवि पुणोऽत्थायरिया नाणत्तं पण्णवयं'ति, कथमि-

त्यतः सौत्रं निधिमभिधित्सुराह—

जमभिनिबुज्झइ तमभिनियोहो जं सुणइ तं सुयं भणियं। सद्दं सुणइ जइ तओ नाणं तो नाऽऽयभावो तं ॥९८॥
सुयकारणं जओ सो सुयं च तक्कारणंति तो तम्मि। कीरइ सुओवयारो सुयं तु परमत्थओ जीवो ॥९९॥
इंदियमणोनिमित्तं जं विण्णाणं सुयाणुसारेणं। नियअत्थुत्तिसमत्थं तं भावसुयं मई सेसं ॥ १०० ॥
जइ सुयलक्खणमेयं तो न तमेगिंदियाण संभवइ। दव्वसुयाभावम्मिऽवि भावसुयं सुत्तजइणो व्व ॥ १०१ ॥
भावसुयं भासासोयलद्धिणो जुज्जए न इयरस्स। भासाभिमुहस्स जयं सोऊण व जं हवेज्जाहि ॥ १०२ ॥
जह सुहुमं भाविंदियनाणं दव्विंदियावरोहेऽवि। तह दव्वसुयाभावे भावसुयं पत्थिवाईणं ॥ १०३ ॥
एवं सव्वपसंगो न तदावरणाणमक्खओवसमा। मइसुयनाणावरणक्खओवसमओ मइसुयाइं ॥ १०४ ॥

'जमभिणी'त्यादि ॥ यद्-वस्त्वभिनिबुध्यते तथाक्षयोपशमबलादाभिमुख्येन 'तमभिनिबोध'त्ति तद्-वस्त्वभिनिबोधमभिधी-
यते, कारण एव कार्योपचाराद्, अभिनिबोधस्यात्मगुणत्वात्, तथा 'जं सुणइ तं सुयं भणियं'ति, यच्छृणोति-यदाकर्णयति तत्

श्रुतं भणितं-तत् श्रुतज्ञानमभिहितम्, एवमुक्ते पर आह-ननु 'शब्दं शृणोति' शब्दमाकर्णयति, ततः किमत आह-'जइ तओ नाणं' यद्यसौ शब्दो ज्ञानं 'तो' ततः 'नात्मभावो' नात्मपरिणामस्तत्-श्रुतं प्राप्नोति, आत्मगुणश्च तदावेदितं, किमेत्येवं चेत् शब्दस्य श्रूयमाणत्वात्, तस्य पुद्गलगुणत्वेनानात्मगुणत्वादिति चोदकगाथार्थः ॥ ९८ ॥ अत्रोच्यते-कारणे कार्योपचाराददोष इति, आह च-यतो-यस्मादसौ-शब्दो वक्त्राऽभिधीयमानः श्रुतनिमित्तं वर्त्तते, श्रोतुरिति गम्यते, तथा श्रुतं वा-भावश्रुतं वक्तृगतं तत्कारणं-बाह्यशब्दकारणं, यतः सिद्धमालोच्य व्याख्यानकरणादौ ततस्तस्मिन्-कारणे कार्ये वा शब्दे 'क्रियते' विधीयते 'श्रुतोपचारः' श्रुताध्यारोप इति न कश्चिद्दोष इति, परमार्थे त्वाह-परमार्थतः पुनः श्रुतं जीव एवेत्यात्मभावादनन्यत्वादिति गाथार्थः ॥ ९९ ॥ आह-एवमपि शृणोतीति श्रुतमात्मभावश्चेति विरुध्यते, न, कर्तृसाधनपक्षे शृणोतीति श्रुतमित्यात्मस्वभावस्तदुपयोगानन्यत्वात्, कर्मसाधनपक्षे तु प्रागुक्तः शृणोति तदिति श्रुतमिति द्रव्यश्रुतम् ॥ ९९ ॥ अथ किं तद्भावश्रुतमित्यत आह—अथवा प्रकारान्तरेणापि लक्षणभेदमभिधित्सुराह-'इन्दिये'त्यादि ॥ इन्द्रियाणि-स्पर्शनादीनि मनस्तु-अन्तःकरणं इन्द्रियं च मनश्चेति इन्द्रियमनसी ते निमित्तं यस्य तत्तथा, 'यद्विज्ञानं' यच्छब्दार्थसंवेदनं त्रिकालविषयमाविर्भवति, कथमित्यत आह-'श्रुतानुसारेणे' ति श्रुतग्रन्थानुसारेणान्तर्जल्पाकारेण शब्दोल्लेखेन शब्दार्थालोचनद्वारेण घट इत्येवं तद्भावश्रुतं, न चात्रेन्द्रियस्य व्यापारो नास्ति, श्रोत्रेन्द्रियादिनिमित्तत्वात्, केवलमनोव्यापारत्वेऽपि चाविरोधः, एतच्चैवं मूकस्यापि स्यात्, तथाऽव्यक्तध्वनिश्रवणात्, इतरस्यापि स्यात्, तथा क्रियादर्शनात्, किंविशिष्टमित्याह-निजश्चासावर्थश्चेति निजार्थः, अभिलाप्य इत्यर्थः, तस्मिन्नुक्तिः-भणनमिति निजार्थोक्तिः तस्यां समर्थं-प्रत्यलं, अत्राह-इन्द्रियनिमित्तं श्रुतानुसारेण चाविर्भवदपि किं किञ्चिद् भावश्रुतं निजार्थोक्त्यसमर्थं भवति येन व्यवच्छेदा-

मतिश्रुतलक्षणभेदः



र्थमिदं विशेषणान्तरमुच्यते इति, उच्यते–नेदं व्यवच्छेदार्थं, स्वरूपान्वाख्यानत्वात् अस्य, इत्थं ज्ञानस्य सदा निजाऽर्थोक्त्यव्यभिचारात्। यदत्रान्यत्तदुद्धरन्नाह–'मति सेसं'ति शेषं–यदिन्द्रियमनोनिमित्तं विज्ञानमप्यश्रुतानुसारेण निजार्थोक्त्यसमर्थं सा मतिः–तन्मतिज्ञानं, एतदुक्तं भवति–सामान्यार्थावग्रहादारभ्य वल्ल्यादिग्रहणवशाच्छब्दादिज्ञानं सांव्यवहारिकार्थावग्राहि च मतिः, साम्प्रतकालीनवस्तु-विषयत्वात्, यत्र शब्दमात्रापोहः सा मतिः, यत्र त्वर्थालोचना तच्छ्रुतमिति भावनेति गाथार्थः ॥ १०० ॥ चोदक आह–'जइ' इत्यादि, यदि भावश्रुतलक्षणमेतदभ्युपगम्यते, यदुक्तमनन्तरगाथायां 'तो' ततः न तद्–भावश्रुतमेकेन्द्रियाणां–पृथिव्यादीनां सम्भवति, न ह्येकेन्द्रियाणामक्षरलब्धिरस्ति येन श्रुतग्रंथानुसारिविज्ञानयोगादेते तद्वन्तः स्युः, तथा च सत्यनिष्टं 'सव्वजीवाणंपि य ण'-मित्युक्तत्वात्, उच्यते, तेषां द्रव्यश्रुतं नास्ति, कारणाभावात्, तदभावे भावश्रुतमपि मा भूदिति चेदत आह–द्रव्यश्रुताभावेऽपि च तेषां भावश्रुतमशब्दकार्यशब्दकारणं तदावरणक्षयोपशममात्रं जीवत्वनिबन्धनमस्त्येवेति शेषः, कस्येवेत्याह–सुप्तयतेरिव, यथा हि सुप्तस्य साधोः सहकारिकारणाभावेन द्रव्यश्रुतं नास्ति, तथापि लब्धिरूपं विद्यते इत्येवं तेषामपीति को दोषः ?, एतदुक्तं भवति–यथा पयसि नवनीतघृतमात्रमनुमीयते, उत्तरकालं स्पष्टीभवमानत्वात्, एवमेतेष्वप्येतद्, यथा च तत्र तयोरन्योन्यानुवेधः एवमेतेष्वप्यनयोरिति वल्ल्यादौ स्पष्टदर्शनात्, अत्राह–प्राक् श्रूयते तदिति श्रुतमित्युक्तमिह च सुप्तयतौ द्रव्यश्रुतनिषेध उक्तः, तदभावे च श्रुतोपयोगस्याप्यभाव इति, किमुच्यते–'सुत्तजइणो व्व'त्ति, उच्यते, इष्टतो विग्रहात्, तथाहि–शृणोत्यसाविति श्रुतं तेन तस्मिन् वा, यदा च यत्र च सोऽन्यो वेति, अतः क्षयोपशमस्य विवक्षितत्वादुपयोगस्य चाविवक्षितत्वात्, सुप्तयतौ च क्षयोपशमसद्भावात् सुष्ठूच्यते–'सुत्तजइणो व्व'त्ति गाथार्थः ॥१०१॥ साम्प्रतं साधितमर्थं दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यापादनेन विघटयन्नाह–'भावसुय'–

मित्यादि ॥ इह च भावश्रुतं 'युज्यते' घटते, साधोरिति गम्यते, कुतः ? इत्याह–भाषालब्धिमत्त्वात् श्रोत्रलब्धिमत्त्वाच्च, उत्थितस्य कार्यदर्शनात्, यत् यत् किंविशिष्टमित्याह–'भासाभिमुहस्स जयं भवेज्जाहि सोऊण वा सद्दं जं हवेज्जाहि' प्रस्तुतार्थयोजनां कुर्वन्नाह–'न इतरस्स'त्ति नैकेन्द्रियस्य तद् युज्यते, कार्यादर्शनात्, अतो न 'तमेगेंदियाण संभवति'त्ति गाथार्थः ॥ १०२ ॥ उच्यते-कार्यादर्शनादित्यसिद्धो हेतुः, आह च—'जहे'त्यादि ॥ 'यथा' येन प्रकारेण सूक्ष्मभावेन्द्रियज्ञानमणीयसी लब्धीन्द्रियपञ्चकावृतिक्षयोपशमोद्भवा ज्ञानशक्तिरस्ति, केषामित्याह–'पत्थिवाईणं' पृथिव्याद्येकेन्द्रियाणामित्यर्थः, कदेत्यत आह–द्रव्येन्द्रियावरोधेऽपि-निर्वृत्त्युपकरणेन्द्रियाद्यभावेऽपि, कुतः एतदिति चेत् बकुलाशोकादेः पंचेन्द्रियार्थोपभोगदर्शनात्, मतिश्चायं रूपादिविज्ञानमात्रत्वात्, दार्ष्टान्तिकोपसंहारमाह–तथा द्रव्यश्रुतस्य–निर्वृत्त्युपकरणद्वयानावृतिकल्पस्य भावश्रुतं लब्धीन्द्रियपञ्चकावृतिक्षयोपशमोद्भवशक्तिकल्पं, अत्यन्तास्पष्टाक्षरानुसारोपधानं श्रद्धातव्यं, केषां चेदन्येषामश्रुतत्वात् तेषामेव, अतः श्रुतग्रन्थाननुसरणे सत्यप्यमीषां यच्च यावच्चैतदस्ति इति नातद्वन्त इमे, न चानिष्टप्राप्तिरिति सिद्धमिति गाथार्थः ॥ १०३ ॥ अत्राह—'एव'मित्यादि, एवं–भावश्रुतवत्, 'सर्वप्रसङ्गः' अवध्यादिज्ञानप्राप्तिप्रसङ्गो, न चैतदनुपपन्नं, "पञ्चरश्याप्यनिवृत्तकेवला" इति वचनात्, उच्यते, 'न' इति नैतदेवं, किं कारणमित्याह–तदावरणानां–अवध्यादिज्ञानावरणानामक्षयोपशमादक्षयाच्च, पञ्च इत्याद्यस्य च शक्तिमात्रोपवर्णनात्, व्यतिरेकमाह–मतिश्रुते तु स्तां तदावरणक्षयोपशमसद्भावात्, 'सव्वजीवाणंपि अ णं'मित्येवमादिवचनात्, यथा जात्यन्धस्य क्षयोपशममात्रमवशिष्यते ननु सहकारिकारणमित्येवमत्रापीति गाथार्थः ॥ १०४ ॥ इतश्चानयोर्भेद इत्याह—

मइपुव्वं सुयमुत्तं न मई सुयपुव्विया विसेसोऽयं । पुव्वं पूरणपालणभावाओ जं मई तस्स ॥ १०५ ॥

मतिश्रुतयोः कार्यकारणता

पूरिज्जइ पाविज्जइ दिज्जइ वा जं मईए नामइणा। पालिज्जइ य मईए गहियं इहरा पणस्सेज्जा ॥ १०६ ॥
नाणाणऽण्णाणाणि य समकालाइं जओ मइसुयाइं। तो न सुयं मइपुव्वं मइणाणे वा सुयऽन्नाणं ॥ १०७ ॥
इह लद्धिमइसुयाइं समकालाइं न तूवओगो सिं। मइपुव्वं सुयमिह पुण सुओवओगो मइप्पभवो ॥ १०८ ॥
सोऊण जा मई भे सा सुयपुव्वत्ति तेण न विसेसो। सा दव्वसुयप्पभवा भावसुयाओ मई नत्थि ॥ १०९ ॥
कज्जतया न उ कमसो कमेण को वा मइं निवारेइ?। जं तत्थावत्थाणं चुयस्स सुत्तोवओगाओ ॥ ११० ॥
दव्वसुयं मइपुव्वं भासइ जं नाविचिंतियं केई। भावसुयस्साभावो पावइ तेसिं न य विसेसो ॥ १११ ॥
दव्वसुयं बुद्धीओ सावि तओ जमविसेसओ तम्हा। भावसुयं मइपुव्वं दव्वसुयं लक्खणं तस्स ॥ ११२ ॥
सुयविण्णाणप्पभवं दव्वसुयमियं जओ विचिंतेउं। पुव्वं पच्छा भासइ लक्खिज्जइ तेण भावसुअं ॥ ११३ ॥

'मती'त्यादि, इह मतिपूर्वं श्रुतमुक्तं, नतु विपर्यय इत्ययमनयोर्विशेषः, कार्यकारणयोः कथञ्चिद् भेदात्, तथा च 'जं मती तस्स'त्ति यद्-यस्मात् कारणात् मतिः-मतिज्ञानं तस्य-श्रुतज्ञानस्य, किम्?, अत आह-'पुव्वं'ति पूर्वं, कुतः?-'पृ पालनपूरणयोः' पूरणपालनभावादिति गाथार्थः ॥ १०५ ॥ एतदेव भावयन्नाह—'पूरिज्जती'त्यादि, यद्-यस्मात् 'मतिए'त्ति मत्या इदं, श्रुतमिति गम्यते, किं?, अत आह-'पूरिज्जइ' परावर्त्तनेन पोष्यत इत्यर्थः, तथा प्राप्यते-लभ्यते अन्यत इदं मत्यैव अन्यो वेदं प्राप्यत इति, एवं दीयते नान्यस्मै मत्यैव, नामत्या, तथा श्रोत्रा इदं गृहीतं सत् पाल्यते-परावर्त्तनादिनाऽनुसन्धीयते मत्यैव, चशब्दादीयते नेत्येवमादि, एवं नैतद्, इतरथा-अन्यथा मतिपूर्वत्वाभावे प्रणश्येत् तद्, अतः पूर्वापरभावाद् भेदोऽनयोरिति गाथार्थः ॥ १०६ ॥

मतिश्रुतयोः कार्यकारणता

अथेमं विजिघटयिषुरेतद्भावे दोषान्तरमाविष्कुर्वन् पर आह—'णाणाण'इत्यादि प्रसिद्धार्था, एतदुक्तं भवति—मतिश्रुतयोरावरणक्षयोपशमः क्रमेण वा भवेत् यौगपद्येन वा ?, यौगपद्येन चेत् श्रुतं मतिपूर्वमिति सूत्रविरोधः, समकालोत्पन्नयोः सव्येतरगोविषाणयोरिव पूर्वापरभावाभावात्, क्रमेण चेन्मतिज्ञाने श्रुताज्ञानप्रसङ्गः, 'तदुत्पत्तौ तदनुत्पत्तेः, तदनुत्पत्तौ चेतरस्याप्यनिवृत्तेः, इतरानिवृत्तिश्च क्रमपक्षादिति गाथार्थः ॥ १०७ ॥ उच्यते—ध्यान्ध्यविजृम्भितमेतद् अभिप्रायापरिज्ञानात्, तथाहि—द्विविधे ते—लब्धिरूपे चोपयोगरूपे चेति, लब्धिमङ्गीकृत्य यौगपद्यं दृष्टत्वात् सव्येतरगोविषाणयोरिव, उपयोगं त्वङ्गीकृत्य क्रमभावः तथास्वाभाव्यात्, केवलज्ञानदर्शनयोरिवेति, आह च भाष्यकारः—'इहे'त्यादि गतार्था, नवरं तथाहि—नासञ्चिन्त्य मत्या श्रुतग्रन्थानुसारि विज्ञानं प्रादुरस्तीति गाथार्थः ॥ १०८ ॥ एवं च मत्युपयोगस्यापि श्रुतपूर्वकत्वादविशेषः किलेति, आह च चोदकः—'सोऊणे'त्यादि, भावार्थं गतार्थं, आचार्य आह—'सा' मतिः 'द्रव्यश्रुतप्रभवा' कारणद्रव्यश्रुतजनिता, किं तया ?, सर्वथैतावद् ब्रूमो—भावश्रुतात् सकाशात् मतिर्नास्ति । किं सर्वथा नेत्याह—'कज्जतये'त्यादि, 'कार्यतया' फलतया निषेधोऽयं 'नतु' नैव क्रमशो निषेध इति, आजन्म श्रुतमात्रोपयोगप्रसङ्गात्, तया च श्रुतोपयोगात् क्रमेण भवन्तीं मतिं को वा निषेधति ?, न कश्चिदित्यर्थः, किं कारणमित्याह—यस्मात् कारणात् 'श्रुतोपयोगात्' श्रुतचिन्तनोपयोगात् 'चुतस्य' उपरतस्य सतः 'तत्र' तस्यां मतौ 'अवस्थानं' प्रतिष्ठा भवत्यनुभवसिद्धत्वात्, अतः 'श्रुतं मतिपूर्व' मित्यत्र सूत्रे श्रुतोपयोगोऽधिक्रियत इति स्थितमिति गाथाद्वयार्थः ॥ १०९ ॥ ११०॥ तदेवं स्थिते—'दव्वसुय'मित्यादि, 'श्रुतं मतिपूर्व' मित्यत्र केचिद् व्याचक्षते—द्रव्यश्रुतं मतिपूर्वं, न भावश्रुतं, किं कारणं ?, 'भासइ जं णाविचिंतिय'ति, मत्या अनभिचिन्त्य भाषणस्यासम्भवात्, तेषां को दोषः ? इत्यत आह—भावश्रुतस्याभावः प्राप्नोति, तेषां एवं—व्याख्यायिनां मत्यनन्तरं शब्द-

मात्रोत्थानात्, तथा च 'न विशेषो' न भेदो मतिश्रुतयोस्तेषां प्राप्नोति, भावो ज्ञानं अभावो द्रव्यश्रुतं, भावाभावयोर्भेदाभिधानस्यायुज्यमानत्वात्, "किं वा नाणेऽहिगए सद्दविहेतेण सोऽविय न जुत्तो। जं मइ तक्कारणमो सो विय मइकारणं भणिओ ॥१॥ तम्हा भावसुयं चिय मतिपुव्वं जं मतीए अचिंतेउं। नो अत्थि सुयग्गंथाणुसारि णाणंति भणियमिणं" ॥ २ ॥ ति गाथार्थः ॥ १११ ॥ तथा चाह—'दव्वसुय'मित्याद्याद्यपादत्रयमुक्तार्थं, द्रव्यश्रुतं यत् तत् परैर्मतिपूर्वकमभिधीयते, लक्षणं चिह्नं गमकमिति यावत्, तस्यास्मत्पक्षभाविनो भावश्रुतस्येति गाथार्थः ॥ ११२ ॥ कुत एतदित्यत आह—'सुयविण्णाणे'त्यादि स्पष्टार्था, अन्ते चेयं युक्तिस्तत्पूर्वकत्वात्, तत्पूर्वकत्वं च 'भासइ जं णाविचिंतिय'मित्यभिप्रायात्, तस्मादस्ति तत् श्रुतं यदस्य कारणमिति गाथार्थः ॥ ११३ ॥ अथानुपङ्क्तिं—यथैव मतिश्रुतयोः कार्यकारणभावभेदाद् भेदः, एवं मतेरपि सम्यग्मिथ्यादृष्टिकृतो भेदः श्रुतस्य चेति, उक्तञ्च सूत्रकृता 'अविसेसिया मती'त्याद्युच्चारणीयम्, एतदेवाह भाष्यकारः—

अविसेसिया मइ चिय सम्मद्दिट्ठिस्स सा मइण्णाणं। मइअन्नाणं मिच्छद्दिट्ठिस्स सुयंपि एमेव ॥११४॥

सदसदविसेसणाओ भवहेऊ जदिच्छिओवलम्भाओ। नाणफलाभावाओ मिच्छद्दिट्ठिस्स अण्णाणं ॥११५॥

'अविसेसिये'त्यादि, गतार्था, किं पुनः कारणं मिथ्यादृष्टेर्मतिश्रुतं अज्ञानं ? ननु यथा सम्यग्दृष्टिराभ्यां घटं जानीते व्यवहरति चैवमितरोऽपीत्यतः कुत एतदेवमित्यत आह—'सदसते'त्यादि, 'मिच्छद्दिट्ठिस्स अन्नाणं' मिथ्यादृष्टेर्मतिश्रुते अज्ञानं, कुत ? इत्यत आह—सदसतोरविशेषात् पुरुषप्रत्ययवत्, तथाहि—असौ सन्तमपि पुरुषे देवादिधर्मं न प्रतिपद्यते, अस्ति पुरुष एवेति प्रतिपत्तेरेकान्तवादित्वात्, तथाऽसन्तमपि पुरुषे पटादिधर्मं न प्रतिपद्यते अस्त्येवेत्यभ्युपगमादेकान्तवादित्वादेव, तथा भवहेतुत्वात् मिथ्यादर्शन-

वत्, तथा यदृच्छोपलब्धेरुन्मत्तवत्, तथा विरत्यभावेन ज्ञानफलाभावादन्धहस्तप्रदीपवत् ॥ ११५ ॥ तथा भेदभेदाद् भेद ? इत्याह—

भेयकयं च विसेसणमट्ठावीसइविहंगभेयाइं । इंदियविभागओ वा मइसुयभेयो जओऽभिहियं ॥ ११६ ॥

सोइंदिओवलद्धी होइ सुयं सेसयं तु मइनाणं । मोत्तूणं दव्वसुयं अक्खरलंभो य सेसेसु ॥ ११७ ॥

'भेद'इत्यादि ॥ भेदकृतं चानयोर्विशेषणं—नानात्वं, तथाहि—मतिज्ञानमष्टाविंशतिविधं, कथं तद् उच्यते—"छच्चउक्क चउव्वीसं चव वंजण होंति अट्ठवीसं तु । आदी उभयत्थावि य, सभेदपक्खावको नेयो ॥ १ ॥" ततश्च श्रुतमङ्गानङ्गप्रविष्टमनेकधेति गाथाऽर्द्धार्थः । 'इन्दिये'त्याद्युत्तरगाथासम्बन्ध इति गाथार्थ ॥ ११६ ॥ 'सोइंदियोवलद्धी' इत्यादि, इन्द्रो—जीवस्तस्येदमिन्द्रियं श्रुयतेऽनेनेति श्रोत्रं श्रोत्रं च तदिन्द्रियश्चेति श्रोत्रेन्द्रियं उपलम्भनमुपलब्धिः—विज्ञानं श्रोत्रेन्द्रियेणोपलब्धिरिति तृतीयासमासः श्रोत्रेन्द्रियस्य वोपलब्धिः श्रोत्रेन्द्रियोपलब्धिरिति षष्ठीसमासः श्रोत्रेन्द्रियेणोपलब्धिर्यस्य सेत्यन्यपदार्थेन शब्दः, तेनैतदुक्तं भवति—तृतीयाषष्ठीसमासाभ्यां भावश्रुतमधिक्रियते, बहुव्रीहिणा तु द्रव्यश्रुतमिति, असौ श्रोत्रेन्द्रियोपलब्धिः श्रुतं भवति, इह च व्यवच्छेदफलत्वात् सर्वं वाक्यं सावधारणकं भवति, इष्टतश्चावधारणविधिरिति न्यायः, तथा चोक्तम्—"अयोगं योगमपरैरत्यन्तायोगमेव च । व्यवच्छिनत्ति धर्मस्य, निपातो व्यतिरेचकः ॥ १ ॥ विशेषणविशेष्याभ्यां, क्रियया च सहोदितः । विवक्षातोऽप्रयोगेऽपि, तस्यार्थोऽयं प्रतीयते ॥ २ ॥ व्यवच्छेदफलं वाक्यं, यथा चैत्रो धनुर्धरः । पार्थो धनुर्धरो नीलं, सरोजमिति वा यथा ॥ ३ ॥" तदिहैवमवधारणमवगन्तव्यं—श्रुतं श्रोत्रेन्द्रियोपलब्धिरेव अश्रोत्रेन्द्रियोपलब्धिर्न भवतीत्ययोगमेव व्यवच्छिनत्ति, श्रोत्रेन्द्रियोपलब्धिस्तु श्रुतं मतिर्वा, तद्यथा—चैत्रो धनुर्धर एवाधनुर्धरो न भवति, धनुर्धरस्तु चैत्रः कुसुमायुधो वेति प्रथमपादव्याख्येयमिति । 'सेसयं तु मइनाणं'ति शेषं यच्चक्षुरिन्द्रि-

भेदकृतो मतिश्रुतयो र्भेदः ॥ ५२ ॥

यदिचतुष्टयोपलब्धिरूपं विज्ञानं तन्मतिज्ञानं भवतीति वर्त्तते, तुशब्दो विशेषणार्थः, तेनैतदुक्तं भवति–श्रोत्रेन्द्रियोपलब्धिरपि काचिन्मतिज्ञानं भवति, तस्यामप्यवग्रहादिसद्भावात्, आह–एवं श्रोत्रेन्द्रियोपलब्धेः श्रुतमतिरूपत्वात्, यदुक्तं भवति सा श्रुतज्ञानं तदुक्तं भवति सा मतिज्ञानं, यदुक्तं भवति सा मतिज्ञानं तदुक्तं भवति सा श्रुतज्ञानमिति तदिदं शान्तिकं कुर्वतां वैतालोत्थानं, नन्वेवमनयोरभेद एव सिद्ध्यतीत्यभिप्रायः, तन्न, श्रोत्रेन्द्रियोपलब्ध्यावग्रहेहापायमात्रस्य मतित्वात्, श्रुतग्रन्थानुसारितया शब्दार्थज्ञानस्य श्रुतत्वात्, शब्ददर्दरेणास्य त्वद्वचसोऽपकर्णनीयत्वात् मुग्धजनविस्मयाधायित्वादिति । अत्र च प्रथमपादे तुशब्दौ श्रुतमत्यभिधायिनौ श्रोत्रेन्द्रियोपलब्धेरिति भावनीयं, अयं तु द्वितीयपादाक्षरार्थः । तदेवं सर्वस्याः शेषेन्द्रियोपलब्धेर्मतिज्ञानत्वे उत्सर्गेण प्राप्ते सत्यपवाद-माह–'मुत्त्वा द्रव्यश्रुतं' मुक्त्वा पुस्तकपत्रकन्यस्ताक्षरविषयां शेषेन्द्रियोपलब्धिं, तस्याः शब्दत्वेन श्रुतत्वात्, शेषं मतिज्ञानं वर्त्तते, इति तृतीयपादाक्षरार्थः । तथा यश्चाक्षरलाभः,असावपि यः श्रुताक्षरलाभो, नेतरः, मतेरपि कथञ्चिदक्षररूपत्वात्,केषु ? इत्याह–शेषेषु चक्षुरा-दीन्द्रियेषु,कथं ?–'सीता साडी दीहं च तण' मित्येवं यो भवति,स च श्रुतं भवतीति वर्त्तते,योग्यत्वादित्यभिप्रायः,अन्यथा 'मोत्तूणं दव्व-सुयं, अक्खरलंभं च सेसेसु मोत्तूण'या श्रोत्रेन्द्रियोपलब्धिः सा श्रुतं स्यात्, सैव केवला आद्या श्रुतं स्यादित्यर्थः, तथा विशेषेन्द्रिया-क्षरलाभस्य श्रुतत्वं न लभ्येत, न चैतदिष्टमिष्टत्वात्तस्य, यद्येवं शेषेन्द्रियाक्षरलाभोऽपि श्रुतमतो यदादाववधारणं कृतं श्रुतं श्रोत्रेन्द्रि-योपलब्धिरेवेति, तन्न घटां प्राञ्चति, शेषेन्द्रियाक्षरलाभस्याश्रोत्रेन्द्रियोपलब्धित्वात्, उच्यते, प्राञ्चति, तस्यापि श्रोत्रेन्द्रियोपल-ब्धिरूपत्वात्, यदा च यत्र च तस्यान्यस्य वा श्रव्यत्वेनाभिलापविषयत्वादिति पूर्वगतगाथाक्षरार्थः ॥ ११७ ॥ साम्प्रतमेवम-श्रुतव्याख्यानः परश्चोदयिपुराह —

सोओवलद्धी जइ सुयं न नाम सोउग्गहादओ वुद्धी। अह वुद्धी तो न सुयं अहोभयं संकरो नाम ॥ ११८॥
केई वेन्तस्स सुयं सद्दो सुणओ मइत्ति, तं न भवे। जं सव्वो च्चिय सद्दो दव्वसुयं तस्स को भेयो ? ॥११९॥
किं वा नाणेऽहिगए सद्देणं जइ य सद्दविन्नाणं। गहियं तो को भेयो भणओ सुणओ व जो तस्स ? ॥१२०॥
भणओ सुणओ व सुयं तं जमिह सुयाणुसारि विण्णाणं। दोण्हंपि सुयाईयं जं विन्नाणं तयं वुद्धी ॥१२१॥
सोइंदिओवलद्धी चेव सुयं न उ तई सुयं चेव। सोइंदिओवलद्धीवि काइ जम्हा मइन्नाणं ॥ १२२ ॥
तुसमुचयधयणाओ काई सोइन्दिओवलद्धीयि। मइरेवं सइ सोउग्गहादओ हुन्ति मइभेया ॥ १२३ ॥
पत्ताइगयं सुयकारणंति सद्दो व्व तेण दव्वसुयं। भावसुयमक्खराणं लाभो सेसं मइन्नाणं ॥ १२४ ॥
जइ सुयमक्खरलाभो न नाम सोओवलद्धिरेव सुयं। सोओवलद्धिरेवऽक्खराइं सुइसंभवाउत्ति ॥ १२५ ॥
सोऽवि य सुयक्खराणं जो लाभो तं सुयं मई सेसा। जइ वा अणक्खरच्चिय सा सव्वा,न प्पवत्तेज्जा ॥१२६॥

'सोओवलद्धी' त्यादि, यदि श्रोत्रेन्द्रियोपलब्धिः श्रुतं ततो न नामेति–नैव श्रोत्रेन्द्रियावग्रहादयो बुद्धिः, तेषां श्रोत्रेन्द्रियोपलब्धित्वात्, तस्याश्च श्रुतत्वेनैवावधार्यमाणत्वात्, तथा–'सोओवलद्धी जइ सुयं न नाम मइ अट्ठवीसभेया तु' श्रोत्रेन्द्रियोपलब्धिः श्रुतमेवेत्यवधारणात्, 'अह वुद्धि' त्ति अथ बुद्धिः श्रोत्रेन्द्रियावग्रहादयः मतेरष्टाविंशतिभेदभिन्नत्वात् 'तो' ततः न श्रोत्रेन्द्रियोपलब्धिः श्रुतमेव, तस्या मतित्वादपि, अथोभयं सा श्रुतं मतिश्चेति ततः संकरो नाम सङ्कीर्णमेव तर्हि तयोः स्वरूपं स्यात्,न चेत्सङ्करोऽभ्युपगम्यते तदेकत्वं तयोरिति घोटारूढस्य विस्मृतो घोट इति गाथार्थः ॥ ११८ ॥ अत्र केचन आचार्यदेशीयाः प्रौढवादितया

श्रोत्रेन्द्रियोपलब्धेर्यद्गुत्रीह्यङ्गीकरणैकल्पपरिहारतो द्वित्वमुक्तवन्तस्तन्मतमुपन्यस्यन्नाह–'केयी'त्यादि ॥ केचन व्याख्यानयन्ति–प्रज्ञापकस्य ब्रुवतः सतः शब्दः श्रोत्रेन्द्रियोपलब्धिलक्षणः 'सुयं'त्ति श्रुतं भवति, तमेव शब्दं 'सुणओ' शृण्वतः श्रोतुर्मतिरित्यत एवमसौ क्लिोभय इति सिद्धं, आह–शोभनमेवैतत् कालपूर्वपक्षतेत्यत आह–'तन्न भवे'त्ति तदेतन्न भवति, किं वाङ्मात्रेण ?, न इत्याह–यद् यस्मात् सर्वः शब्दो भाष्यमाणः श्रूयमाणश्च द्रव्यश्रुतं वर्त्तते, अतस्तस्य 'को भेदः ?' को विशेषो येनासौ वक्तारि श्रुतं श्रोतरि तु मतिरिति ?, न कश्चिदिति गाथार्थः ॥११९॥ 'किंचे'त्यादि ॥ अथवा ज्ञानयोर्भेदाभिधानप्रक्रमे किं शब्देन ?, न किञ्चिदित्यभिप्रायः, तस्य पुद्गलमयत्वात्, तत्रैतत्स्यात् न श्रोत्रेन्द्रियोपलब्धिः शब्द एव व्युत्पाद्यतेऽपि तु ज्ञाने अपि तृतीयाषष्ठीसमाससम्भवात्, ततश्च श्रोत्रेन्द्रियोपलब्धिः शब्दज्ञानमागृह्यत इत्यत आह–यदि चानेकव्युत्पत्तिसम्भवाच्छब्दज्ञानं गृह्यते द्वित्वप्रसाधनार्थं श्रोत्रेन्द्रियोपलब्धिशब्देनेति, एतदुक्तं भवति–यदि वक्तुः शब्दज्ञानं श्रुतमितरस्य तु मतिरिति गृहीतं 'तो' ततस्तस्येति शब्दज्ञानस्य भावश्रुतलक्षणस्य ब्रुवतः शृण्वतो वा यो विशेषो–यो भेदः स कः ?, येनानयोर्वक्तृश्रोत्रोस्तन्मतिश्रुते स्याताम्, अपि च–यद्येवमभ्युगम्य परिहारो दीयते ततः श्रोतुरपि श्रुत्यनन्तरमव्यवधानेन ब्रुवतः सैव शब्दोत्थापिता मतिरविशिष्टा श्रुतं प्रसजति 'सुणतो मतित्ति भणतो सुतं'त्यभ्युपगमात्, तस्य च श्रवणानन्तरमेव वक्तृत्वसम्भवादित्येकत्वं मतिश्रुतयोरिति कोऽतिशयः कृतः स्यात् ?, यदि च सर्वदैव शृण्वतो मतिः–मतिरेव ततः 'आचार्यपारम्पर्येणेदं श्रुतमायात'मिति न वक्तव्यं, सर्वैः श्रुतत्वात्, तस्मान्न पुष्कलोऽयं परिहार इति गाथार्थः ॥१२०॥ अधुनैतत्प्रकरणोपसंहारव्याजेन परमेव व्युत्पादयन्नुभयस्यापि चोमयमभिधित्सुराह–तस्मात्–'भणत' इत्यादि ॥ तस्मात् भणतो यत् श्रुतग्रन्थानुसारि ज्ञानं तत् श्रुतमेव श्रोतुरपि, एवं द्वयोरपि यत् श्रुतातीतं विज्ञानं सा मतिरिति सिद्धान्ताभिप्राय इति गाथार्थः ॥१२१॥

कः पुनरत्र पुष्कलपरिहार इत्यतोऽधुना भाष्यकारो मूलगाथां विविवरीषुराह–'सोतिंदियोवलद्धी' त्यादि ॥ 'सोइंदिओवलद्धी'-त्यादि, सुयं सोइंदियोवलद्धी चेव, नउ सा सोतिंदिओवलद्धी सुयं चेव, कुतः ? इत्याह–पच्छद्धं, स्पष्टार्थमिति गाथार्थः ॥१२२॥ 'तुसमुच्चये'त्यादि भावितार्थैवेति न व्याख्याता ॥ १२३ ॥ 'पत्तादी'त्यादि पूर्वार्धं कथितार्थं " भावसुयं तु अक्खराणं सद्दत्थरूवाणं लाभो, सेसं जं आरओ होइ सद्दरूवरसगंधफासाववोहमेत्तं तं मतिनाणं"ति गाथार्थः ॥१२४॥ आह–'जती'त्यादि ॥ जइ सुयमक्खरलाभो सेसिंदियसंबन्धी शब्दार्थरूप इत्यर्थः, तो ण णाम सोतोवलद्धिरेव सुयं'अस्याप्यधिकृतस्य श्रुतत्वात्, उच्यते, शब्दार्थरूपाणामक्षराणि 'सोतोवलद्धिरेव' श्रुतिसम्भवादिति गाथार्थः ॥ १२५ ॥ किं यावान् शेषेन्द्रियाक्षरलाभः स सर्वं श्रुतं ?, नेत्याह—'सोऽवि ए'त्यादि ॥ असावपि च शेषेन्द्रियाक्षरलाभो यः श्रुताक्षराणां तच्छ्रुतं, अश्रुताक्षरलाभस्तु मतिरेव, 'जइव'त्ति अथ चेन्मतिरेकान्ततोऽनक्षरैव ततश्च सा मतिः सर्वा न प्रवर्तेत ईहोपायधारणारूपेण, तस्या अक्षरात्मकत्वात्, यदीयमनक्षरैव स्यादवग्रहमात्रमेव स्यादिति गाथार्थः ॥ १२६ ॥ एवं तावदनया गाथया श्रुतस्य मतेर्भेद उक्तोऽधुना श्रुतस्यैव प्रसङ्गतः स्वरूपमभिदधत्पूर्वगतगाथाया एव सम्बन्धगाथामाह—

दव्वसुयं भावसुयं उभयं वा किं कहं व होज्जत्ति । को वा भावसुयंसो दव्वाइसुयं परिणमेज्जा ? ॥ १२७ ॥
बुद्धिद्दिट्ठे अत्थे जे भासइ तं सुयं मईसहियं । इयरत्थऽवि होज्ज सुयं उवलद्धिसमं जइ भणेज्जा ॥ १२८ ॥
जे सुयबुद्धिद्दिट्ठे सुयमइसहिओ पभासई भावे । तं उभयसुयं भन्नइ दव्वसुयं जे अणुवउत्तो ॥ १२९ ॥
इयरत्थवि भावसुए होज्ज तयं तस्समं जइ भणेज्जा । न य तरइ तत्तियं सो जमणेगगुणं तयं तत्तो ॥१३०॥

मइ उवलद्धीए वा उवलद्धिसमं तया व जं तुल्लं। जं तस्समकालं वा न सव्वहा तरइ वोत्तुं जे ॥ १३१ ॥
केई बुद्धिद्दिट्ठे मइसहिए भासओ सुयं तत्थ। किं मओ मइरूमयं भावसुयं ? सव्वहाऽजुत्तं ॥ १३२ ॥
मओ ता दव्वसुयं मइरामिणिबोहियं न वा उभयं। जुत्तं उभयाभावे भावसुयं कत्थ? तं किं वा? ॥ १३३ ॥
भासापरिणइकाले मई? किमहियमहऽण्णत्तं वा?। भासासंरूप्पविसेसमेत्तओ वा सुयमजुत्तं ॥ १३४ ॥
इयरत्थवि मइनाणे होज्ज सुयंति किह तं सुयं होइ?। किह व सुयं होइ मई मलरयणावरणभेयाओ ॥१३५॥
अह मई दव्वसुयत्तमेउ भावेण मा विरुज्झेज्जा। जो असुयरूवरलाभो तं मइसहिओ पभासेज्जा ॥१३६॥
इयरम्मिवि मइनाणे होज्ज तयं तस्समं जइ भणेज्जा। न य तरइ तत्तियं सो जमणेगगुणं तयं तत्तो ॥१३७॥
किह मइसुओलद्धा तीरंति न भासिउं बहुत्ताओ। सव्वेण जीविएणवि भासइ जमणंतभागं सो ॥ १३८ ॥
तीरन्ति न वोत्तुं जे सुओवलद्धा बहुत्तभावाओ। सेसोवलद्धभावा सामत्थबहुत्तओऽभिहिया ॥ १३९ ॥

'दव्वसुय' मित्यादि गाथा सष्टार्था। एतदुक्तं भवति-एतस्यां गाथायां 'मोत्तूणं दव्वसुय'न्ति वचनादनेनानयनेन द्रव्यश्रुतमुक्तम्, अक्षरलाभरचनात्तु भावश्रुतं, श्रोत्रेन्द्रियोपलब्धिरचनात्तु शब्दलब्धिज्ञानं चेत्युभयश्रुतमित्यतः पृच्छति, किं? कथं चेति? किमात् वा भावश्रुताद् द्रव्यश्रुतं? आदिशब्दादुभयश्रुतं वा परिणमेतेति सम्बन्ध इति गाथार्थः ॥ १२७ ॥ अत्रोच्यते-इह हि श्रुतज्ञानी उपयुक्तः श्रुतबुद्ध्याऽर्थान् विजानातीति, ततश्च-'बुद्धिद्दिट्ठे'त्यादि, बुद्धिः-श्रुतबुद्धिः श्रुतमतिरित्यर्थः दृष्टा-उपलब्धाः पर्यालोचिता विपरीक्षिता इतियावत् बुद्ध्या दृष्टा बुद्धिदृष्टास्तान्, कानित्याह-अर्थान्, अभिलाप्यान् भावानितियावत्, एतदुक्तं भवति-अभिलाप्यान् भा-

यान् मनसि स्फुरतः सतो 'यान् भापते' यान् वक्ति तन्मतिसहित एवेति वाक्यशेषः, 'तं सुतं'ति तत् श्रुतमभिधीयते, कुतः पुनरयं वाक्यशेषो लभ्यत इति चेत्, नन्वाचार्यवचनाद्, आह च-'मतिसहियं'ति श्रुतं मतिसहितमुभयश्रुतमित्यर्थः, एतच्चोपयुक्तस्यैव, एवं तावदेतत्, यान् पुनः प्राक् श्रुतबुद्ध्याऽऽलोचितानपि पश्चादभ्यासवलादनुपयुक्तो वक्ति तद् द्रव्यश्रुतम्, याँस्त्वालोचयत्येव केवलं नतु भापते तद् भावश्रुतम्, एतच्च द्वयमर्थाल्लभ्यते, अत्र च भावश्रुतस्य उपयुक्तस्य अनुपयुक्तस्य वा वक्तुरनन्ततमो भागो द्रव्योभयश्रुतत्वेन परिणमति, 'सव्वेण आउएणवि न पहुप्पइ जेण कालो से'त्ति वचनादिति पूर्वार्द्धार्थः। अथ 'इतरत्थवी'त्यादि पच्छर्द्धं, कोऽस्याभिसम्बन्धः ?, उच्यते, यानुपयुक्तोऽनुपयुक्तश्च भापते तदुभयं च श्रुतं चोक्तेः, इतरदिति भावश्रुतं गम्यते, तत्र च सम्भवतीयमाशङ्का-कस्मादत्राप्येतद् द्वयं न भवतीत्याह-इतरत्रापि-भावश्रुते उक्तलक्षणे इतरस्यापीत्यर्थाद् विभक्तिपरिणामः आधाराधेययोर्भेदोपचाराद्वा 'होज्ज' स्यात् श्रुतं द्रव्यश्रुतमुभयश्रुतं वा, यदि किं स्यादित्याह-उपलम्भनमुपलब्धिः-श्रुतबुद्ध्यालोचितार्थविपयसंवेदनं 'तया समं' तया सह, एतदुक्तं भवति-तत्संवेदनमेवात्मप्रदेशेभ्य उन्मूल्य ध्वनिना सह यदि संक्रामयेत्-उपयुक्तोऽनुपयुक्तो वा भणेत्, उपयुक्तिपरिमाणं वा-उपलब्धिसमकालं वा, यदैवोपलभते तदैव यदि भापेतेत्यर्थः ॥ १२८ ॥ सर्वथा यावन्मानमुपलभते न तावदुपयुक्तोऽनुपयुक्तो वा वक्तुं शक्नोति, उपलब्धेर्बहुत्वात् परिमितत्वाच्चायुपः क्रमवर्त्तित्वाच्च वाचः "उक्कंइयोवइताइं करेइ चोद्दसवि जेण पुव्वाइं। अंतमुहुत्तेण च्चिय, सयपज्जाएहिं पुव्वधरो ॥१॥"त्ति गाथार्थः ॥१२७॥ एनां च गाथां मतिश्रुतयोर्भेदः प्रक्रान्त इति तदर्थ एव केचन व्याचक्षते, वयं तु तथाऽपि वक्ष्याम इति। तत्र तावदभिहितार्थानुसारेणैतास्तिस्रो भाष्यगाथाः-'जे सुय' इत्यादि। 'इयरत्थवी'त्यादि। 'सह' इत्यादि। उक्तार्थाः, नवरं 'तया व जं तुल्लं'ति, यथा शूलं वेदयंस्तदेवाभिधत्त इति भाव-

नीयं । अथ कथमन्ये एनां गाथां मतिश्रुतभेदार्थं व्याख्यानयन्ति ? तदुच्यते–'बुद्धीदिट्ठे' त्यादि, अस्या व्याख्यानान्तरम्, इह बुद्धिः–आभिनिबोधिकबुद्धिरभिक्रियते तया दृष्टाः–चिन्तितास्तानर्थान् भाषते बुद्धिसहित एवेति वाक्यशेषः, 'तं सुयं'ति तच्छ्रुतमभिधीयते, किंविशिष्टम् ? इत्याह–'मतिसहियं' आभिनिबोधिकसहितमित्यभिप्रायः, एतत्किल श्रुतज्ञानमनुपयुक्तस्य द्रव्यश्रुतमिति भावना, पारिशेष्यादितरत् मतिज्ञानम्–आलोचिताभिलाप्यपदार्थपर्यालोचनमात्ररूपमिति पूर्वार्द्धार्थः । अत्राह–अत्रापि कस्मादिदं न भवतीति, उच्यते, 'इतरत्थऽवी'त्यादि पश्चार्द्धं, इतरत्राप्युक्तलक्षणे मतिज्ञाने 'होज्ज सुयं' भवेत् श्रुतं मतिज्ञानोपयोगसंवलितं, यदि किं स्यादित्याह–उपलब्धिसमं यदि भवेदिति प्राग्वदिति गाथार्थः ॥ १२९–१३०–१३१ ॥ अत्र व्याख्याने भावश्रुताभावं दर्शयन् मतौ च श्रुतभणने विरोधमुद्भावयन् भाष्यकार आह–'केई बुद्धीदिट्ठे' इत्यादि । केचनानुभववादिनो व्याचक्षते–बुद्धिदृष्टान्–आभिनिबोधिकज्ञानाभोगितान् प्राक् पुनर्मतिसहितान् भाषते तदुपयुक्तस्य ब्रुवतः श्रुतं भवति, श्रुतज्ञानमित्यर्थः, पूर्वपक्षानुवादः, अत्रोच्यते–'सत्थ'त्ति तत्रैवं कल्पनायां न विद्मः कतमद्भावश्रुतं ?, तथाहि–किं शब्दो भाष्यमाणः किं वा तत्प्रेरिका मतिराहोश्विदुभयमिति त्रयी कल्पना, किंचातः–'भावसुयं सव्वहा अजुत्त'मिति गाथार्थः ॥ १३२ ॥ तथाहि–'सद्दो' इत्यादि । शब्दस्तावद् द्रव्यश्रुतमभिधानात् मतिस्त्वाभिनिबोधिकं सुप्रसिद्धत्वात्, इतरेतरसापेक्षमुभयं तदिति चेत्, उच्यते, न चोभयं युक्तं, तत्त्वेन उभयस्याप्युभयस्वभावत्वेनाविशेषात्, अत उभयस्य स्वतंत्रस्यास्वतन्त्रस्य वा अभावे भावश्रुतत्वेन तद् भावश्रुतं, क्व शब्दादौ ? किं वा तत् ?, न किंचिदिति गाथार्थः ॥ १३३ ॥ तत्रैतत् स्याद्–मतेर्भाषासंकल्पनापरिणामतः श्रुतत्वे नायमुपालम्भ इत्यत आह–'भासा' इत्यादि । 'मतेः' अन्तर्ज्ञानविशेषस्य 'भाषापरिणतिकाले' भाषाप्रारम्भवेलायां 'किमधिकं' पूर्वावस्थाया रूपं जायते येनासौ ज्ञानान्तरं स्यात्, 'अथान्य-

थात्वं वे'ति निर्मूलतो वाऽन्यथात्वं किं भाषापरिणतिकाले मतेरिति वर्त्तते ?, न किंचिदिति गाथार्द्धार्थः । अपिच–भाष्यत इति भाषा तस्याः–संकल्पविशेषः–आरम्भविशेषः स एव तन्मात्रं, मात्रशब्दो मनागपि विकारभवनप्रतिषेधार्थः, ततः श्रुतमयुक्तं सा, एदुत्तक्तं भवति–अन्तरविज्ञानस्यैकत्वेनाविशिष्टस्य बाह्यक्रियाभेदेऽपि नान्यथात्वं भवितुमर्हति, अत्यन्तजातिभेदाभावात्, अत्यन्तजातिभेदाभ्युपगमे च धावनवल्गनास्फोटनादिविधानत आनन्त्यं मतेः स्यात्, एवं तावद् भावश्रुताभावाख्यानेन पूर्वार्धे व्याख्यातं दूषितञ्च, अथ यदाह पश्चादर्धे मतिज्ञानमेव सम्बन्धयन्तः पूर्वपक्षं कृत्वा–'इतरत्रापि' मतिज्ञाने 'होज्ज सुयंती' त्येवमादि तदर्थव्यं प्रत्यनुभाष्य विरोधमुद्भावयन्नाह–'इयरत्थवी' त्यादि। 'इयरत्थवि मइनाणे होज्ज सुयं'ति यदुक्तं तत्रोच्यते–ननु कथं तन्मतिज्ञानं श्रुतं भवति ?, नैवेत्यभिप्रायः, मतिस्तद् भविष्यतीत्याह–कथं वा मतिः श्रुतं भवति ?, नैवेत्यभिप्रायः, कुत एतदित्याह–स्वलक्षणभेदादावरणभेदाच्चेति तस्माद्व्याख्यातमेव ज्याय इति गाथार्थः ॥ १३५ ॥ अथ मद्व्याख्याने नास्ति भवतः कथञ्चित्परितोष इत्यत इयमेव गाथा श्रुतज्ञानाभिलापं मुक्त्वा द्रव्यश्रुतवाग्योगमात्राध्यारोपं च कृत्वाऽन्यथा व्याख्यायतां न दोषोऽविरोधात्, तद्यथा–'बुद्धिद्दिट्ठे अत्थे जे भासइ तं सुयं मतीसहियं। आभिणिबोहिउवउत्तस्स इतरंति–मतिनाणं, तत्थवि होज्ज दव्वसुय" मित्यादि, प्राग्वदिति गाथार्थः। एतदेव व्याचिख्यासुराह–'अहव मती' त्यादि । अथवा मतिः द्रव्यश्रुतत्वमेतु, कारणत्वात्, आह–यद्येवं भावश्रुतत्वमपि तद्वतु, तन्न, यतो 'भावेन' भावश्रुतत्वेन 'सा' मतिः 'विरुध्येत' व्याहन्येत, उक्तवत्–"भावसुयामात्राओ संकराओ णिव्विसेसभावाओ । पुव्वुत्तलक्खणाओ सलक्खणावरणभेयाओ ॥१॥"त्ति वचनाच्च, यद्येवं भावश्रुतत्ववत् द्रव्यश्रुतत्त्वमपि तर्ह्यसौ मैतु, उच्यते, किं रुष्यसि ?, नहि क्रोधो विक्रीयमाणः काकणिमपि लभते, ननु उपशम्यतां, 'जो असुयक्खरलाभो तं मतिसहिओ' तदयुक्तः यत प्रस्तावेनात्र

उक्तम्–'अहव मती दव्वसुयत्तमेउ'त्ति गाथार्थः ॥१२६॥ पश्चार्धव्याख्यामाह–'इतरंमिवि'इत्यादि,इतरत्रापि–मतिज्ञाने भवेत्तद्–द्रव्यश्रुतं यदुपलब्धिसमं भणेद्,वाग्योगेनेति गम्यते, 'नचे'त्यादि प्राग्वत्,तस्मादियं गाथा न श्रुतमङ्गीकृत्य व्याख्येया,भावश्रुताभावप्रसङ्गात्, यद्येवं व्याख्यायमाने विशिष्यते मतिद्रव्यश्रुतलक्षणं तदङ्गीकृत्य व्याख्येयेति न कश्चिद्दोष इति प्रकरणार्थ इति गाथार्थः ॥१२७॥ एवमुक्ते सत्याह–'किहे'त्यादि, कथं मतिश्रुतेन चोपलब्धाः शक्यन्ते न भाषितुमिति, उच्यते, 'बहुत्वाद्' भूयस्त्वात्, न च गतार्थो हेतुर्विशेषाभिधानात्, सामान्येन च तावदयमधिक्रियते इति, तत्रैतत्स्याद्–बह्वप्यभिधातुं शक्यत एव, उच्यते, सत्यं, किं त्विह 'सव्वेणावि जीविएण सो णाणी अणंतभागं चेव जम्हा भासइ तम्हा भण्णइ बहुत्ताउ'त्ति गाथार्थः ॥ १२८ ॥ साम्प्रतमुपन्यस्तहेतोरवसरतः विशेषप्रतिभागमाह–'तीरंती'त्यादि ॥ सर्वे श्रुतोपलब्धा भावाः पार्यन्ते न वक्तुं, कुतः ? इत्याह–'बहुत्वभावात्' बहुत्वादेवेत्यवधारणीयं, न तु तत्स्वाभाव्यादित्यभिप्रायः, तथा 'सेसोवलद्धभावा साभव्व'त्ति शेषं उपयुक्तादन्यन्मतिज्ञानं मत्यवधिमनःपर्यायकेवलानि वा तैरुपलब्धाः शेषोपलब्धाश्च ते भावाश्चेति समासः ते तु तत्स्वाभाव्यात् अनभिलाप्यस्वाभाव्यात् 'तीरंति न वोत्तुं जे' इति वर्तते, आह–इमे बहुत्वादपि न शक्यन्तेऽभिधातुमिति किमेकमेव कारणं नोच्यते ? इति, उच्यते,अनभिलाप्यस्वाभाव्ये सति बहुत्वस्याप्रयोजकत्वाद्,बहोरपि द्राघीयसा कालेनान्तदर्शनात्,तथा चाह–'बहुत्तओ जहा भासिउं न तीरन्ति' तथोक्ताः शेषोपलब्धभावाः 'बहुत्ताओ'त्ति वचनात् मतेः शेषोपलक्षणत्वाच्छेषाणामपि चेहार्थगतिप्रापणे विवक्ष्यमाणत्वात्, पुनरप्याह–मत्याद्युपलब्धानामपि केषाञ्चिदनभिलाप्यत्वात्, किमुच्यते 'सेसोवलद्धभावा साभव्व'त्ति ?, उच्यते,अमीषां तु श्रुतविषयेणैवाक्षिप्ततयाऽभिधानशक्यतया समनुज्ञातत्वाद्, एतदुक्तं भवति–तेऽवग्रहादितया सम्प्रज्ञायमाना मतिः अक्षरोल्लेखेन तु श्रुतमिति गाथार्थः ॥ १२९ ॥ आह–

कत्तो एत्तियमेत्ता भावसुयमईण पज्जया जेसिं । भासइ अणंतभागं ? भण्णइ जम्हा सुएऽभिहियं ॥१४०॥
पण्णवणिज्जा भावा अणंतभागो उ अणभिलप्पाणं । पण्णवणिज्जाणं पुण अणंतभागो सुयनिबद्धो ॥१४१॥
जं चोद्दसपुव्वधरा छट्ठाणगया परोप्परं होन्ति । तेण उ अणंतभागो पण्णवणिज्जाण जं सुत्तं ॥ १४२ ॥
अक्खरलंभेण समा ऊणहिया होंति मईविसेसेहिं । तेऽवि य मईविसेसे सुयनाणऽभंतरे जाण ॥१४३॥
जे अक्खराणुसारेण मईविसेसा तयं सुयं सव्वं । जे उण सुयनिरवेक्खा सुद्धं चिय तं मईनाणं ॥१४४॥
केइ अभासिज्जन्ता सुयमणुसरओऽवि जे मईविसेसा । मन्नंति ते मइच्चिय भावसुयाभावओ तन्नो ॥१४५॥
किह मइसुयनाणविऊ छट्ठाणगया परोप्परं होज्जा ? । भासिज्जंतं मोत्तुं जइ सव्वं सेसयं बुद्धी ॥१४६॥

'कत्तो'इत्यादि ॥ कुत एतावन्तो भावश्रुतमत्योः पर्यायाः–उपलब्धार्थविशेषविशेषाः येषां सर्वेषाप्यायुपाऽनन्तभागमात्रं 'भाषत इति ?, भवति यस्मात् श्रुते भणितमिति गाथार्थः ॥ १४० ॥ 'पन्नवणिज्जा'इत्यादि ॥ प्रज्ञाप्यन्त इति प्रज्ञापनीयाः, वचनपर्यायत्वेन श्रुतज्ञानगोचरा इत्यर्थः, के ?,. भावाः–ऊर्ध्वाधस्तिर्यग्लोकनिविष्टभूभवनविमानग्रहनक्षत्रतारकार्केन्द्रादयः; किमत आह–अनन्तभाग एव वर्तन्ते, न सङ्ख्येयभागे नाप्यसङ्ख्येयभाग इति, केषामित्याह–अनभिलाप्यानां, अर्थपर्यायत्वेन मत्यवधिमनःपर्यायगोचराणामित्यर्थः, अनभिलाप्यवस्तुराशेरभिलाप्यवस्तुराशिरनन्तभागे वर्त्तत इति भावः, पुनश्च प्रज्ञापनीयानां द्रव्याणामनन्तभागं अनन्तभागमात्रं श्रुतनिबद्धः–चतुर्दशसु पूर्वेषु साक्षाद् ग्रथितो भगवद्भिर्गणधरैरिति गाथार्थः ॥ १४१ ॥ कुतः प्रत्ययः ? इत्यत आह–'ज'मित्यादि ॥ यद्–यस्मात् चतुर्दशपूर्वधराः षट्स्थानपतिताः परस्परं भवन्ति, न्यूनाधिक्येनेति शेषः, तथाहि–सकलाभिलाप्यवस्तु-

वेदितयोत्कृष्टचतुर्दशपूर्वविदः प्रतियोगी उक्तः, "अणंतभागहीणे वा असंखेज्जभागहीणे वा संखेज्जभागहीणे वा संखेज्जगुणहीणे वा असंखेज्जगुणहीणे वा अणंतगुणहीणे वा एवं अब्भहियेऽवि' अतो येन कारणेनैवं तेन यत्सूत्रं–चतुर्दशपूर्वलक्षणं तत्प्रज्ञापनीयानामनन्तभाग एवेति स्थितमिति गाथार्थः ॥ १४२ ॥ आह–केवलिनामिवामीषामयं तारतम्यकृतो विशेषो न युक्तः, युक्तश्चेदुच्यतां कारणमित्यत आह–'अक्खरे'त्यादि ॥ 'अक्षरलाभेन' चतुर्दशपूर्वसूत्रलक्षणेन 'समाः'तुल्याः, चतुर्दशपूर्वधरत्वात्, कैस्तु न समा इत्याह–न्यूनाधिका भवन्ति उक्तवत् 'मतिविशेषैः'अक्षरलाभगतबुद्धिविकल्पैः, तैस्तैर्व्याख्यानकरणैरित्यर्थः, क्षयोपशमवैचित्र्यात्, केवलिनां त्वविशेषः क्षायिकत्वात्, इह च मतिविशेषग्रहणादाभिनिबोधिकविशेषास्ते मा भूवन्नित्यतो विशेष्यते–तानपि च मतिविशेषान् तन्न्यूनाधिक्यनिबन्धनान् गम्यान् श्रुतज्ञानान्तर्भाविन एव 'जानीहि' विद्धि, यद्येवं 'तेऽवि य मतिविसेसे सुयणाणं चेवे'त्येवमेव प्रगुणमस्तु, तन्न, अस्यापि न्यायस्य दृष्टत्वादङ्गादिव्यपदेशवत्, यथा ह्यङ्गमेवाङ्गाभ्यन्तरमेवं श्रुतमेव श्रुताभ्यन्तरमित्युक्तं भवतीति भावः, छन्दोभङ्गभयाद्वाऽभ्यन्तरग्रहणमिति, अथवा 'सुयनाणे'त्यनेन चतुर्दशपूर्वाक्षरलाभमधिकुरुते–'तेऽवि य मतीविसेसे सुयनाणअब्भन्तरे जाण' त्ति तानपि गम्यान् पर्यायानेतदधिकरणानेव विद्धि, श्रुतग्रन्थानुसारित्वादिति गाथार्थः ॥ १४३ ॥ आह––किं ग्रन्थानुसारेणाविर्भवन्तः श्रुतं भवन्ति ?, उच्यते, कः सन्देहस्तथाहि––'ज'इत्यादि, स्पष्टार्था, नवरं किमस्यापरमपि फलमिति, उच्यते, यदधस्तादभ्यधायि–"जं तत्थावत्थाणं चुयस्स सुयोपयोगाउ" त्ति, तस्येदमुदाहरणमिति ॥१४४॥ एवं च स्थिते–'केई'त्यादि, केचन प्रज्ञाभिमानिनोऽनुभववादिनो वा मन्यन्ते–श्रुतमनुसरतोऽपि ये मतिविशेषाः प्रस्फुरन्ति ते मतिरेवेति, कुतः 'अभासिज्जन्त' त्ति अभाष्यमाणत्वात्, 'सर्वासां निमित्तहेतुषु प्रायो दर्शन'मिति पञ्चम्यर्थे प्रथमा, मन्यंतामिति चेत्, तन्न, भावश्रुतस्याभावात्, तत्स्थाने मतिपरिकल्पना-

पूर्वधराणां षट्स्थानतता

॥ ६२ ॥

दिति गाथार्थः ॥ १४५ ॥ अपिच—'किह मती'त्यादि, भासिज्जंतं मोत्तुं जइ सव्वं सेसयं बुद्धी तो कह मइसुयनाणविऊ छट्ठाणगया परोप्परं होज्जा ?, नैवेत्यर्थः, एतदुक्तं भवति–एकस्थानपतिता एव स्युरिति, न अनन्तगुणहीनो वाऽनन्तगुणाभ्यधिको वेति, मतेः सदैवाधिक्यात्, श्रुतस्य तु सदैव हीनत्वात्, तद्धीनत्वं च भापकसंख्येयवर्पायुष्कत्वेन तत्संख्येयत्वादिति परस्थानमङ्गीकृत्य, स्वस्थानेऽपि श्रुतज्ञानिनां द्विस्थानमात्रं 'संखेज्जभागहीणे वा संखेज्जगुणहीणे वा', ततश्च (तत्) 'जं चोद्दस पुव्वधरा' इत्येतच्च न घटां-प्राञ्चति, तस्मादेतदपि–'केयी बुद्धीदिट्ठे मतिसहिए भासओ सुय'मित्यादिव्याख्यानवदभावितानुष्ठानत्वादनादरणीयमिति गाथार्थः। ॥ १४६ ॥ तदेवमियं पूर्वगतगाथा श्रुतस्वरूपाभिधायिप्रकारेण व्याख्याता, अधुना प्रकृतार्थेन व्याख्यायते, वयं तु तथापि वक्ष्याम इति मान्द्यप्रतिपन्नत्वात्, 'बुद्धिदिट्ठे अत्थे' इत्यादि ॥ अस्याश्चतुर्थेन प्रकारेण व्याख्या–बुद्धिरीहाद्यधिकरणा सामान्येन मतिः श्रुतबुद्धिः परिगृह्यते 'दिट्ठं' उपलब्धं यद् वस्तुजातं, तत् किमित्यत आह–'तं सुतं'ति तद्वस्तुजातं श्रुतमुच्यते, कारणे कार्योपचारात्, आह–पर्येवमनभिलाप्यवस्तुनोऽपि श्रुतत्वप्रसङ्गः सामान्यबुद्धिविवक्षणात्, तस्याश्च तद्विपयादपीत्यत आह–'जे भासइ'त्ति अस्यायमर्थो यद्वस्तुजातं भापते–प्रतिपादयति, इह च व्यवच्छेदफलत्वाद् वाक्यस्य सर्वं तत्सावधारणकं स्याद् इत्यतश्चावधारणविधिरित्यत एवमवधार्यते–यद्भापत एवावश्यं कदाचिद्देशकालनरान्तरादिपु, एवं च सामान्यबुद्ध्युपलब्धानामभिलापविपयत्वे सत्यभाप्यमाणानामपि श्रुतत्वलाभतः श्रुतस्य महीयान् विपयो लब्धो भवतीति भावनीयं, वक्ष्यति च भाष्यकारः 'संभवमेत्तं गहियं ण उ भासणामेत्तं' मतिदृष्टभाप्यमाणानामपि भावश्रुतप्रसङ्गात्, अत उच्यते–'बुद्धिदिट्ठे अत्थे जे भासइ तं सुयं'ति, तच्च किंविशिष्टमित्याह–'मतिसहियं'ति मतिगहियं सामान्यबुद्धिसंवलियं, एतच्च श्रुतोपयुक्तस्यैव भवतीत्यनेन मतिसहियमितिग्रहणेन नियम्यते, अतोऽन्या अभिला-

प्यानभिलाप्योपलब्ध्यात्मिका ज्ञानशक्तिर्मतिज्ञानमिति भावना, ततश्च यादृशमुपलभते श्रुतं तादृशं वक्त्येव, तद्वाच्यस्यैवंरूपत्वात्, नत्वयं मतौ विधिरिति, आह च-'इयरत्थवी'त्यादि, पच्छद्धं पूर्ववदिति गाथापिण्डार्थः ॥ अस्या भाष्यं, तत्र—

सामन्ना वा बुद्धी मइसुयनाणाइं तीएँ जे दिट्ठा। भासइ संभवमेत्तं गहियं न उ भासणामेत्तं ॥ १४७ ॥
मइसहियं भावसुयं तं नियमभासओऽवि मइरन्ना। मइसहियंति जमुत्तं सुओवउत्तस्स भावसुयं॥१४८॥
जे भासइ चेव तयं सुयं तु न उ भासओ सुयं चेव। केई मइएवि दिट्ठा जं दव्वसुयत्तमुवयंति ॥१४९॥
एवं धणिपरिणामं सुयनाणं उभयहा मइन्नाणं। जं भिन्नसहावाइं ताइं तं भिन्नरूवाइं ॥ १५० ॥
इयरत्ति मइन्नाणं तओवि जइ होइ सद्दपरिणामो। तो तम्मिवि किं न सुयं भासइ जं नोवलद्धिसमं ?॥१५१॥
अभिलप्पाणभिलप्पा उवलद्धा तस्समं च नो भणइ। तो होज्ज उभयरूवं उभयसहावंतिकाऊण ॥१५२॥
जं भासइ तंपि जओ न सुयादेसेण किन्तु समईए। न सुओवलद्धितुल्लंति वा जओ नोवलद्धिसमं॥१५३॥

'सामन्ने'त्यादि, गतार्था तदनया 'बुद्धिदिट्ठेअत्थे जे भासति' इत्येतद्व्याख्यातं ॥ १४७ ॥ शेषं व्याचिख्यासुराह—'मती'त्यादि, 'तं अभासतोवि भावसुयं णितत्तं' व्यवस्थापितमुक्तमित्यर्थः, किंविशिष्टमित्याह—'मतिसहियं' मतिसाहितमेवैतद् भवतीति नियम्यते, तथा चाह-पच्छद्धं 'मती'त्यादि, 'बुद्धिदिट्ठे अत्थे जे भासइ तं सुय'न्ति भणिऊण 'मतिसहिय'मिति यदुक्तं तत् किं ज्ञापयतोक्तमित्यत आह-श्रुतोपयुक्तस्यैव-श्रुतमत्युपयुक्तस्यैव तद्भावश्रुतमिति, विषयविषयिणोश्चात्राभेदो द्रष्टव्यः, अथ योऽन्यो विषयभाग भास्ते तमधिकृत्याह-'मतिरन्न'त्ति इति भावितार्थमिति गाथार्थः ॥१४८॥ अथेष्टावधारणमाह-'जे भासई'-

त्यादि, क्वचिद् गतार्था स्पष्टा चेति ॥ १४९ ॥ अथोपसञ्जिहीर्षुराह—'एव' मित्यादि, ध्वनिपरिणाममेव श्रुतमभिलाप्यविषयत्वात्, ध्वन्यध्वनिपरिणामं चेतरदभिलाप्यागोचरत्वात्, फलप्रधानाः समारम्भा इत्यतः 'ज'मित्यादि पच्छर्द्धं, स्पष्टम् ॥ १५० ॥ अथ मूलगाथापश्चादर्द्धमाह—( एवं कथं घटते ? ) 'इतरत्ती'त्यादि, इतरदिति–मतिज्ञानमभिसम्बध्यते, तस्माच्च वाक्परिणामो भवतीति वाक्यशेषः, अत एवाह चोदकः–'ततोऽवी'त्यादि स्पष्टम् ॥ १५१ ॥ तथाहि—'अभिलप्पा' इत्यादि, मत्योभयस्वभावा उपलब्धास्तत्समं अभिलाप्यानभिलाप्योपलब्धिसमं च न भणति, अशक्तेः, माह–ततो भवतु मतिज्ञानमुभयरूपं–मतिश्रुतरूपमुभयस्वभावमितिकृत्वा, अभिलाप्यानभिलाप्यरूपत्वात्, अथ नैवं, यानुपलभते भाषते च तद्विज्ञानमस्याः श्रुतमेवास्तु, किं तत्र मत्येति गाथार्थः ॥ १५२ ॥ उच्यते—'जमि'त्यादि, इह यदपि किञ्चिदसौ भाषतेऽभिलाप्यं वस्तु तदपि 'न श्रुतानुसारेण' न श्रुतग्रन्थानुसारेण, किन्तु स्वमत्या, वाग्योगेनेत्यर्थः, द्वितीयामुपलब्धिमङ्गीकृत्याह–न श्रुतोपलब्धितुल्यमिति वा यतः, एतदुक्तं भवति–यथा जैनश्रुतग्रन्थानुसारेण भाष्यते न तथा मत्या, ततो नोपलब्धिसमं भाषत इति मूलगाथार्थः ॥१५३॥ ततश्च सोऽयमिन्द्रियविभागकृतो भेदः समाप्त इति ॥ इदानीं परोपन्यस्तवल्कसुम्बदृष्टान्तोपन्यासविघटनेन प्राक्साधितमेवार्थमभिधित्सुस्तन्मतमुपन्यस्यति—

अन्ने मन्नंति मई वग्गसमा सुंबसरिसयं सुत्तं। दिट्ठन्तोऽयं जुत्ति जहोवणीओ न संसहइ ॥ १५४ ॥
भावसुयाभावाओ संकरओ निव्विसेसभावाओ। पुव्वुत्तलक्खणाओ सलक्खणावरणभेयाओ ॥ १५५॥
कप्पिज्जेज्ज व सो भावदव्वसुत्तेसु तेसुवि न जुत्तो। मइसुयभेयावसरे जम्हा किं सुयविसेसेणं? ॥१५६॥
असुयक्खरपरिणामा व जा मई वग्गकप्पणा तम्मि। दव्वसुयं सुम्बसमं किं पुण तेसिं विसेसेणं? ॥१५७॥

इहइं जेणाहिकओ नाणविसेसो न दव्वभावाणं। न य दव्वभावमेत्तेऽवि जुज्जए सोऽसमंजसओ ॥१५८॥
जह वग्गा सुंबत्तणमुवेंति सुंबं च तं तओऽणण्णं। न मई तहा घणित्तणमुवेइ जं जीवभावो सा ॥ १५९ ॥
अह उवयारो कीरइ पभवइ अत्थंतरंपि जं तत्तो। तं तम्मयंति भण्णइ तो मइपुव्वं जओ भणियं॥१६०॥
भावसुयं, तेण मई वग्गसमा सुंबसरिसयं तं च। जं चिंतेऊण तया तो सुयपरिवाडिमणुसरइ ॥१६१॥

'अन्ने' इत्यादि, अन्ये मन्यन्ते-मतिर्हि वल्कप्रतिमा कारणत्वात्, सैव शब्दतया सन्दर्भिता शब्देन सहोच्चारिता श्रुतं, यथा त एव वल्कास्तथाविधाकारान्तरं प्रापिताः सुम्बमिति कार्यत्वात्, आह-शोभनमेवैतन् मन्यन्तां तत् इत्थं कोऽपराध ? इति, उच्यते 'न, यत आह-अयं दृष्टान्तो यथा तैरुपनीयते इति साभिप्रायं तथा न युक्तिं संसहते, न विषहत इत्यर्थ इति गाथार्थः ॥ १५४ ॥ कुतः ? इत्याह—'भाव'इत्यादि, भावश्रुतस्याभावात्, तदभावश्च द्रव्यश्रुतस्यैव भावात्, अथ तत्रापि भावश्रुतकल्पना क्रियते इत्यतः स एव सङ्करः, तस्मात्, न चेत्सङ्कर इष्यते ततो निर्विशेषभावस्तस्माच्च, अस्तु विशेषाभाव इति चेत्, तन्न, पूर्वोक्तलक्षणाद् अभिनिबुध्यते इत्यादेः तथा स्वलक्षणभेदात्, ज्ञानस्य पञ्चविधत्वादावरणभेदाच्चेति गाथार्थः ॥ १५५ ॥ उक्तवन्नास्याभावः कर्त्तुं पार्यत इत्यतोऽयं दृष्टान्तो भावद्रव्यश्रुतयोः योक्ष्यत इत्याह च—'कप्पी'त्यादि स्पष्टार्था, नवरं 'किं सुयविसेसेणं'ति किं श्रुतयोर्विशेषेण ?, भिन्नाम्नोर्ज्ञानयोर्विशेषाभिधानप्रस्तावत्वादिति गाथार्थः ॥ १५६ ॥ पुनरपि पराभिप्रायमेवाह—'असुते'त्यादि, अश्रुताक्षरपरिणामा वा या मतिः-ईहादिका वल्ककल्पना तस्यां, द्रव्यश्रुतं तु सुम्बसमं, ततश्च योक्ष्यतेऽयं दृष्टान्त इत्युक्तमत उच्यते-'किं पुण तेसिं विसेसेणे'ति गाथार्थः ॥ १५७ ॥ केन कारणेन इत्याह—'इहइ'मित्यादि पूर्वार्द्धं स्पष्टम्, अथैतावन्मात्रनियत एवासौ भविष्यतीत्यत

आह–न च द्रव्यभावमात्रेऽपि युज्यतेऽसावञ्जसा दृष्टान्तः असमञ्जसतो, दृष्टान्तदार्ष्टान्तिकयोर्वैधुर्यादिति गाथार्थः ॥ १५८ ॥ तथाहि—'जहे'त्यादि, स्पष्टार्था ॥ १५९ ॥ पराभिप्रायमाह—'अह'इत्यादि, 'भावसुय'इत्यादि, अथोपचारः क्रियते–मतिपूर्वं द्रव्यश्रुतं, ततश्च 'दव्वभावमेत्ते सो भविस्सति', उपचारनिबन्धनमाह–प्रभवत्यर्थान्तरमपि सत् यद् वस्तु यस्माद् वस्तुनस्तत्तन्मयमिति भण्यते, यथा सोऽयं रूपक एवमवस्थां गत इति, एवं सैव मतिर्द्रव्यश्रुतावस्थां प्रापितेति, आचार्य आह–यद्येवं 'तो मतिपुव्वं जतो भणियं भावसुयं'ति, अस्यायमर्थः–यत एवमुपचारवादी भवान् 'तो' ततः वरं मूढ ! काक्वा 'मइपुव्वं'मतिकारणमिति भणितं उक्तं भावश्रुतं, भावश्रुतमेवार्षत्वाद् यथाश्रुतं व्याख्येयम् ॥ १६० ॥ अथ पुरुषशक्तिपरिग्रहाद्वाचको भवतीति न्यायप्रदर्शनार्थमाह–'भावे'त्यादि, तेन मतिर्वल्कसमा कारणत्वात् शुम्बसदृशं च यत्तद्भावश्रुतं कार्यत्वात्, कुतः ? इत्याह–यस्मात्सञ्चिन्त्य–ज्ञात्वा मत्या तया पश्चात् श्रुतपरिपाटीमनुसरति–अयमस्यार्थ इत्येवमिति गाथार्थः ॥ १६१ ॥

अन्ने अणक्खरक्खरविसेसओ मइसुयाइं भिन्दन्ति। जं मइनाणमणक्खरमक्खरमियरं च सुयनाणं ॥१६२॥
जइ मइरणक्खरचिय भवेज्ज नेहादओ निरभिलप्पे। थाणुपुरिसाइपज्जायविवेगो किह णु होज्जाहि? ॥१६३॥
सुयनिस्सियवयणाओ अह सो सुयओ मओ न बुद्धीओ। जइ सो सुयवावारो तओ किमन्नं मइन्नाणं? ॥१६४॥
अह सुयओऽवि विवेगं कुणओ न तयं सुयं सुयं नत्थि। जो जो सुयवावारो अन्नोऽवि तओ मई जम्हा ॥१६५॥
मइकालेवि जइ सुयं तो जुगवं मइसुओवओगा ते। अह नेवं एगयरं पवज्जओ जुज्जए न सुयं ॥१६६॥
जइ सुयनिस्सियमक्खरमणुसरओ तेण मइचउक्कंपि। सुयनिस्सियमावन्नं तुह तंपि जमक्खरप्पभवं ॥१६७॥

मतिश्रुतयोः वल्कशुंबत्वादिः ॥ ६८ ॥

जइ तं न सुएण तओ जाणइ सुयनिस्सियं कहं भणियं?। जं सुयकओवयारं पुव्विं इण्हि तयणवेक्खं ॥१६८॥
पुव्वं सुयपरिकम्मियमइस्स जं संपयं सुयाईयं। तं निस्सियमियरं पुण अणिस्सियं मइचउक्कं तं ॥१६९॥
उभयं भावक्खरओ अणक्खरं होज्ज वंजणक्खरओ। मइनाणं सुत्तं पुण उभयंपि अणक्खरक्खरओ ॥१७०॥

'अन्ने' इत्यादि। अन्ये अनक्षराक्षरविशेषतो मतिश्रुते भिन्दन्ति, यस्माद् किल मतिज्ञानमनक्षरमेव व्यञ्जनशब्दापोढत्वात्, श्रुतज्ञानं त्वक्षरवदनक्षरवच्चेति, तत्राक्षरवद् भावतो व्यञ्जनाक्षरतश्च अनक्षरवदुच्छ्वसितादि, कोऽभिप्रायस्तेषामेवं वदतामिति चेत्, उच्यते, मतौ व्यञ्जनाक्षरायोगात् श्रुत इवेति भावना, एतच्च परिफल्गु, भावाक्षरमङ्गीकृत्य मतिज्ञानस्याप्यनक्षराक्षररूपत्वात् ॥ १६२ ॥ इत्थं चैतद्, अन्यथा—'जती'त्यादि, 'यदि मतिरक्षरानक्षरैव स्यात्,' यदि मतिः सर्वथा अवर्णवादविज्ञानरूपैव स्यात्, ततो नेहादयो मति-निरभिलाप्येऽर्थे अनुप्रवर्त्तेरन्निति, तद्वर्णात्मकत्वात्, मतेश्चानक्षरत्वात्, आह—यद्यस्यामनक्षरायामीहादयोऽपि न प्रवृत्ताः क इव दोषः?, उच्यते, स्थाण्वादिविकल्पाभावः, स्थाणौ पुरुषादिपर्यायविवेकः स्थाणुधर्माध्यारोपश्च कथं नु स्याद् यदीयमनक्षरैवेति, तथाहि—याऽनक्षरा न तस्यामसौ, यथाऽवग्रहे तथा चेहादयस्तस्मान्न तेष्वसाविति गाथार्थः॥१६३॥ तत्रैतत्स्यात्—मतिः श्रुतनिश्रिता अश्रुतनिश्रिता चोक्तेत्यतः श्रुतादेवाक्षररूपादसौ भविष्यतीत्यतः किमक्षररूपमतिकल्पनया येन बाधोच्यते यदीत्यादिना?, आह चोदकाभिप्रायम्—'सुय' इत्यादि, श्रुतनिःश्रितवदनादथ मन्यसे 'न' इत्यनन्तराधिकृतः स्थाण्वादिपर्यायविवेकः श्रुततो मतो, न तु बुद्धेः ईहादिकाया इति, उच्यते, यद्यसौ ईहादिव्यापारः 'श्रुतव्यापारः' श्रुतपरिच्छेद इति कल्प्यते ततः किमन्यन्मतिज्ञानं अवग्रहादन्यदिति वाक्यशेषः, निवृत्तेदानी-मीहादिवार्त्ता, तद्व्यापारस्य श्रुतव्यापाराभ्युपगमात्, मतिश्रुतयोश्च भेदोक्तेः किं?, न किञ्चिदिति गाथार्थः ॥ १६४ ॥ अन्येन

करणेन सूरिरुपतिष्ठन्नाह—'अहे'त्यादि, अथ श्रुतनिश्रितवचनादेव श्रुततोऽपि 'विवेकं' स्थाण्वादिपर्यायलक्षणं 'कुर्वतो' विदधतः न तत् श्रुतं, मतिरूपोच्छेदप्रसङ्गात्, किं तर्हि ?, मतिरेवेति, उच्यते, श्रुतं तर्हि नास्ति, श्रुतस्य तर्हि दीयतां जलाञ्जलिरित्यभिप्रायः, किं कारणमित्याह–यो यः श्रुतव्यापारोऽन्योऽपि असावसौ यस्मान्मतिः, त्वद्दर्शनेन सर्वं श्रुतं मतिः वर्णविज्ञानरूपत्वादीहादिवत्, मतेस्त्वनक्षरत्वात्, मतिश्रुतवर्ण(नानात्वं) नावबुध्यते पर इत्यभिप्राय इति गाथार्थः ॥१६५॥ तदेवं श्रुतनिश्रितवचनमात्रतो वाक्छलनेन दारुणव्यसनमापन्नस्यापि परस्यासमीक्षिताभिधायीति कृत्वा अत्रैव दोषान्तराभिधित्सया सूरिरुपक्रमते—'मती'त्यादि, अपिच–श्रुतनिश्रितवचनात् 'मतिकालेऽपि' मतिप्रादुर्भाववेलायामपि यदि श्रुतं ततो 'युगपद्' अक्रमेण मतिश्रुतोपयोगः ते–तव देवानांप्रियस्य प्रसक्तः ततश्च प्रदेशान्तरोक्तविरोधो न 'उवयोगो सिं'तीष्टत्वात्, अथ नैवं विरोध इष्यते, एकोपयोगस्यैवेष्यमाणत्वादिति, उच्यते–यद्येवं 'एक्कतरं'ति एकमुपयोगं 'प्रपद्यतः' इच्छतो 'युज्यते' घटां प्राञ्चति, स्थाण्वादिपर्यायविवेकं कुर्वतो मतिरेवान्यत्रानवकाशत्वेनागतिकत्वात्, अनभिमतप्रतिषेधमाह–'न सुयं'ति न श्रुतमिह घटामियर्त्ति, तस्योत्तरकालं घटमानत्वादिति गाथार्थः ॥१६६॥ अपिच–यदस्माकं यथार्थवादिनां मतेरक्षरत्वेनेहादिप्रवृत्तितः स्थाण्वादिपर्यायपरिच्छेदं व्याचक्षाणानां त्वया खल्वयथार्थवादिना स्वमतमास्थाय मतेरनक्षरत्व एव मति श्रुतनिश्रितवचनादसौ श्रुतानुसारेण भवतीति चोद्यते ततस्तवानेन न्यायेन प्रकृतज्ञापकाद् बुद्धिचतुष्टयमपि श्रुतनिश्रितमापद्यते, तत्रापीहादिसद्भावात्, ईहादिव्यापारस्य च श्रुतनिश्रितत्वेन श्रुतव्यापाराभ्युपगमात्, आह च—'यती'त्यादि, यदि च भवतः स्थाण्वादिपर्यायविवेकविधायीहादिवेलायां श्रुतनिश्रितं तद् 'जमक्खरमणुसरइ'त्ति यदक्षरानुसरणाद्, तद्वर्णविज्ञानानर्थान्तरभावेन, मतिस्त्वनक्षरेति, विवादास्पदीभूतमेतदिति भावना, तेन मतिचतुष्कमपि औत्पत्तिक्यादि श्रुतनिश्रितमापन्नं तवेदानीं, इय-

त्यप्युक्ते अज्ञानेन धाष्टर्याद्वा पर आह—किमित्येवमिति, आचार्य आह—'तंपि जमक्खरप्पभवं'ति, कोऽस्यार्थः ? तत्रापि सहजत्वेन अश्रवणसंस्काराविर्भाविनो वर्णविज्ञानात्मकः खल्वीहादयो यस्माद् विद्यन्त एवेति, यत्र यत्रेहादिव्यापारस्तत्र तत्र श्रुतानिश्रय इत्यभ्युपगमः, ततोऽत्रापीहादिव्यापारसद्भावात् श्रुतानिश्रय इत्यश्रुतनिश्रितप्रतिपत्तिरपि भ्रान्तेत्यतः कथमादौ श्रुतनिःश्रितमश्रुतनिश्रितं च प्रतिपद्य श्रुतनिश्रितादसौ भविष्यतीत्युक्तं, तदेवं मतेरनक्षरत्ववादी परोऽन्धनाग इव पदे पदे प्रस्खलतीति गाथार्थः ॥ १६७॥ तदेवं न्यायवादिना न्यायेन विलक्षीकृतोऽप्यसद्ग्राहममुञ्चन् परोऽद्यापीदमाह—'जती'त्यादि, यदीत्यभ्युपगमप्रदर्शनार्थः, 'तं' धाशुपुरिसादिपज्जायं ण 'सुत्तेण' सुत्तगंथाणुसारेण 'ततो'त्ति सो नाणी 'जाणइ'त्ति, विवेचयतीत्यर्थः, 'तो सुयनिस्सियं' 'कथं' येन प्रकारेण 'भणितम्' उक्तम् ?, अवग्रहादिसूत्रे सूत्रकारेणेति सामर्थ्यात् गम्यते, अतस्त्वं श्रुतोपष्टम्भेन कुर्वतः सर्वे मदीयं योक्ष्यते, मतिस्त्वनक्षरैवेति, काऽत्र स्खलनेति चोदकगाथार्द्धार्थः ॥ अत्र क्षमाश्रमणपूज्यपादा अपि गजनिमीलिकयोक्तवन्तो—भवानेव प्रष्टव्यः य एनमाह—श्रुतमनुधावतः श्रुतनिश्रितमिति, अथ चेदिच्छाकारेण कथयितव्यमिति, हन्त ! प्रथममेव कस्मादेवं नोपसन्नोऽसि ?, ननु'ज'मित्यादि पश्चर्द्धं, यद्—यस्मात् श्रुतेन कृत उपकारः—उपष्टम्भो यस्य तत्तथा, कदेत्याह—पूर्वं—प्राक्, इदानीं पुनः—उत्पादकाले तदनपेक्षं, श्रुतातीतत्वादिति गाथार्थः ॥१६८॥ एतदेवाभिप्रसन्नचोदकानुग्रहार्थमाह—'पुव्व'मित्यादि, प्राक् श्रुतविस्फारितधियोऽधुना यद्यदतीतमवग्रहादि तच्छ्रुतनिश्रितमाह, इतरत् पुनरौत्पत्तिक्यादिबुद्धिचतुष्टयमनिश्रितं सहजत्वादिति, तत्रापि काचित् श्रुतोपकारादेव जायते 'तिवग्गसुत्तत्थगहियपेयाला'इति वचनादिति चेत्, उच्यते, बाहुल्यस्य विवक्षितत्वात्, स्वल्पस्य चाविवक्षितत्वाद् यथायोगं तदश्रुतनिश्रितमित्यदोषः, एतदुक्तं भवति—यथाहि—यद्यपि सामान्येनावग्रहादयः श्रुतनिश्रिता उक्त(श्रुत)परिकर्मितमतिगता

एव श्रुतनिश्रिता उच्यन्ते, न सहजबुद्धिचतुष्टयगता अपि, यथायोगं ग्रहणाद् एवमिहापीति, तस्मात् स्थितमेतद्यदुत—'उभय'मित्यादि, 'मतिनाणं'ति आभिनिबोधिकज्ञानं किमत आह—उभयं' उभयरूपं अणक्खरं अक्षरं चेति भावना, कथमित्यत आह—'भावक्खरओ'त्तिणागक्खरमहिकिच्च, एतदुक्तं भवति–अवग्रहज्ञानापेक्षयाऽनक्षरं निर्विकल्पकत्वेन सामान्यमात्रप्रतिभासतः सुमुग्धाकारत्वात्, ईहादिज्ञानापेक्षया तु साक्षरं, परामर्शप्रत्ययत्वेन विशेषतो वर्णविज्ञानात्मकत्वात्, अत्रैव यदङ्गीकृत्य मूढैरनक्षरा मतिरुक्ता तन्निमित्तमाह—अणक्खरं होज्ज वंजणक्खरतो'त्ति, व्यञ्जनाक्षरं पुस्तकादिन्यस्तमकारादि शब्दो वा तमाश्रित्य स्यादनक्षरा मतिः न कश्चिद्दोषः, न हि मतिर्द्रव्यमतिः स्यादरूढत्वात्, तदेवं भावाक्षरत एव मतेर्द्वित्वमभिधाय श्रुतस्य तु भावमभावं चाश्रित्याह—'सुत्तं पुण'त्ति यत्र पुनर्भावद्रव्यलक्षणं पृथक् पृथगुभयमपि,–कथमित्याह 'अणक्खरक्खरउ'त्ति, अनक्षरतोऽक्षरतश्च भावश्रुतमेवं द्रव्यश्रुतमपि, नवरमिदमनक्षरमुच्छ्वसितादि ॥१६९–१७०॥ अथापरव्याख्यानविशेषोपन्यासमाह—

सपरप्पचायणओ भेओ मूढयराण वाऽभिहिओ । जं मूयं मइनाणं सपरप्पच्चायगं सुत्तं ॥१७१॥
सुयकारणंति सद्दो सुयमिह सपरविबोहणं कुणइ । मइहेयवोऽवि हि परं बोहेंति कराइचिट्ठाओ ॥१७२॥
न परप्पबोहयाइं जं दोवि सरूवओ मइसुयाइं । तक्कारणाइं दोण्हवि बोहेंति तओ न भेओ सिं ॥१७३॥
दव्वसुयमसाहारणकारणओ परविबोहयं होज्जा । रूढंति व दव्वसुयं सुयंति रूढा न दव्वमई ॥१७४॥
सा या सद्दत्थोच्चिय तयावि जं तम्मि पच्चओ होइ । कत्तावि हु तदभावे तदभिप्पाओ कुणइ चिट्ठं ॥१७५॥

'सपर'इत्यादि, कैश्चिदनयोर्भेदोऽभिहितः, कुतः ?–स्वपरप्रत्यायनतः, स्वप्रत्यायनेन परप्रत्यायनेन चेत्यर्थः, कयोरवि-

त्याह—मूकेतरयोरिव, तथाहि—यस्मान्मूकमेव मतिज्ञानं अपरप्रत्यायकत्वात्, श्रुतं त्वमूकं स्वपरप्रत्यायकत्वात्, अयं पूर्वपक्ष इति गाथार्थः ॥ १७१ ॥ अत्रानयोराचार्यः परतस्तुल्यतापादनेनाभेदमाह—'सुयकारणंती'त्यादि, इह परावबोधचिन्तायां शब्दोऽक्षरविन्यासो वा श्रुतमुच्यते उपचारेण, किमित्यत आह—'सुयकारणं'ति श्रुतकारणत्वात्, स च 'परविबोहणं कुणइ'त्ति स चेत्परविबोधनं करोति तत एतदपि परिफल्गु, अप्रयोजकत्वात्, अप्रयोजकत्वं च मतेरप्येवंजातीयप्रकारभावतः परप्रत्यायकत्वात्, हि—यस्मात् करादिचेष्टा अपि—हस्तमुखसंयोगादिका मतिसम्बन्धिन्यः परं बोधयन्ति, कुतः ? इत्याह—'मतिहेतवो'त्ति, मतिहेतुत्वात्, तस्मान्न द्रव्यश्रुतमङ्गीकृत्यायं भेदः सारो भवतीति गाथार्थः ॥ १७१॥ एवं तावत् परतस्तुल्यतोक्ता, अथ स्वतोऽप्याह—'न परे'त्यादि, निगमनं चाह—'न परे'त्यादि, यस्मात् द्वे अपि—मतिश्रुते न परबोधके, कथमित्याह—स्वरूपतः साक्षादित्यर्थः, विज्ञानमयत्वादवव्यादिवत्, 'ततो'त्ति तस्मान्न भेदोऽयमनयोरिति, किन्तु 'तक्कारणाइं दोण्हवि बोधेन्ति' तानि च तानि कारणानि च—द्रव्यश्रुतकरादिचेष्टादीनि द्वयोरप्यनयोर्बोधयन्ति यतः किमुच्यते—'जं मूयं मतिनाण'मित्येवमादि, ननूच्यतामुभयमप्युभयमनुभयं वेति उक्तवदिति गाथार्थः ॥ १७२ ॥ एवं तावत्करादिचेष्टायाः सामान्येन मतिहेतुत्वाङ्गीकरणतः परोक्तं व्यभिचार्याचार्य एवाधुना प्राह—भवेद्वा द्रव्यश्रुतमप्यङ्गीकृत्यानयोरयं मूकेतरकृतो भेदो यदीयं शब्दार्थहेतुत्वतोऽपि निर्मूलतो द्रव्यश्रुतत्वेनैव विवक्ष्येत सामर्थ्यन, कथमित्यत्र ब्रूमः—'दव्वसुय'मित्यादि, 'दव्वसुयं परविबोहयं होज्जा', कुतः ?—असाधारणकारणत्वात्, श्रुत उत्पाद्ये भेरीशब्दन्यायेन, न करादिव्यापारो मतिज्ञानमेव, शब्दार्थहेतुत्वात् तदपीत्यभिप्रायः, अथवा द्रव्यश्रुतं—जैनशब्दराशिः परविबोधकं स्यात्, निर्वाणसाधनासाधारणविज्ञानकारणत्वात्, अथवा द्रव्यश्रुतं श्रुतमिति रूढं यस्मात् तस्माद् युक्तमिदं यदुत 'सपरपच्चायगं सुत्तं'ति, अनभिमतप्रतिषेधमाह—

उग्गहु ईह अवाओ अ धारणा एव हुंति चत्तारि। आभिणिबोहिअनाणस्स भेअवत्थू समासेणं ॥१७८॥ (नि. २)
अत्थाणं उग्गहणंम्मि उग्गहो तह विआलणे ईहा। ववसायम्मि अवाओ धरणं पुण धारणं बिंति ॥१७९॥ (नि. ३)

सामण्णऽत्थावग्गहणमुग्गहो भेयमग्गणमहेहा। तस्सावगमोऽवाओ अविच्चुई धारणा तस्स ॥ १८० ॥
सामण्णविसेसस्सऽवि केई उग्गहणमुग्गहं बेंति। जं मइरिदं तयंति च तं नो बहुदोसभावाओ ॥ १८१ ॥
ईहा संसयमेत्तं केई न तयं तओ जमन्नाणं। मइनाणं सा चेहा कहमन्नाणं तई जुत्तं ? ॥ १८२ ॥
जमणेगत्थालंबणमपज्जुदासपरिकुंठियं चित्तं। सेयइव सव्वप्पयओ तं संसयरूवमन्नाणं ॥ १८३ ॥
तं चिय सयत्थहेऊववत्तिवावारतप्परममोहं। भूयाभूयविसेसायाणचायाभिमुहमीहा ॥ १८४ ॥
केई तयण्णविसेसावणयणमेत्तं अवायमिच्छन्ति। सब्भूयत्थविसेसावधारणं धारणं बेंति ॥ १८५ ॥
कासइ तयन्नवइरेगमेत्तओऽवगमणं भवे भूए। सब्भूयसमण्णयओ तदुभयओ कासइ न दोसो ॥१८६॥
सव्वोऽवि य सोऽवाओ भेए वा होंति पंच वत्थूणि। आहेवं चिय चउहा मई तिहा अन्नहा होइ ॥ १८७ ॥
काऽणुवओगम्मि धिई पुणोवओगे य सा जओऽवाओ। तो नत्थि धिई भण्णइ इदं तदेवेति जा बुद्धी ॥१८८॥
नणु साऽवायब्भहिया जओ य सा वासणाविसेसाओ। जा य अवायाणन्तरमविच्चुई सा धिई नाम ॥१८९॥
तं इच्छन्तस्स तुहं वत्थूणि य पंच नेच्छमाणस्स। किं होऊ साऽभावो भावो नाणं व तं कयरं ? ॥ १९० ॥

'रूढा ण दव्वमति'त्ति न द्रव्यमती रूढा–न करादिचेष्टा द्रव्यमतित्वेन प्रख्याता, अत इदमपि युक्तं यदुक्तं–'जं मूयं मइनाणं'ति गाथार्थः ॥ १७४ ॥ रूढा चेदत आह—'सा वा'इत्यादि, सा–करादिचेष्टा शब्दार्थ एव वर्तते, तद्धेतुत्वाच्छब्दवत्, कुत एतदित्याह–तथापि करादिचेष्टया मुखं प्रतिविधीयमानया 'जं'ति यद्–यस्मात् कारणात् प्रतिपत्तुस्तस्मिन्–शब्दार्थे प्रत्ययो भवति–अयं भोक्तुमीहते इत्येवं बोधो भवति, अपिच कर्ताऽपि च 'तदभावे' मुखरोगादौ सति शब्दाभावे 'तदभिप्रायः' शब्दार्थद्योतनाभिप्रायः करोति चेष्टामेवं करादिलक्षणां नतून्मत्ततयेत्यतोऽनया भङ्गया युज्येता'येवमनयोर्विशेष इति गाथार्थः ॥१७५॥ साम्प्रतमेतत्प्रकरणोपसंहारव्याजेन प्रकृतं स्मारयन्नाह—

मइसुयनाणविसेसो भणिओ तल्लक्खणाइभेएणं । पुव्वं आभिणिबोहियमुद्दिट्ठं तं परूवेस्सं ॥१७६॥

'मती'त्यादि, एवमनयोर्भेद उक्तः, कथं ?–तल्लक्षणादिभेदेन, तत्स्वलक्षणादिभेदेनेत्यर्थः, अत्र च ज्ञानपञ्चके प्रागाभिनिबोधिकमादिष्टं भद्रबाहुस्वामिना तदिदानीं प्ररूपयिष्य इति गाथार्थः ॥ १७६ ॥ तत्रेयं सम्बन्धगाथा—

इंदियमणोनिमित्तं तं सुयनिस्सियमहेयरं च पुणो । तत्थेक्केक्कं चउभेयमुग्गहोप्पत्तियाईयं ॥१७७॥

'इंदिते'त्यादि, इन्द्रियमनोनिमित्तमित्यनेन प्रागुक्तानुवादमाह, 'त'मिति आदिज्ञानं आभिनिबोधिकं 'सुयनिस्सियं' भवति, 'तत्रे'ति वाक्योपन्यासार्थः 'एक्केक्कं सुयनिस्सियमसुयनिस्सियं च चउब्भेयं' चतूरूपं भवति, कथमित्यत आह—'उग्गहोप्पत्तियादीयं'ति 'सुयनिस्सियं' अवग्रहादि 'असुयनिस्सियं' औत्पत्तिक्यादीति गाथार्थः ॥१७७॥ तत्रादित एतावत् श्रुतनिश्रितमवग्रहाद्यभिधित्सुराह निर्युक्तिकारः—

तुज्झं बहुगरभेया भण्णइ मई होइ धिइबहुत्ताओ। भण्णइ न जाइभेओ इट्ठो मज्झं जहा तुज्झं ॥ १९१ ॥
सा भिन्नलक्खणाविहु धिइसामन्नेण धारणा होइ। जह उग्गहो दुरूवो उग्गहसामन्नओ एक्को ॥१९२॥

'उग्गहो' इत्यादि। अवग्रहः-सामान्यार्थग्रहणं ईहा तदर्थविशेषालोचनं अपायः-प्रक्रान्तविनिश्चयः चशब्दोऽवग्रहादीनां पृथक् पृथक् स्वातन्त्र्यप्रदर्शनार्थः, तेनैतदुक्तं भवति-अवग्रहादेरीहादयः पर्याया न भवन्तीति, अवगतार्थविशेषावधारणं धारणा, एवकारः क्रमद्योतनार्थः, एवमनेनैव क्रमेण भवन्ति, आभिनिबोधिकज्ञानस्य भिद्यन्त इति भेदाः-विकल्पास्त एव वस्तूनि, कथं ?-यतो नानवगृहीतमीह्यत इत्येवमादि, काक्वा वा नीयते-एवं भजन्त्याभिनिबोधिकज्ञानस्य भेदवस्तूनि 'समासेन' संक्षेपेण विशिष्टावग्रहादिस्वरूपापेक्षया, विस्तरतोऽष्टाविंशतिभेदभिन्नत्वादस्येति गाथार्थः ॥१७८॥ अथामीषां स्वरूपाभिधित्सयाऽऽह-'अत्थाण' मित्यादि। अर्थानां-रूपादीनां प्रथमं दर्शनानन्तरं ग्रहणमवग्रहणं यत्तदवग्रहं ब्रुवत इति सम्बन्धः, 'तथे'त्यानन्तर्ये विचारणं-पर्यालोचनमर्थानामिति वर्त्तते ईहनमीहा तां ब्रुवत इति सम्बन्धः, अवग्रहादुत्तीर्णस्यापायादधोऽन्वयव्यतिरेकवद्धर्मघटनव्यतिरेकाभिमुखतामीहां प्राहुः, विशिष्टोऽवसायो व्यवसायः-निर्णयः तस्मिन्नवायमपायं वा ब्रुवत इति सम्बन्धः, अर्थानामिति च वर्त्तते, धृतिर्धरणं अर्थानामिति वर्त्तते, परिच्छिन्नस्य वस्तुनोऽविच्युतिस्मृतिवासनारूपं तद्धरणं पुनर्धारणां ब्रुवते, पुनःशब्दोऽप्येवकारार्थः, ब्रुवते इत्यनेन शास्त्रपारतन्त्र्यमाह,तीर्थकरगणधरोक्तानुसारित्वादिति गाथार्थः ॥ १७९ ॥ अथैतदप्योघतो भाष्यकृद्विवरीपुराह—'सामण्णे' त्यादि। सामान्यरूपः सामान्यं, अशेषविशेषविनिर्लुठितत्वेन सम्मुग्धाकार इत्यर्थः, अर्यत इत्यर्थः, सामान्यासौ अर्थश्चेति सामान्यार्थः, अवगृह्यतेऽनेनेत्यवग्रहणं, एकसामायिकमवच्छेदनमित्यर्थः, सामान्यार्थस्यावग्रहणमिति षष्ठीसमासः तृतीयासमासो वा, ततश्चायमर्थः-सामान्येनार्थ-

स्यावग्रहणं सामान्यार्थावग्रहणम्, अनिर्देश्यार्थावग्रहणमिति भावना, तत्किमत आह–'अवग्गहो'त्ति तदवग्रहः प्रथमः श्रुतनिश्रित-मतिज्ञानभेद उच्यते, ईहां व्याचिख्यासुराह–'भेदमग्गणमहेह'त्ति, 'अथे'त्यनन्तरं तस्यैवावगृहीतस्यार्थस्य ईषदन्यतरक्षयोप-शमसमुत्थानबलेन भेदमार्गणं, किमत्र स्थाणुधर्मा वल्ल्युत्सर्पणादयो घटन्ते आहोस्वित् शिरःकण्डूयनादयः पुरुषधर्माः ? इति विशेष-विमर्षणं ईहा भण्यते, तदस्मादथशब्दोपादानात् क्रमाभिधानप्रयोजनमपि ख्यापितं भवति, अनवगृहीतस्यालोचनाऽयोगाद्, अत एवाह–'तस्सावगमोऽवायो'त्ति, तस्य–अवग्रहादनन्तरमीहितस्यार्थस्य अवगमः–परिच्छेदः एकपक्षनिक्षेपलक्षणः अवायो भण्यते अपायो वा, आलोचनानन्तरं निर्णयज्ञानोत्पत्त्यनुभूतेः, 'अविच्चुती धारणा तस्स'त्ति तस्य एवमवग्रहादिक्रमेणैकपक्षनिश्चितस्या-र्थस्य या अविच्युतिः–अभ्रंशः पुरुषः २ पुरुष एवायमिति येयं प्रतिकृतिः सा धारणोच्यते चतुर्थो भेदो, निर्णयोत्तरकालभावित्वाद्, इदं तावत् स्वरूपमात्रं, न चामीषामेकाधिकरणत्वं येनोच्येत 'निष्पादितक्रिये कर्मण्यविशेषाधायि साधन'मित्यपि साधनन्यायमतिपतती-ति, अनन्तधर्मात्मके वस्तुनि तत्सहकारिकारणसन्निधानतस्तत्तद्धर्मान्तरग्रहणाभ्युपगमादिति गाथार्थः ॥ १८० ॥ अत्र चावग्रहादारभ्य विप्रतिपत्तयः सन्तीति ता निराचिकीर्षुराह–'सामण्णे'त्यादि । सामान्यं चासौ विशेषश्च २ तस्यापि, न केवलं सामान्यार्थस्येत्यपि-शब्दः, अवग्रहणं–अवच्छेदनं केचन व्याख्यातारः, किमत आह–'अवग्गहणं'ति अवग्रहत्वमभिदधत्यतिलब्धप्रसरत्वात्, किं कारण-मित्याह–'जं मतिरिदं तदंति च'त्ति यस्मादमुतोऽनन्तरमिदं तदिति वेति विमर्षलक्षणा मतिरनुधावतीति, एतदुक्तं भवति–यदनन्तर-मीहादिप्रवृत्तिः सोऽवग्रहः, तद्यथा–व्यञ्जनावग्रहचरमसमयभाव्येकसामयिकमर्थग्रहणं, तथा च शब्दोऽयमित्यस्मात् अनन्तरमीहादि प्रवर्त्तते किमयं रूपादिविच्छिन्नः शब्दः शाङ्खः आहोश्वित् शार्ङ्ग इति ?, तस्मादवग्रह एष इति, शार्ङ्गश्चेत् किं महिषीशृङ्गोद्भवो महि-

पश्रृङ्गोद्भव इतीहा, महिषीशृङ्गोद्भवश्चेत् किं प्रसूतमहिषीशृङ्गोद्भवः? इत्येवमादि, यत ईहा न प्रवर्त्तिष्यते, अन्तगमनात् क्षयोपशमाभावतो वा स त्वपाय इति पूर्वपक्षः, सम्भाव्यत एवास्येत्थमवग्रहत्वमित्यत आह–तन्न, कुतः? इत्याह–बहुदोषभावात् (तांश्च दोषान्) वक्ष्याम इति गाथार्थः ॥ १८१ ॥ 'ईहे'त्यादि । केचनाभिदधति–ईहा संशयमात्रं, इतश्चेतश्च डोलायमानप्रत्ययरूपत्वात्, सूरिराह–'न तयं'ति न तद् घटां प्राञ्चति, कुतः? इत्याह–'तओ'त्ति असौ–संशयः यद्–यस्मात् अज्ञानं–अनवबोधोऽप्रतिपत्तिमात्रं भवर्त्तते, ततः किमत आह–मतिज्ञानांशश्च, ईहा वर्त्तते 'उग्गहो ईह अवाअ धारणे' त्येवमादिवचनात्, एवंचेदतः 'कथं' केन प्रकारेणाऽज्ञानं–अनवबोधनं 'तई' असावीहा युक्तं च–घटते, इतश्चेतश्च डोलायमानप्रत्ययरूपत्वादितिचेत्तन्न, ईहाया डोलायमानप्रत्ययरूपत्वाघटनादिति गाथार्थः ॥ १८२ ॥ तथा चेहासंशययोर्लक्षणमाह–'जमि'त्यादि । 'तंन्त्रिये'त्यादि यच्चित्तं–यन्मनः अनेकार्थालम्बनं–अनेकार्थप्रतिभासान्दोलितं न किंचिदध्यवस्यति, अत एवाह–'अपज्जुदासपरिकुंठिलं'ति अपर्युदासेन–अप्रतिषेधेन अविधिना चेति सामर्थ्याद् गम्यते, परिकुण्ठियं–अपटूकृतं, किम्बहुना?, शेत इव सर्वात्मना–स्वपितीव सर्वप्रकारैः, स्थाणुः स्यात् पुरुषो वेत्येतावन्मात्रनियतत्वेन डोलायमानरूपत्वात्, तत्किमित्यत आह–'तमन्नाणं'ति तच्चेतः अज्ञानं, कुत इत्याह–'संसयरूवं'ति संसयरूपत्वात्, ज्ञानस्य च निश्चयात्मकत्वादिति गाथार्थः ॥ १८३ ॥ 'तं चिय ईहे'ति तदेव चित्तं ईहोच्यते, किंविशिष्टं सदित्याह–संभासानयंश्च सदर्थः विवक्षया वल्ल्युत्सर्पणात् तथा हेतुः–अन्वयव्यतिरेकधर्मघटनालोचनलक्षणः उपपत्तिः–सम्भवालोचनं, यथा–"अरण्यमेतद् सविताऽस्तमागतो, न चाधुना सम्भवतीह मानवः । प्रायस्तदेतेन खगादिभाजा, भाव्यं रतिप्रियतमारिनाम्ना ॥ १ ॥" हेतुश्चोपपत्तिश्च हेतूपपत्ती सदर्थस्य हेतूपपत्ती सदर्थहेतूपपत्ती ताभ्यां व्यापारः स तथोच्यते तस्मिंस्तत्परं–सदेकान्तनिग्रमिति समासः, कि-

मेतावत्फलमेव ?, नेत्याह –अमोहं' अवन्ध्यं माव्यपायज्ञानत्वात् प्रायोऽन्वयधर्मघटनाभिमुखत्वादिति पूर्वार्द्धार्थः । अथवा किमुक्त भवति 'तं चिय सदत्थहेतूपपत्तिवावारतप्पर' मिति ?, अत आह–'भूताभूतविसेसादाणच्चायाभिमुहं यथासंख्यं, यत एवमतः 'अमोहं'ति प्राग्वदिति गाथार्थः ॥ १८४ ॥ अथ केचन ईहोत्तरकालं स्थाणौ व्यतिरेकान्वयाभ्यां निर्णये जायमानेऽपायधारणे व्याचक्षत इत्यतः पूर्वपक्षीकुर्वन्नाह–'केई'त्यादि, 'केई अवायमिच्छंति'त्ति सम्बन्धः, कतममि(दि)त्याह–तस्य–स्थाणोर्योऽन्यो विशेषः–शिरःकण्डूयनादिः तदपनयनमात्रं, तददर्शनमात्रविज्ञानमित्यर्थः, तथा सद्भूतो योऽर्थः विशेषः तत्र वल्ल्युत्सर्पणादिस्तदवधारणं तु धारणां 'ब्रुवते' वदन्ति, केचन इति वर्त्तते, ततश्चावग्रहेहापायावधारणान्येव श्रुतिनिश्रितमतो मतिचातुर्विध्यपूरणेऽन्यः प्रकारो दोष इति गाथार्थः ॥१८५॥ आचार्य आह–'कस्स' इत्यादि गाथा सपादा, तत्र 'न दोसो'त्ति नास्माकं मतिचातुर्विध्यपूरणेऽन्यः प्रकारो दोषः, अपि तु तवैवा-यं, यतः 'सव्वोच्चिय सोऽवाउ'त्ति सर्व एवासौ–अन्वयव्यतिरेकाभ्यां जायमानो निश्चयः अपायः–चतुर्थो मत्यंशो भवति, न पुनस्तत्र धारणाऽपि, यदि नाम 'कस्सइ तदन्नवइरेगमत्तओऽवगमणं भवे भूते' तथा 'सब्भूतसमन्नयतो कस्सइ' तथा कस्यचित्तदुभयत इति सपादगाथार्थः ॥ १८६ ॥ इत्थं चैतदङ्गीकर्त्तव्यमन्यथा 'भेदे वे'त्यादि, भेदे वाऽपायस्येष्यमाणे 'भवन्ति' संपद्यन्ते पञ्च वस्तूनि, आभिनिबोधिकज्ञानस्येति गम्यते, तद्यथा–'उग्गहो ईहा अवायावधारणासतीणि' स्मृतेरप्येतद्भातिकत्वेनापरित्याज्यत्वात्, अविच्युतिस्तु समानकालापाये त्वया प्रक्षिप्तेति भावः, तदेवं बोधितोऽपि मूर्खतया स्वमतमेवास्थाय चोदक आह—'एवं चिय चउहा मतीभवति' यदीयं न त्यज्यते, अत्यक्तव्याचेयं भवत यतस्त्रिधाऽन्यथा भवति, मतिः, किं कारणं ?–अवग्रहेहापायमात्रत्वादेतन्मात्रं त्ववधृतेरयोगात्, इति गाथा-र्थः ॥१८७॥ तथा–'कोऽणु'इत्यादि,इह स्थाणौ स्थाणुतयाऽवगृहीते सत्यन्तर्मुहूर्त्तावोपयोगात् परिभ्रष्टे सति यदाऽनुपयोगः–अस्मरणं भ-

यति तदा 'काऽणुवयोगंमि धिती' धारणा नाम ?, नैव काचिदित्यर्थः, अन्वयमुखोपजायमानमत्ययस्य त्वपायत्वेनैवेष्टत्वादतद्विधेति मन्यते, पुनरुपयोगे भविष्यतीत्येतदपि न, कुतः ? इत्याह–पुनरुपयोगे च सा मतिः यतोऽपाय एव भण्यते 'तो' ततस्तस्मात् कारणान्नास्ति–न विद्यते धृतिः–धारणा, मत्पक्षस्यानभ्युपगम्यमानत्वादन्वयमुखेनोपजायमानायाः खल्वनिष्यमाणत्वादिति पूर्वपक्षः, अत्र 'भण्यते' इति भण्यते उत्तरं 'भेदे या होंति पञ्च वत्थूणि'त्ति व्यवस्थिते इति वाक्यशेषः, किं भण्यते ? इत्याह—'इदं तदेवेति जा बुद्धि'त्ति पूर्वोपलब्धं स्थाण्वादिवस्तु विस्मृतं सत्पुनरध्यवस्यत इदं तदेव प्रागदृष्टमिति या बुद्धिः ॥१८८॥ 'नणु'इत्यादि, ननु सा बुद्धिरेवंभूता अपायादभ्यधिका वर्त्तते, वृत्त्यात् तस्य, ततः किमित्यत आह—'सा धिई नाम'त्ति सा च स्मृत्याख्या धारणा भण्यते, तथा यतश्चासौ स्मृत्याख्या धारणा 'वासनाविशेषात्' प्रत्यक्षीकृतवस्त्वाहितसंस्कारलक्षणादाविर्भवति 'सा धिई नाम'त्ति सा च धारणा भण्यते, वासनारूपेति भावना, तथा या चापायानन्तरमाव्यविच्युतिरन्तर्मुहूर्तकालीया 'सा धितीनामे'ति सा च धारणोच्यते, अविच्युतिरूपेति भावनेति गाथार्थः ॥१८९॥ एवं चेदतः किम् ? 'त'मित्यादि, तामपायाभ्यधिकामिच्छतस्तव उक्तेन प्रकारेण पञ्च वस्तूनि–भेदाः मतिज्ञानस्येति गम्यं भवन्ति, वासनाया आधिक्यात्, न च तान्युक्तानीति, अथ ता नेच्छसि, स्वपक्षस्यैवाभ्युपगम्यमानत्वादिति, अतस्तां नेच्छमाणस्स–अप्पडिवज्जमाणस्स किं होउ सा धारणा अभावो, आहोस्विद् भावः किं चातः ?, न तावदभावो अननुभवप्रसङ्गात् घटादेरप्यभावप्रसङ्गाद् अनुभूयमानत्वात्, भावश्चेत् ज्ञानमज्ञानं वा ? नाज्ञानं बोधात्मकत्वात्, ज्ञानं चेत्पञ्चानां सा कतमदिति वाच्यं ?, न तावदवग्रहादित्रयं साऽनभ्युपगमात्, नापि श्रुतादिचतुष्टयमनभ्युपगमादेव, नापि ज्ञानान्तरमनभ्युपगमादेव, पारिशेष्याद्धारणा सेति गाथार्थः ॥ १९० ॥ तदेवं निरुत्तरीकृतोऽप्यन्येन कारणेन आह—'तुज्झ'मित्यादि, चोदओ भणइ–तुज्झं बहुतरभेदा मती होइ, किं कारणमित्याह–धिइबहुत्ताओ, अवग्गहो ईहा अवायो

व्यञ्जनावग्रहः तस्य ज्ञानत्वं.

अविच्चुति वासणा सुती चेव'त्ति भातेः, षड्विधेत्यर्थः,सूरिराह–भण्यते–न मम जातिभेदो–व्यक्तिभेद इष्टो विवक्षितः, अवग्गहो ईहा अवायोऽवधारणा एव होंति चत्तारी'त्याद्यभ्युपगमात्, 'जहा तुज्झं'ति यथा तव जातिभेद इष्टोऽपायस्य द्वैविध्यकल्पनात् ॥१९१॥तथाहि– 'सा' इत्यादि, 'सा' धृतिर्भिन्नलक्षणाऽपि सती त्रैविध्येन धृतिसामान्याव्यतिरेकादेकैवेत्यनेनैव प्रकारेण चतुर्द्धा मतिरिति, तत्रैत- स्स्यात्–स्मृतिरूपत्वे सति धारणायाः स्मृतेरतीतविषयत्वाद्वा मतेः साम्प्रतकालविषयता विरुध्यत इति, तन्न, तावन्मात्रपरिच्छेदितया वर्तमानवदधिकृत्य प्रवृत्तेः,निर्विषयत्वे चाननुभूतविषयान्तरवदनुत्पत्तिरेवास्याः स्यादिति,अत्राह–किं भिन्नलक्षणमपि सामान्याङ्गीकरणत एकमभिहितं किञ्चिद् ?, उच्यते–अभिहितं, 'जहे'त्यादि, पश्चादर्धं स्पष्टमिति गाथार्थः ॥ १९२ ॥ एतदेव व्याचिख्यासुराह—

तत्थोग्गहो दुरूवो गहणं जं होइ वंजणत्थाणं। वंजणओ य जमत्थो तेणाईए तयं वोच्छं ॥ १९३ ॥

वंजिज्जइ जेणऽत्थो घडोव्व दीवेण वंजणं तं च। उवगरणिंदियसद्दाइपरिणयदव्वसंबंधो ॥ १९४ ॥

अण्णाणं सो बहिराइणं व तक्कालमणुवलंभाओ। न तदंते तत्तो च्चिय उवलंभाओ तओ नाणं ॥ १९५ ॥

तक्कालम्मिवि नाणं तत्थऽत्थि तणुंति तो तमव्वत्तं। बहिराईणं पुण सो अन्नाणं तदुभयाभावा ॥१९६॥

कहमव्वत्तं नाणं च ? सुत्तमत्ताइसुहुमबोहोव्व। सुत्तादओ सयं च्चिय विन्नाणं नावबुज्झंति ॥ १९७ ॥

लक्खिज्जइ तं सिमिणायमाणवयणदाणाइचिट्ठाहिं। जं नामइपुव्वाओ विज्झंते वयणचिट्ठाओ ॥ १९८ ॥

जग्गन्तोऽवि न जाणइ छउमत्थो हिययगोयरं सव्वं। जंतऽज्झवसाणाइं जमसंखेज्जाइं दिवसेणं ॥ १९९ ॥

जइ वण्णाणमसंखेज्जसमयसद्दाइदव्वसम्भावे। किह चरमसमयसद्दाइदव्वविण्णाणसामत्थं ? ॥ २०० ॥

जं सव्वहा न वीसुं सव्वेसुवि तं न रेणुतेल्लं व । पत्तेयमणिच्छंतो कहमिच्छसि समुदए नाणं ? ॥२०१॥
समुदाए जइ णाणं देसूणे समुदए कहं नत्थि ? । समुदाए वाऽभूयं कह देसे होज्ज तं सयलं ? ॥ २०२ ॥
तन्तू पडोवगारी न समत्तपडो य समुदिया ते उ । सव्वे समत्तपडओ तह नाणं सव्वसमएसु ॥२०३॥

'तत्थे'त्यादि, तत्रेत्युपन्यासार्थः, अवग्रहो द्विधैव, अन्यस्य ग्राह्यस्याभावात्, कथमित्यत आह–ग्रहणं यद् भवेद् व्यञ्जनानामर्थानां चेति, षष्ठी पृथक् पृथगभिसम्बध्यते, यतश्च प्राप्यकारिष्विन्द्रियेषु व्यञ्जनतो–व्यञ्जनावग्रहाद् अर्थ इत्यर्थावग्रहो भवति तेनादौ 'तं' व्यञ्जनावग्रहं वक्ष्ये, इति गाथार्थः ॥ १९३ ॥ अथ व्यञ्जनावग्रहनिरुक्तमाह—'वंजिज्जई'त्यादि, व्यज्यतेऽनेनार्थः शब्दलक्षण इति व्यञ्जनम्, क इव केनेत्याह–'घडोव्व दीवेण', 'तं च'त्ति तच्च व्यञ्जनं किमुच्यते ? इत्याह–उपकरणेन्द्रियस्य कदम्बपुष्पाद्याकृतेः शब्दादिपरिणतद्रव्याणां च यः सम्बन्धो–यः अङ्गाङ्गीभावः तयोरुपश्लेष इति भावना, अथवा व्यञ्जनेन–श्रोत्रेन्द्रियेण व्यञ्जनानां–शब्दादिपरिणतद्रव्याणामवग्रहो व्यञ्जनावग्रह इति गाथार्थः ॥ १९४ ॥ तत्रैतत् स्यात्–निर्मूलत एवेदं त्रटयति, किमस्य शब्दार्थनिरूपणया ? इति, आह च—'अन्नाण' मित्यादि, अज्ञानमसौ–व्यञ्जनावग्रहः, तत्कालानुपलम्भात् व्यञ्जनसम्बन्धकालेऽसंवेद्यमानत्वाद् बधिरादीनामिव, उच्यते, न–नैतदेवं, यतः–'तओ नाणं'ति असौ ज्ञानं व्यञ्जनावग्रहः, तदन्ते तज्ज्ञेयवस्तूपादानादेवोपलम्भात्, इह यस्य ज्ञेयवस्तूपादानाद् विज्ञानस्यान्ते तत एवोपलम्भो भवति तद् ज्ञानं दृष्टं, यथाऽर्थावग्रहपर्यन्ते तत एवेहासद्भावादर्थावग्रहो ज्ञानमिति गाथार्थः ॥ १९५ ॥ न च सिद्धो हेतुर्यतः—'तक्कालंमिवि नाण'मित्यादि, 'तत्कालेऽपि' व्यञ्जनसम्बन्धकालेऽपि 'ज्ञानं' अवबोधनं 'तत्र' तस्मिन्ननुपहतेन्द्रिये 'अस्ति' विद्यते, अव्यक्तमिति वाक्यशेषः, अथ कस्माद्व्यक्तं ? इत्यत

व्यञ्जनाव-ग्रहः तस्य ज्ञानत्वं

आह-'तणु'त्ति तनीय इतिकृत्वाऽव्यक्तं-एकतेजोऽवयवप्रकाशवत्, 'तो'त्ति तस्मादसिद्धो हेतुः, दृष्टान्तविप्रतिपत्तिमाह-अत्यन्त-
बधिरोपहतघ्राणादीनां त्वसौ व्यञ्जनोपादानकालः अज्ञानमेवेति, सत्यं, किं कारणमित्याह-तदुभयाभावाद्-अल्पीयस्या अपि विज्ञान-
शक्तेरभावात्, कारणत्वाभावाच्च, काक्वा वा, तवैतत्स्यात् ज्ञानमव्यक्तं चेत्ययुक्तं विरुद्धत्वात् प्रकाशतमोऽभिधानवत् ॥ १९६ ॥
तथा चाह—'कथ'मित्यादि, कथं ज्ञानमव्यक्तं च ?, उच्यते, अनन्तरमेव सहेतुदृष्टान्तस्योक्तत्वात्, अथवा सुप्तमत्तादेः सूक्ष्म-
बोधवत्, तथाहि सुप्तमत्तमूर्च्छितादयः 'सयं चिय'त्ति आत्मनीनमपि विज्ञानं नावबुध्यन्ते-न संविदन्त इति गाथार्थः ॥१९७॥ आह-
एवं तत्तेषां नास्तीति, तन्न, यतः—'लक्खी'त्यादि, लक्ष्यते-अनुमीयते तत्, स्वप्नायमानमापणात्, तथा आह(हु)तवचनचेष्टाभ्यः,
आदिशब्दाज्जङ्घाकण्डूयनादिचेष्टाभ्यः,समस्तपदं चैतत्, कस्मादित्याह-यस्मात् नामतिपूर्वा वाग्दानादिचेष्टाः प्रवर्त्तन्ते, कार्यत्वादग्न्य-
पूर्वकधूमवत्, न च ताः सुप्तो बुद्धो चोपलभत इति गाथार्थः ॥१९८॥ 'जग्गंतोवी'त्यादि, अपिच-जाग्रदपि, आस्तां केवलः सुप्तः,
न जानीते छद्मस्थः 'सर्वम्' अपरिशेषं 'हृदयगोचरं' मनआलम्बनं, छद्मस्थत्वादेव, कस्मादित्याह-यान्यध्यवसानानि-चित्तविशेष-
लक्षणानि केवलिगम्यानि यद्-यस्मादसंख्येयानि-सङ्ख्यातीतानि दिवसेन-एकेनाह्ना,न च तानि न सन्ति,केवलिगम्यत्वादिति, एवं
यदेवमस्तीति गम्यते, कायादिव्यापारतो गम्यमानत्वाद्, इतो व्यञ्जनावग्रहज्ञानमपीति प्रकृतमिति गाथार्थः ॥ १९९ ॥ तदयमत्र
भावनार्थः-प्रथमशब्दपुद्गलप्रवेशसमयादारभ्य विज्ञानशक्तिराविर्भवन्त्यर्थावग्रहज्ञानतामापुष्णाति, अन्यथा तदनुत्पत्तिरेव स्यात्,
तथाहि—'यदि वे'त्यादि, यदि च भवतो व्यञ्जनावग्रहाज्ञानवादिनः असंख्येयसमयप्रविष्टशब्दादिद्रव्यसद्भावे 'अन्नाण'न्ति
असौ अज्ञानं ततः पारिशेष्याच्चरमसमये ज्ञानं, तन्नु किह चरिमसमयपविट्ठसद्दादिदव्वेसु विन्नाणसामत्थमत्थावग्गहसन्निभं श्रोतुः

॥ ८३ ॥

स्यात् ?,न कथञ्चिदित्यर्थः,एतदुक्तं भवति–अर्थावग्रहज्ञानं हि प्रतिसमयासंख्येयसमयप्रविष्टशब्दादिद्रव्यसमूहे वाऽङ्गीक्रियेत चरमसमयमात्रप्रविष्टशब्दादिद्रव्येषु वा ?, किञ्चातः ? ॥ २०० ॥ तत्र परमतमास्थायाऽऽद्यविजिघटयिषयेदं प्राह—'ज'मित्यादि, यद्–वस्तु 'सर्वथा' सर्वप्रकारैः 'ण वीसु'त्ति न पृथक् पृथगिति, सर्वेष्वपि समुदितेषु तन्नास्ति, रेणुतैलवत्, एवं चेदतः प्रत्येकं–प्रतिसमयमनिच्छन् ज्ञानं कथमिच्छसि समुदाये–असंख्येयसमयमीलने ?, तस्मात् तत्प्रत्येकमप्यस्ति तिलतैलवदिति गाथार्थः ॥ २०१ ॥ अपिच समुदायज्ञानवादिन् !—'समु'इत्यादि, यदि प्रत्येकं अभवत् समुदाये ज्ञानमभ्युपेयते ततस्तद्देशोने समुदाये कथं नास्ति ?, अस्त्येवेत्यभिप्रायः, प्रमाणोपपन्नत्वात्, तथा व्यञ्जनादानसमयेष्वपि ज्ञानमस्ति, ज्ञानोपकारिद्रव्योपादानसमयसमुदायैकदेशत्वादर्थावग्रहज्ञानसमय इवेति, चरमं विकल्पमधिकृत्याह–समुदाये चाभवद्विवक्षितं वस्तु कथं 'देशे' चरमसमयलक्षणे 'भवेत्' स्यात् 'सकलम्' अखण्डम् ?, नह्येकदेशाकाशान्निपतति, अंशसमूहत्वात्सकलस्य, नैवेत्यर्थः, कुतः ? प्रमाणोपपत्तिविरोधात्, तथाहि–न चरमसमयोपात्तद्रव्येषु ज्ञानमस्ति, समयमात्रोपात्तत्वात्, भवति च विशेषे पक्षीकृते सामान्यं हेतुरिति न्यायः, व्यञ्जनावग्रहाद्यसमय इवेत्युपलक्षणं, स्यादेतत्–प्रत्यक्षविरोधिनी प्रतिज्ञेति, चरमसमय एव ज्ञानोत्पत्त्यनुभवात्, तन्न, चरमसमय एव समग्रसमयविज्ञानोत्पत्तिप्रतिपत्तिविरोधात्, चरमतन्तौ समस्ततन्तुपटप्रतिपत्तिवत्, अनुमानविरोधश्च व्यञ्जनादानसमयेष्वपि ज्ञानमस्तीति प्रमाणीकृतत्वात् ॥ २०२ ॥ तस्मात्—'तंतू'इत्यादि, तन्तुरेकः पटोपकारी, तमन्तरेण तस्यायोगात्, न समस्तपटः स तन्तुस्तदेकदेशत्वात्, चशब्दान्नाप्यपटः सः, किं तर्हि ?, पटोऽप्यवयवे समुदायोपचारात्, किन्तु समुदितास्ते तन्तवः समस्तपटोऽभिधीयते, मुख्यदार्ष्टान्तिकोपसंहारमाह–तथा ज्ञानं सर्वसमयेषु भावनीयमिति गाथार्थः ॥ २०३ ॥ तदेवं तत्प्रसक्तमथ पर्यायैः, तत्र

व्यञ्जनावग्रहः तस्य ज्ञानत्वं

व्यञ्जनावग्रहो व्यञ्जनोपादानं कारणमिति पर्यायः ।

नयणमणोवज्जिंदियभेयाओ वंजणोग्गहो चउहा । उवघायाणुग्गहओ जं ताइं पत्तकारीणि ॥ २०४ ॥
जुज्जइ पत्तविसयया फरिसणरसणे न सोत्तघाणेसु । गिण्हंति सविसयमियं जं ताइं भिन्नदेसंपि ॥२०५॥
पावंति सद्दगन्धा ताइं गंतुं सयं न गिण्हन्ति । जं ते पोग्गलमइया सक्किरिया वाउवहणाओ ॥२०६॥
धूमो व्व संहरणओ दाराणुविहाणओ विसेसेणं । तोयं व नियंबाइसु पडिघायाओ य वाउव्व ॥२०७॥
गेण्हंति पत्तमत्थं उवघायाणुग्गहोवलद्धीओ । बाहिज्जपूइनासारिसादओ कहमसंबद्धे ? ॥२०८॥
लोयणमपत्तविसयं मणोव्व जमणुग्गहाइसुण्णंति । जलसूरालोयाइसु दीसंति अणुग्गहविघाया ॥२०९॥
डज्झेज्ज पाविउं रविकराइणा फरिसणं व को दोसो ? । मणणेज्ज अणुग्गहंपिव उवघायाभावओ सोम्मे ॥२१०॥
गंतुं न रूवदेसं पासइ पत्तं सयं व नियमोऽयं । पत्तेण उ मुत्तिमया उवघायाणुग्गहा होज्जा ॥२११॥
जइ पत्तं गेण्हेज्ज उ तग्गयमंजणरओमलाईयं । पेच्छेज्ज जं न पासइ अपत्तकारिं तओ चक्खुं ॥२१२॥
गंतुं नेएण मणो संवज्झइ जग्गओ व सिमिणे वा । सिद्धमिदं लोयम्मिवि अमुगत्थ गओ मणो मेत्ति ॥२१३॥
नाणुग्गहोवघायाभावाओ लोयणं व सो इहरा । तोयजलणाइचिन्तणकाले जुज्जेज्ज दोहिंपि ॥२१४॥
दव्वं भावमणो वा वएज्ज ?, जीवो य होइ भावमणो । देहव्वावित्तणओ न देहयाहिं तओ जुत्तो ॥२१५॥
सव्वगउत्ति य बुद्धी कत्ताभावाइदोसओ तं ण । सव्वासव्वग्गहणप्पसंगदोसाइओ चावि ॥२१६॥

दव्वमणो विण्णाया न होइ गंतुं च किं तओ कुणउ ?। अह करणभावओ तस्स तेण जीवो वियाणेज्जा ॥२१७॥
करणत्तणओ तणुसंठिएण जाणिज्ज फरिसणेणं व । एतोच्चिय हेउओ न नीइ बाहिं फरिसणं व ॥२१८॥
नज्जइ उवघाओ से दोवल्लोरक्खयाइ लिंगेहिं । जमणुग्गहो य हरिसाइएहिं तो सो उभयधम्मो ॥२१९॥
जइ दव्वमणोऽतियली पीलिज्जा हिदिनिरुद्धवाउव्व। तयणुग्गहेण हरिसादउ व्व नेयस्स किं तत्थ ? ॥२२०॥
इट्ठाणिट्ठाहारब्भवहारे होन्ति पुट्ठिहाणीओ । जह तह मणसो ताओ पोग्गलगुणउत्ति को दोसो ? ॥२२१॥
नीउं आगसिउं वा न नेयमालंबइत्ति नियमोऽयं । तण्णेयकया जेऽणुग्गहोवघाया य ते नत्थि ॥२२२॥
सो पुण सयमुवघायणमणुग्गहं वा करेज्ज को दोसो ?। जमणुग्गहोवघाया जीवाणं पोग्गलेहिंतो ॥२२३॥
सुमिणो न तहारूवो वभिचाराओ अलायचक्कं व । वभिचारो य सदंसणमुवघायाणुग्गहाभावा ॥२२४॥
इह पासुत्तो पेच्छइ सदेहमन्नत्थ न य तओ तत्थ । न य तग्गयोवघायाणुग्गहरूवं विबुद्धस्स ॥२२५॥
दीसंति कासइ फुडं हरिसविसादादयो विबुद्धस्स । सिमिणाणुभूयसुहदुक्खरागदोसाइलिंगाइं ॥२२६॥
न सिमिणविण्णाणाओ हरिसविसासादयो विरुज्झंति। किरियाफलं तु तित्तीमदवहयंधादओ नत्थि॥२२७॥
सिमिणेऽवि सुरयसंगमकिरियासंजणियवंजणविसग्गो। पडिबुद्धस्सवि कस्सइ दीसइ सिमिणाणुभूइफलं।२२८।
सो अज्झवसाणकओ जागरओऽवि जह तिव्वमोहस्स। तिव्वज्झवसाणाओ होइ विसग्गो तहा सुमिणे।२२९।
सुरयपडिवत्तिरइसुहगब्भाहाणाइ इहरहा होज्जा। सुमिण समागम(य)जुवईएँ न य जओ ताइं तो विफला २३०

नणु सिमिणओऽवि कोई सच्चफलो फलइ जो जहा दिट्ठो। ननु सिमिणम्मि निसिद्धं किरिया किरियाफलाइं च॥२३१॥
जं पुण विण्णाणं तप्फलं च सिमिणे विबुद्धमेत्तस्स। सिमिणयनिमित्तभावं फलं च तं को निवारेइ ? ॥२३२॥
देहप्फुरणं सहसोइयं च सिमिणो य काइयाईणि। सगयाइं निमित्ताइं सुभासुभफलं निवेएंति ॥२३३॥
सिमिणमिव मन्नमाणस्स थीणगिद्धिस्स वंजणोग्गहया। होज्ज व न उ सा मणसो सा खलु सोइंदियाईणं ॥२३४॥
पोग्गल-मोयग-दन्ते फरुसग-वडसालभंजणे चेव। थीणद्धियस्स एए आहरणा होंति नायव्वा ॥२३५॥
जह देहत्थं चक्खुं जंपइ चेवं गयंति न य सच्चं। रूढं मणसोवि तहा न य रूढी सच्चिया सव्वा ॥२३६॥
विसयमसंपत्तस्सवि संविज्जइ वंजणोग्गहो मणसो। जमसंखेज्जसमइओ उवओगो जं च सव्वेसु ॥२३७॥
समएसु मणोदव्वाइं गिण्हए वंजणं च दव्वाइं। भणियं संबंधो वा तेण लयं जुज्जए मणसो ॥२३८॥
देहादणिग्गयस्सवि सकायहिययाइयं विचिंतयओ। नेयस्सवि संबंधे वंजणमेवंपि से जुत्तं ॥२३९॥
गिज्झस्स वंजणाणं जं गहणं वंजणोग्गहो स मओ। गहणं मणो न गिज्झं, को भागो वंजणे तस्स ? ॥२४०॥
तद्देसचिन्तणे होज्ज वंजणं जइ तओ न समयम्मि। पढमे चेव तमत्थं गेण्हेज्ज न वंजणं तम्हा ॥२४१॥
समए समए गिण्हइ दव्वाइं जेण मुणइ य तमत्थं। जं चिंदिओपयोगेऽवि वंजणावग्गहेऽतीते ॥२४२॥
होइ मणोवावारो पढमाओ चेव तेण समयाओ। होइ तदत्थग्गहणं तदणणहा न प्पवत्तेज्जा ॥२४३॥
नेयाउ चिय जं सो लहइ सरूवं पईवसद्द व्व। तेणाजुत्तं तस्सासंकप्पियवंजणग्गहणं ॥२४४॥

'णयणे'त्यादि । नयनमनसी वर्जयित्वा व्यञ्जनावग्रहश्चतुर्धा, 'तंजहा–फासिंदियवंजणोग्गहे जिब्भिदिय० घाणिंदिय० सोइंदियवंजणोग्गहे' इन्द्रियत्वे तुल्ये केयं मुखपरीक्षिका ? इति चेत्, उच्यते, 'उवघायाणुग्गहतो' यद्–यस्मात्तानि–स्पर्शनादीनि 'प्राप्यकारीणि' स्पृष्टार्थग्राहिणीति गाथार्थः ॥२०४॥ अत्राह–'जुज्जती'त्यादि । स्पर्शनरसनयोः सा युज्यते, अनुभाविकत्वात्, न श्रोत्रघ्राणयोः, गृह्णीतः स्वविषयं–आत्मीयं ग्राह्यमितं–अस्मादिन्द्रियविवराद् 'भिन्नदेशमपि' विप्रकृष्टक्षेत्रव्यवस्थितमपि, दूरे ध्वनिः श्रूयत इति वचनात्, अतः किमुच्यते–'वंजणोग्गहो चउह'त्ति गाथार्थः ॥२०५॥ उच्यते नैतद्, उद्भ्रान्तत्वाद् भवतः, तथाहि–'पावंती'त्यादि । 'धूमो' इत्यादि । इह शब्दगन्धावन्यत आगत्य प्राप्नुतः, के ? ते–श्रोत्रघ्राणे कर्मणी, ते तु श्रोत्रघ्राणे गत्वा विषयदेशं स्वयं न गृह्णीतः तेन ते अप्राप्यकारिणी स्यातां, अबाह्यकारणत्वात् स्पर्शनवत्, आह–तावपि कस्मात् न प्राप्नुतः ? इत्यत–आह–यद्–यस्मात्तौ पुद्गलमयत्वे सति सक्रियौ, कुत एतदित्याह–वायुवहनाद् धूमवत्, तथा सक्रियौ तौ 'संहरणतो'त्ति गृहादिषु पिण्डीभवनाद् धूमवदेव, तथा द्वारानुविधानतो विशेषेण, तोयवत्, तथा नितम्बादिमस्खलनात् मरुद्वदिति गाथाद्वयार्थः ॥ २०६ ॥ २०७ ॥ तस्मात्—'गेण्हंती'त्यादि, श्रोत्रघ्राणे प्राप्तं सन्तमर्थं गृह्णीतः, उपघातानुग्रहोपलब्धेः, स्पर्शनरसने इव, आह–अप्राप्यकारित्वे सतीयं भविष्यतीत्यनैकान्तिको हेतुरिति, तन्न, यतः—'बाहिज्जे'त्यादि, प्रतिज्ञा, रोगहेतुत्वात् आकाशवदिति, अतो यदुक्तं 'नयणे'त्यादि तत्स्थितमिति गाथार्थः ॥२०८॥ अथ कस्मादयं न षोढा ?, उच्यते, नयनमनसोरप्राप्यकारित्वेन व्यञ्जनोपादानायोगाद्, आह च–'लोयण'मित्यादि ॥ 'लोयण'मित्यादि, अप्राप्यकारि लोचनमालम्ब्यकृतोपघातानुग्रहशून्यत्वात् मनोवत्, तत्रैतत्स्याद्–असिद्धो हेतुर्यतः जलघृतवनस्पतीन्दुमण्डलालोकनेऽनुग्रह उपलभ्यते सूरसितभित्त्याद्यालोकने चोपघात इति गाथार्थः ॥२०९॥ तदेवमसिद्धीभूते

हेतावाचार्य आह—'डज्झेज्ज'इत्यादि ॥ चक्षू रविकरादिना पुद्गलधर्मेण 'प्राप्य' आश्लिष्य 'दह्येत' भस्मीक्रियेत विह्वलीक्रियेत वा स्पर्शनमिवान्वयस्यैव दृष्टान्तः, इत्यतः को दोषो ?, नैव कश्चिद्, दृष्टस्य बाधितुमशक्यत्वात्, तथा मन्येतानुग्रहमपि चक्षुः स्पर्शनवदुपघाताभावात् सौम्ये जलघृतवनस्पतीन्द्वालोकने सति, अत्रापि को दोषः ? ॥ २१० ॥ काममेतत्, किन्तु—'गंतु' मित्यादि । इह हि चक्षुरुत्प्लुत्य-गत्वा रूपदेशमादित्यमण्डलादिलाञ्छितं न पश्यति—नादत्ते, किं ?, रूपमेवेति गम्यते अन्यस्याश्रुतत्वात्, तथा—'पत्तं सयं व' त्ति स्वयं वाऽन्यतः स्वतन्त्रतया आगतं तद्रूपं चक्षुर्न गृह्णात्यञ्जनादिभिर्व्यभिचारात्, श्रोत्रेन्द्रियं शब्दमिव, नियमोऽयमिति—एतदत्र नियम्यते वाचो युक्त्या, काक्वा पच्छद्धमाह—'पत्तेण उ' चक्षुर्देशे 'मुत्तिमया' रविकरादिना 'उपघातानुग्रहौ' परितापाह्लादौ भवेतां—स्यातां एतत्स्वभावत्वात् पुद्गलानां, वनस्पत्यादयस्तु दूरस्था एव गृह्यन्त इति गाथार्थः ॥ २११ ॥ अपिच—'जती' त्यादि । यदि तु प्राप्तं सन्तमर्थमक्षि गृह्णीयात्—ततस्तद्गतं रजोमलाद्यपि गृह्णीयात्, तस्यैव परमार्थप्राप्तेः, यतश्च न पश्यत्यत इदमप्राप्यकारीति गाथार्थः ॥२१२॥ तत्रेतरस्यात्—प्राप्यकारि चक्षुः आवरणात् स्पर्शनवत्, न, मनसाऽनैकान्तिकत्वात्, अप्राप्यकारि चक्षुरावरणान्मनोवत्, तथा च मनः खल्वप्राप्यकारि भाविसिद्धया विषादिभिश्चाध्रियत इति, रूपावरणेऽपि ह्यग्राहकं चक्षुर्बाह्यानुग्रहाभावान्मनोवत्, तथाहि—मनोऽप्राप्यकारित्वे सत्यपि ऐन्द्रियकेषु न क्वचिदनुप्रवर्त्तत इति, इन्द्रियानुग्रहशून्यं सदिति, यस्य चाभिप्रायः खल्वप्राप्यकारिणा चक्षुषा बाह्यानुग्रहनिरपेक्षेणाप्यनुवर्तितव्यं तस्य मनसाऽपीन्द्रियैः प्रकाशितेष्वप्रकाशितेषु वा विशेषेण सर्वार्थेष्वनुप्रवर्त्तितव्यम्, न चानुप्रवर्त्ततेऽत्यन्तमदृष्टाश्रुतादिष्विति । अथ द्वितीयश्चोदक आह—न चक्षुष इव मनसः अप्राप्यकारिता, ततो हेतुशुद्धावपि न न्यायः प्राक् साधनं, साध्यविकलत्वाद् दृष्टान्तस्य, तथा च—'गंतु' मित्यादि । इह देहाद् 'गन्तुं' निर्ग-

नयनमनसोरप्राप्यकारिता

॥ ८९ ॥

'णयणे'त्यादि । नयनमनसी वर्जयित्वा व्यञ्जनावग्रहश्चतुर्धा,'वंजहा-फासिंदियवंजणोग्गहे जिब्भिंदिय० घाणिंदिय० सोइंदियवंजणोग्गहे' इन्द्रियत्वे तुल्ये केयं मुखपरीक्षिका ? इति चेत्, उच्यते, 'उवघायाणुग्गहतो' यद्-यस्मात्तानि-स्पर्शनादीनि 'प्राप्यकारीणि' स्पृष्टार्थग्राहिणीति गाथार्थः ॥२०४॥ अत्राह-'जुज्जती'त्यादि । स्पर्शनरसनयोः सा युज्यते, अनुभाविकत्वात्, न श्रोत्रघ्राणयोः, गृह्णीतः स्वविषयं-आत्मीयं ग्राह्यमितं-अस्मादिन्द्रियविवराद् 'भिन्नदेशमपि' विप्रकृष्टक्षेत्रव्यवस्थितमपि, दूरे ध्वनिः श्रूयत इति वचनात्, अतः किमुच्यते-'वंजणोग्गहो चउह'त्ति गाथार्थः ॥२०५॥ उच्यते नैतद्, उद्भ्रान्तत्वाद् भवतः, तथाहि-'पावंती'त्यादि । 'धूमो' इत्यादि । इह शब्दगन्धावन्यत आगत्य प्राप्नुतः, के ? ते-श्रोत्रघ्राणे कर्मणी, ते तु श्रोत्रघ्राणे गत्वा विषयदेशं स्वयं न गृह्णीतः तेन ते अप्राप्यकारिणी स्यातां, अबाह्यकारणत्वात् स्पर्शनवत्, आह-तावपि कस्मात् न प्राप्नुतः ? इत्यत, आह-यद्-यस्मात्तौ पुद्गलमयत्वे सति सक्रियौ, कुत एतदित्याह-वायुवहनाद् धूमवत्, तथा सक्रियौ तौ 'संहरणतो'त्ति गृहादिषु पिण्डीभवनाद् धूमवदेव, तथा द्वारानुविधानतो विशेषेण, तोयवत्, तथा नितम्बादिप्रस्खलनात् मरुद्वदिति गाथाद्वयार्थः ॥ २०६ ॥ २०७ ॥ तस्मात्—'गेण्हंती'त्यादि, श्रोत्रघ्राणे प्राप्तं सन्तमर्थं गृह्णीतः, उपघातानुग्रहोपलब्धेः, स्पर्शनरसने इव, आह-अप्राप्यकारित्वे सतीयं भविष्यतीत्यनैकान्तिको हेतुरिति, तन्न, यतः—'बाहिज्जे'त्यादि, प्रतिज्ञा, रोगहेतुत्वात् आकाशवदिति, अतो यदुक्तं 'णयणे'त्यादि तत्स्थितमिति गाथार्थः ॥२०८॥ अथ कस्मादयं न षोढा ?, उच्यते, नयनमनसोरप्राप्यकारित्वेन व्यञ्जनोपादानायोगाद्, आह च-'लोयण'मित्यादि ॥ 'लोयण'मित्यादि,अप्राप्यकारि लोचनमालम्ब्यकृतोपघातानुग्रहशून्यत्वात् मनोवद्,तत्रैतत्स्याद्-असिद्धो हेतुर्यतः जलघृतवनस्पतीन्दुमण्डलालोकनेऽनुग्रह उपलभ्यते सूरसितभित्त्याद्यालोकने चोपघात इति गाथार्थः ॥२०९॥ तदेवमसिद्धीभूते

नयनमनसोरप्राप्यकारिता



हेतावाचार्य आह—'डज्झेज्ज'इत्यादि ॥ चक्षू रविकरादिना पुद्गलधर्मेण 'प्राप्य' आश्लिष्य 'दहेत' भस्मीक्रियेत विह्वलीक्रियेत वा स्पर्शनमिवान्यथास्यैव दृष्टान्तः, इत्यतः को दोषो ?, नैव कश्चिद्, दृष्टस बाधितुमशक्यत्वात्, तथा मन्येतानुग्रहमपि चक्षुः स्पर्शनवदुपघाताभावात् सौम्ये जलघृतवनस्पतीन्द्वालोकने सति, अत्रापि को दोषः ? ॥ २१० ॥ काममेतत्, किन्तु—'गंतु' मित्यादि । इह हि चक्षुरुत्प्लुत्य-गत्वा रूपदेशमादित्यमण्डलादिलाञ्छितं न पश्यति-नादत्ते, किं ?, रूपमेवेति गम्यते अन्यस्याश्रुतत्वात्, तथा—'पत्तं सयं च' त्ति स्वयं वाऽन्यतः स्वतन्त्रतया आगतं तद्रूपं चक्षुर्न गृह्णात्यञ्जनादिभिर्व्यभिचारात्, श्रोत्रेन्द्रियं शब्दमिव, नियमोऽयमिति-एतदत्र नियम्यते वाचो युक्त्या, कात्स्या पच्छद्धमाह—'पत्तेण उ' चक्षुर्देशे 'मुत्तिमया' रविकरादिना 'उपघातानुग्रहौ' परितापाह्लादौ भवेतां-स्यातां एतत्स्वभावत्वात् पुद्गलानां, वनस्पत्यादयस्तु दूरस्था एव गृह्यन्त इति गाथार्थः ॥ २११ ॥ अपिच—'जती' त्यादि । यदि तु प्राप्तं सन्तमर्थमक्षि गृह्णीयात्-ततस्तद्गतं रजोमलाद्यपि गृह्णीयात्, तस्यैव परमार्थप्राप्तेः, यतश्च न पश्यत्यत इदमप्राप्यकारीति गाथार्थः ॥२१२॥ तत्रैतत्स्यात्—प्राप्यकारि चक्षुः आवरणात् स्पर्शनवत्, न, मनसाऽनैकान्तिकत्वात्, अप्राप्यकारि चक्षुरावरणान्मनोवत्, तथा च मनः खल्वप्राप्यकारि माविसिद्धया विषादिभिर्म्रियत इति, रूपान्तरेऽपि ह्यग्राहकं चक्षुर्बाह्यानुग्रहाभावान्मनोवत्, तथाहि—मनोऽप्राप्यकारित्वे सत्यपि ऐन्द्रियकेषु न क्वचिदनुप्रवर्त्तत इति, इन्द्रियानुग्रहशून्यं सदिति, यस्य चाभिप्रायः खल्वप्राप्यकारिणा चक्षुषा बाह्यानुग्रहनिरपेक्षेणाप्यनुवर्त्तितव्यं तस्य मनसाऽपीन्द्रियैः प्रकाशितेष्वप्रकाशितेषु वा विशेषेण सर्वार्थेष्वनुप्रवर्त्तितव्यम्, न चानुप्रवर्त्ततेऽत्यन्तमदृष्टाश्रुतादिष्विति । अथ द्वितीयश्चोदक आह—न चक्षुष इव मनसः अप्राप्यकारिता, ततो हेतुशुद्धावपि न न्यायः प्राक् साधनं, साध्यविकलत्वाद् दृष्टान्तस्य, तथा च—'गंतु' मित्यादि । इह देहाद् 'गन्तुं' निर्ग-

त्य 'ज्ञेयेन' मेरुशिखरस्थप्रतिमादिना 'मनः' अन्तःकरणं 'सम्बध्यते' आश्लेषमाप्नोति, कदेत्याह—जाग्रतो वा स्वप्ने वाऽनुभवसिद्धत्वात्, न चैतन्ममैव सिद्धं, यतः सिद्धमिदं लोकेऽपि, यत एवं वक्तारो भवन्ति—अमुत्र मे मनो गतमिति गाथार्थः ॥२१३॥ तत्र साधनगाथाह—'नाणुग्गहो'इत्यादि । नैतदेवं—न मनो बहिर्निस्सरति, आलम्ब्यकृतानुग्रहोपघाताभावात् लोचनवदिति, एवं चैतत् 'सो हुज्ज'त्ति तद् मनोऽन्यथा—प्राप्यकारितायां सत्यां तोयज्वलनावालम्ब्य चिन्तनकाले युज्येत द्वाभ्यामपि—तापाह्लादाभ्यां, विपर्येण सम्बद्धत्वात्, स्पर्शनादिवदिति गाथार्थः ॥ २१४ ॥ अत्र हेत्वसिद्धेश्चोदनामुत्पश्यन्नपि सूरिरपान्तराल एवेदं विकल्पद्वयमाह—'दव्व' मित्यादि । द्रव्यमनो वा व्रजेत्—मेरुशिखरस्थजिनप्रतिमालम्बनार्थं यायात् भवतः, भावमनो वा ?, ततः किमिति चेत्, अत आह—जीव एव भावमनो भवति, मनःक्रियापरिणामापन्नत्वात्, अमुमेवाश्रित्याह—'देहव्यापित्वाद्' देहिमात्रवृत्तित्वात् न देहाद् बहिर्मेरुशिखरादावपि तत्र 'जुत्तो' तद् भावमनो युक्तं, प्रयोगः—जीवः शरीराद् बहिर्नास्ति अत्रैव तद्गुणोपलब्धेः शरीरसत्त्ववदिति गाथार्थः ॥२१५॥ अत्रापान्तराले पराभिप्रायमाह—'सव्व' इत्यादि । स्याद् बुद्धिः—नभोवत् सर्वगतोऽयमात्मा, न देहव्यापी, अमूर्त्तत्वादाकाशवदिति, आचार्य आह—'तं ण'त्ति तदेतन्न युक्त्या घटते, कुत इत्याह—कर्त्रभावादिदोषत इति, कर्त्तुरभावः कर्त्रभावः स आदिर्यस्य स कर्त्रभावादिः कर्त्रभावादिश्चासौ दोषश्चेति कर्त्रभावादिदोषस्तस्मात्, अयमत्र भावार्थः—यद्येवं न तर्ह्ययमात्मा कर्त्ता, सर्वगतत्वादाकाशवदेव, न ह्यभ्युपगमा एव बाधायै भवन्ति, हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गं सावयवं परतन्त्रं व्यक्तं, विपरीतमव्यक्तमित्यतो निष्क्रियत्वादकर्त्तैवेति चेत् तन्न, तदकर्तृत्वे भोक्तृत्वानुपपत्तेः, भोक्तृत्वस्य चेष्टत्वात्, प्रकृतिकृतं भोक्ष्यते 'प्रकृतिः करोति पुरुषो भुङ्क्ते' इति वचनादिति चेत्, तन्न, अचेतनस्य कर्तृत्वानुपपत्तेर्घटादिभिरतिप्रसङ्गात्, अचेतना च प्रकृतिः 'चैत-

न्यं पुरुषस्य स्वं रूप'मिति वचनाद्,अतोऽवश्यं भोक्तृत्वात् स्वयमात्मा कर्तेत्यभ्युपगन्तव्यं, तच्च सर्वगतत्वे सत्युक्तवन्नोपपद्यत इति प्रकरणार्थः, आदिशब्दात्सुखदुःखसंसारादिर्न भवति सर्वगतत्वादाकाशवद्, एवमादि स्वधियोत्प्रेक्षणीयमिति, आह-किमेतावन्मात्रदोषत एवैतद् आहोस्विदन्यतोऽपीत्यत आह-सर्वग्रहणप्रसङ्गदोषतो वा, अस्यायमर्थः-भावमनसः प्राप्यग्राहकत्वाभ्युपगमात् सर्वगतत्वेन च सकलत्रैलोक्यव्यापित्वाद् अतः सर्वपदार्थग्रहणप्रसङ्गतः सर्वस्य सर्वज्ञताप्राप्तिदोषः, सर्वस्य सर्वगतत्वेन सर्वप्राप्तत्वात् प्राप्यग्राहित्वाभ्युपगमाच्च, न चेत् प्राप्तमपि तत्सर्वं गृह्णात्युक्तदोषादत उच्यते-'सव्वग्गहणपसंगदोसातिओ व' त्ति, कोऽर्थः ?, किञ्चिदपि मा गृह्णीयात् प्राप्तत्वात् सकलत्रैलोक्यवत्, प्राप्तत्वे तुल्ये सत्येकं न गृह्णात्यपरं तु गृह्णातीति व्यक्तमीश्वरचेष्टितं, आदिशब्दात् सर्वासर्वदर्शनप्रसङ्गदोषतश्चेति सम्बध्यते, तन्नेति वर्त्तत इति गाथार्थः ॥२१६॥ यद्येवं द्रव्यमनस्तर्हि यास्यतीत्यत आह-'दव्व' इत्यादि । द्रव्यमनो विज्ञात् न भवति-द्रव्यमन आलम्बकं न भवति, पुद्गलमयत्वात्, पाषाणवत्, अतो गत्वाऽपि किं तत्करोतु ?, तस्मिन् मेरुशिखरजिनप्रतिमासन्निधाविति गम्यते, नहि तत्तत्र गतं सद् भगवन्तं स्तुतिस्तोत्रादिभिः स्तौति जडत्वाच्चिन्तामणिरिवेति, तस्मान्न भावमनसो द्रव्यमनसश्च पद्मनालतन्तुन्यायेन निर्गम इति । अत्र पराभिप्रायमाह—अथ मन्यसे करणभावतः—करणत्वात्कारणात् तस्य-द्रव्यमनसः तेन—द्रव्यमनसा जीवो'जानीयाद्' अवबुध्येत मेरोः शिरसि जिनप्रतिमाभिषेको वर्त्तते इति, प्रयोगः—आत्मा बहिर्निर्गतेन मनसा जानाति करणत्वात् प्रदीपवत्, इति गाथार्थः ॥ २१७ ॥ उच्यते-यद्येवं ततः—'करण'इत्यादि, करणत्वात् 'तनुसंस्थितेन' देहादबहिर्भूतेन जानीयात् स्पर्शनेनेव, अबाह्यकरणत्वान्मनसोऽपीति भावना, अत एव करणत्वादिति हेतोर्न निस्सरति देहाद्बहिर्मेरुशिखरादिं प्रति स्पर्शनेन्द्रियवत्, प्रदीपस्तु बाह्यकरणमिति गाथार्थः ॥ २१८ ॥ तामिदानीं हेत्व-

(तस्येदानीं हेतोर)सिद्धिमाह—'नज्जती'त्यादि, 'ज्ञायते' अनुमीयते 'उपघातः' उपद्रवः 'से' तस्य द्रव्यमनसः, कैरित्याह—दौर्बल्योरःक्षतादिलिङ्गैः, आदिशब्दादतिचिन्ताप्रसक्तिः परिगृह्यते, यद्—यस्मादनुग्रहश्च हर्षादिभिर्यस्मात्तेन ततः, 'सो' तत् द्रव्यमन उभयधर्म्मकमतः 'अणुग्गहोवघाताभावाउ'त्ति हेतुरसिद्धो वर्त्तत इति गाथार्थः ॥ २१९ ॥ अमुं परिजिहीर्षुराह—'जती'त्यादि, यदि द्रव्यमनो—मनस्त्वपरिणतद्रव्यपिण्डोऽनिष्टपुद्गलोपचितत्वेन अतिघलि सत् 'पीडयेत्' अभिहन्यादितिसामर्थ्याद् गम्यते, क इव ?, हृदि निरुद्धवायुवत्—हृद्देशावरुद्धकक्खडमरुद्ग्रन्थिवदित्यर्थः, तथा 'तदनुग्रहेण' इष्टातिप्रचितपुद्गलसम्भारानुग्रहेण हर्षादयो—हर्षप्रमोदाह्लादादयो वा, यदि ततः ज्ञेयस्य—मेरुशिखरस्थप्रतिमादिलक्षणस्य किं तत्रायातं ?, येनोच्यते—तदनेनालम्ब्यते, ननूक्तं 'दव्वं भावमणो वा पजेज्जत्ती'त्येवमादि नेमावस्य तत्कृतौ, श्रोत्रेन्द्रियस्येव ध्वनिनेति, पुरुषस्यानेन तौ, न त्वस्य तौ तेनेति—भावेनेति गाथार्थः ॥ २२० ॥ अमुमेवार्थं भावयन्नाह—'इट्टे'त्यादि, इष्टो—देवलोकादिः अनिष्टो—नरकगत्यादिगतस्ततश्च इष्टानिष्टाहाराभ्यवहारात् भवतः पुष्टिहानी 'यथा' येन प्रकारेण देवनारकादेर्भोक्तुरिति वाक्यशेषः, 'तथा' तेन प्रकारेण मन्तुरिति सामर्थ्याद् गम्यते 'मनसः' सकाशात् 'ते' पुष्टिहानी उक्तेन प्रकारेण, किं कारणमित्याह—पुद्गलगुणत्वात् तस्य, 'जमणुग्गहोवघाया जीवाणं पोग्गलेहिंतो'त्ति वक्ष्यमाणत्वात्, कथं पुनरिदं द्रव्यमनो गम्यते ? इति चेत्, उच्यते—अमुत एव—मन्तुस्तापाह्लादोपलब्धेरिति गाथार्थः ॥ २२१ ॥ तस्मात्—'नीउ'मित्यादि, इदं द्रव्यमनो देहान्निर्गत्य आक्रम्य वा न ज्ञेयं—मेर्वादिशिखरस्थं 'आलम्बते' गृह्णाति, इति नियम एवायं—एतावन्नियम्यत इत्युक्तं भवति, प्राप्यकारीदं न भवतीत्यर्थः, किमेतावदेव ?, नेत्याह—तच्च तत् ज्ञेयं यत्तदनेनालम्ब्यते तेन यौ कृतौ अनुग्रहोपघातौ तौ न स्त इति नियम्यत इति गाथार्थः ॥ २२२ ॥ कः पुनर्विधिः ? इत्याह—'सो पुणे'त्यादि, तत्पुनः द्रव्यमनः

कर्मवशगस्य जन्तोः कथञ्चित्स्वयमुच्छूनावस्थीभवदुपघातमनुग्रहं च कुर्यात्, अनुभवसिद्धमेतत् जीवानाम् एतत्पुद्गलभावभावित्वादिति गाथार्थः ॥ २२३ ॥ साम्प्रतं यदुक्तं पूर्वपक्षगाथायां 'सुमिणे व'त्ति तदपाकुर्वन्नाह—'सुमिणो'इत्यादि । 'स्वप्नः' प्रसुप्तावस्थाविशेषः, न तथारूपो—न परमार्थस्तथा यथोपलभ्यते, किं कारणमित्याह—व्यभिचाराद्—विसंवादात्, किं वत्? इत्याह—अलातचक्रवद्, यथा हि' अलातमाशुसञ्चारित्वेन भिन्नदेशावगाह्यप्यभिन्नदेशावगाहनभ्रान्त्या चक्रमिवोपलभ्यमानं भ्रान्तिमद् भ्रमणोपरतौ न किञ्चित् स्वभावस्थत्वाद्, एवं सुप्तावस्थायां मनस्तथोपलभते, तद्विरमे च तत्सर्वमिन्द्रजालप्रतिममितिकृत्वा त एव दासास्त एव च मेढका इति, न चासिद्धो हेतुर्यत आह—व्यभिचारश्च स्वप्नस्य 'सदंसण'त्ति स्वात्मनोऽन्यत्र मेरुशिखरादौ दर्शनात्, स तत्रैव गत आसीदिति चेत्, न, इह व्यवस्थितैरिहैवोपलभ्यमानत्वात्, द्वयोश्चात्मनोरसंभवात्, प्रबुद्धस्येदानीं व्यभिचारमाह—उपघातानुग्रहाभावाच्च—अध्वानजनितखेदाद्यभावादिति गाथार्थः ॥२२४॥ आह च—'इहे' त्यादि, गतार्था, नवरं तद्गतमित्यध्वानगतमित्यादि भावनीयं, तस्मादसत्या स्वप्ने मनःक्रियेति गाथार्थः ॥ २२५ ॥ आह चोदकः—किं नेयमस्य उत्थितस्याप्युतः फलदर्शनात्, तथाहि—'दीसंति'त्यादि, 'दृश्यन्ते' उपलभ्यन्ते कस्यचित्स्वप्नद्रष्टुः, न सर्वस्य, 'स्फुटं' स्पष्टं, के? इत्यत आह—'हर्षविषादादयः' तत्र हर्षः—सुलब्धं ममाद्यजन्मेति प्रमोदः अहमस्मिन् संसारे अलब्धजन्मेति विषादः, आदिशब्दादुन्मादग्रहमाध्यस्थ्यानि परिगृह्यन्ते, किंविशिष्टस्य सतः? इत्याह—'विबुद्धस्य' सुप्तोत्थितस्य सतः, किंविशिष्टस? इत्याह—स्वप्नानुभूतयोः सुखदुःखयो रागद्वेषादौ यानि 'लिङ्गानि' तच्चिह्नानि, तथा चानुभवः—"स्वप्ने दृष्टो मयाऽद्य त्रिभुवनमहितः पार्श्वनाथः शिशुत्वे, द्वात्रिंशद्भिः सुरेन्द्रैरहमहमिकया स्नाप्यमानः सुमेरौ । तस्मान्मत्तोऽपि धन्यं नयनयुगमिदं येन साक्षात् स दृष्टो, द्रष्टव्यो यो महीयानपहरति भयं देहिनां संस्मृतोऽपि ॥ १ ॥" इति हर्षः "प्राकारत्रय-

तुङ्गतोरणमणिप्रेङ्खत्प्रभाभ्याहता, नष्टाः क्वापि रवेः करा द्रुततरं यस्यां प्रचण्डा अपि। तां त्रैलोक्यगुरोः सुरेश्वरवतीमास्थायिकामेदिनीं, हा! यावत् प्रविशामि तावदधमा निद्रा क्षयं मे गता॥ २॥" इति विषादः, उन्मादग्रहौ प्रतीतार्थौ, अत्यन्तकामोद्रेकचोदनाजनितत्वात्, माध्यस्थ्यं तु मुनेरिति गाथार्थः ॥ २२६ ॥ 'न सिमी'त्यादि, न स्वप्नविज्ञानात् हर्षविषादादयो विरुध्यन्त इति ब्रूमः, कार्यस्य कारणाव्यभिचारित्वात्, जाग्रद्विज्ञानहर्षादिवत्, के तर्हि विरुध्यन्ते? इत्यत आह—क्रिया-मेरुशिखरप्राप्त्यादिलक्षणा फलं-कार्यं, तुशब्दः प्राप्यकारिताबीजं फलं नास्तीति विशेषणार्थः, तृप्तिः-व्युपरतिलक्षणा मदः-सुरादिपाने, वधः-पीडा शिरश्छेदादौ बन्धो निगडादिभिरादिशब्दः स्वभेदप्रख्यापक इति गाथार्थः ॥ २२७॥ तत्रैतत् स्यात्—'सिमि'त्यादि, स्पष्टोऽक्षरार्थः, नवरमयमस्याभिप्रायः-यत्र व्यञ्जनविसर्गस्तत्र योषित्सङ्गमेनापि भवितव्यं, यथा विशिष्टमन्दारलतागृहोत्सङ्गाध्यासिनि भूभाग इति, तथा च स्वप्ने, तस्मादत्रापि तेन भवितव्यमिति कथं न प्राप्यकारि मनः? इति ॥ २२८॥ अत्र 'नासौ तदविनाभूत' इत्यनैकान्तिकतां हेतोर्दर्शयन्नाह—'सो' इत्यादि, सः-व्यञ्जनविसर्गोऽध्यवसायकृतो न त्वबलासंटङ्ककृत इत्यभिप्रायस्तदप्राप्तेः, किमालजालचिन्तनादेव भवतीत्यत्र दृष्टान्तमाह-जाग्रतोऽपि यथा तीव्रमोहस्य तीव्राध्यवसानाद् भवति विसर्गस्तामन्तरेणेति शेषः, तथा स्वप्न इति दार्ष्टान्तिकोपसंहार इति गाथार्थः ॥ २२९ ॥ तस्मादसत्या स्वप्नक्रियेति, एवं चैतत्—'सुरत' इत्यादि, 'इतरथा' तत्सत्यत्वे सुरतसमागम(त)युवतेः सुरतप्रतिपत्तिस्तत्क्रियाप्रतिपत्तिः रतौ च सुखं प्रतीतमेव केषाञ्चिद् गर्भाधानं गर्भसम्बन्धः आदिशब्दाद् दौहृदादि परिगृह्यते, न च यतस्तानि तस्यास्ततो विफलः स्वप्न इति कुतः प्राप्यकारिता? इति गाथार्थः ॥ २३० ॥ पर आह—'नन्वि'त्यादि, ननु स्वप्नोऽपि कश्चित्सत्यफलो भवति, कः? इत्यत आह-यो यथा दृष्टस्तथैव च फलदायी

देवताधिष्ठानाद्, उच्यते, ननु स्वप्ने निषिद्धं, स्वप्नेनयमितो (नायामांतं) ब्रूमः, किमित्यत आह–क्रिया–मेरुशिखरप्रवृत्तिरूपा, तथा क्रियाफलानि च–श्रमखेदादीनीति गाथार्थः ॥२३१॥ क्व पुनर्विधिः? इत्याह—'जं पुणे'त्यादि, 'जं पुण सुमिणे विन्नाणं तथानुभवरूपं तं को निवारेइ?'त्ति सम्बन्धः, तथा विबुद्धे तप्फलं च–हरिसविसादादि तं को निवारेइ' चशब्दः स्थापनार्थः, तथा सत्यस्वप्नस्य च भाविनि फले निमित्तभावं को निवारयति ?, न कश्चित् ॥ २३२ ॥ किं कारणं ?–यत्त्रिविधं निमित्तं–कायिकवाचिकमनोभेदाद्, अत एवाह—'देह' इत्यादि, स्पष्टार्था ॥२३३॥ अपृष्ट एवाधुना सूरिराह—'सिमी'त्यादि, 'वा' इत्यथवा स्त्यानर्द्धिमतः पुंसः व्यञ्जनावग्रहता भवेत्, एतच्च सामान्येन तावत्, किंविशिष्टस्य ? इत्यत आह—स्वप्नमिव मन्यमानस्य, आह–यद्येवं सिद्धं साध्यमस्माकम्,. आचार्य आह–'ण उ सा मणसो'त्ति न पुनरसौ मनसो व्यञ्जनावग्रहतेति, अत एव पूर्वार्द्धे द्वयग्रहणं कृतं, एतदुक्तं भवति–नासौ स्वप्नो निद्रात्वान्नाप्यसौ व्यञ्जनावग्रहता तस्य श्रोत्रेन्द्रियादिसम्बद्धत्वाद्, आह च–सा श्रोत्रेन्द्रियादीनामेव, खलुशब्दस्यैवकारार्थत्वे सति भिन्नक्रमत्वात् ॥ २३४ ॥ तत्साधामून्युदाहरणानि, तद्यथा—'पुग्गले'इत्यादि, निपीथे वक्ष्याम इति, ॥ २३५ ॥ तदेवमनेन ग्रन्थेन पूर्वपक्षगाथापूर्वार्द्धमपाकृतं, अथ द्वितीयमपाकुर्वन् दृष्टान्तमाह—'जह'इत्यादि, 'यथा' येन प्रकारेण देहादनिश्चरितं सत् चक्षुर्लोको जल्पति–चन्द्रं गतमिति, निर्निबन्धनमेव रूढं, 'मनसोऽवि तह'त्ति तथा मनसोऽपीहस्थस्यैव बहिर्निर्गमनं रूढम्, एवं यात्विति चेत् न च सर्वा रूढिः सत्येति, 'वटे वटे वैश्रवण' इत्यादिलोकरूढेर्व्यभिचारदर्शनाद् रूढिमात्रत्वाद् अतो न मनसोऽसौ अप्राप्यग्राहकत्वात् चक्षुष इवेति स्थितम् ॥२३६॥ आह–अद्यापि हेतोरगमकत्वात् दुष्टा प्रतिज्ञेत्याह—'विसय' इत्यादि, 'विषयं' मेरुशिखरादिस्थजिनप्रतिमादि अग्निजलादिकं वा 'असम्प्राप्तस्यापि' अनाश्लिष्टस्यापि अप्राप्य गृह्णतोऽपीति भावना,

'संविद्यते' योक्ष्यते, कोऽसावित्याह–'व्यञ्जनावग्रहो' द्रव्योपादानं 'मनसो' द्रव्यमनसः, अपरया भङ्ग्येति शेषः, तेनैतदुक्तं भवति– यथा जीवस्य श्रोत्रेन्द्रियेण ग्राह्यव्यञ्जनादानमिष्यते एवं जीवस्यैव नोइन्द्रियेण ग्राह्यवस्तुव्यञ्जनादानमुत्पश्यामः, कुतः? इत्याह–'यत्' यस्मात्सर्व एव उपयोगः स्पर्शनादिमनोजः छद्मस्थस्य 'असंख्येयसामयिकः' असंख्येयसमयनिष्पत्तिरुक्तो भगवद्भिः, 'चुयमाणे न जाणइ'त्ति वचनात्, यदि नामैवं ततः किं?, अत आह—'जं च सव्वेसु समयेसु'त्ति, यस्माच्च द्व्यादिष्वसंख्येयमानेषु समयेषु, किमत आह–'मणो' इत्यादि, 'मनोद्रव्याणि' मनोदलिकानि 'गृह्णाति' आदत्ते, मन्ता इति शेषः, तथापि किमत आह–'दव्वाइं च वंजणं भणियं' त्वयैव, सम्बन्धो वा ग्राह्यग्राहकयोः, अतो येन कारणेनैवं तेन 'तयं' व्यञ्जनोपादानं 'युज्यते' घटते मनसोऽनया भङ्ग्या, नो चेत् न क्वचिदसावेष्टव्यः, प्रतिसमयद्रव्योपादानेऽप्यभावात् मनसीवेति निवृत्तेदानीं व्यञ्जनावग्रहवार्त्तेति गाथार्थः ॥२३८॥ अथ प्राप्यकारित्वमङ्गीकृत्यापरयैव भङ्ग्या अस्य एनं पर एवाह—'देहा' इत्यादि, दिह्यत इति देहस्तस्माद्देहादनिर्गतस्यापि, मेरुशिखरादि मतीति सामर्थ्याद् गम्यते, स्वः कायः स्वकायः तस्मिन् हृदयादि तत् 'विचिन्तयतः' समालम्बतः, प्रतिसमयोपचीयमान- मनोद्रव्यैरिति हृदयम्, 'ज्ञेयस्यापि' हृदयादेः 'सम्बन्धे' संयोगे, हृदि मनोद्रव्याभिश्लेषे सतीतियावत्, 'व्यञ्जनं' व्यञ्जनोपादानं 'एवमपि' अनयाऽपि भङ्ग्या 'से' तस्य मनसो 'युक्तं' घटमानं, नो चेत् उक्त एव दोष इति पूर्वपक्षः ॥२३९॥ अथ प्रथमपक्षमधिकृत्याचार्य आह— 'गज्झरसे'त्यादि, इहाद्यविकल्पोऽयुक्तो, मनसः श्रोत्रादिसाधर्म्यायोगात्, तथाहि–'ग्राह्यस्य' आलम्ब्यस्य सम्बन्धिनां व्यञ्जनानां यद् ग्रहणं स व्यञ्जनावग्रहो मतः स्पर्शरसगन्धशब्दद्रव्याणामिवेति जानाति भवानपि, अत्र तु नायं न्यायोऽस्ति, यतः 'ग्रहणं मणो नो गेज्झं'ति 'न मनो ग्राह्यं' न मन आलम्ब्यं, तस्य मेर्वादिशिखराध्यासितत्वात्, किं तर्हि मनः? इत्यत आह 'ग्रहणं' गृह्यते–परि-

च्छिद्यतेऽनेनेति ग्रहणं, कुत एतत्? मनःशक्तिसामर्थ्यात्-प्रतिसमयोपचीयमानमनोद्रव्यकरणैः प्रतिसमयमेव बाह्यार्थपरिच्छेदभावात्, न चाबद्धमूलत्वात् कथमादिसमये बहिः प्रवर्त्तेत? इति चोदनीयं, मनःपर्याप्त्यनुगृहीतत्वेन दक्षत्वात्, तदिदमेतेषां करणत्वेनादिचोद्यं परिहृत्य निगमयन्नाह-अतः'को भागः' कोऽवसरः 'व्यञ्जने' व्यञ्जनावग्रहभवने? तस्य प्रतिसमयोपचीयमानमनोद्रव्यराशेः करणस्यात्, ततश्च न व्यञ्जनावग्रहाभावोऽप्यन्यत्रेति। यच्चोक्तं द्वितीयविकल्पे तत्रापि स्वकायदेशसम्बन्धमात्रात् प्राप्यकारित्वमवसातुं न युक्तं, यदस्य मनसस्तदभिन्नत्वात्, भेदे सति प्राप्यकारित्वशब्दार्थोपपत्तेः, अतः पारिशेष्याद् बाह्यवस्त्वपेक्षयैव प्राप्याप्राप्यकारिचिन्तेति किं मुधा खिद्यते भवानिति चोद्यद्वयव्युदासः॥ अमुमेवार्थमुत्तरवस्तुव्युत्पादनार्थमाह, अपिच-'तद्देसे'त्यादि। स चासौ देशश्चेति तद्देशः स्वकायदेशः हृदयादिर्ग्राह्यधर्म्मी तस्य चिन्तनं-मनसा मननमिति तद्देशचिन्तनं तस्मिंस्तद्देशचिन्तने, प्रतिसमयोपचीयमानमनोद्रव्यैरिति गम्यते, 'होज्ज वंजणं' स्याद् व्यञ्जनं तद्देशग्राह्यधर्मिव्यञ्जनोपादानं, यदि किं स्यादित्याह-'जति तओ'त्ति यदि तत् मनः प्रथमसमये 'तमर्थं हृदयार्थं न गृह्णीयात्, गृह्णाति च, अन्यथा दोषसद्भावप्रसङ्गात्, तदेवं तत्प्रथमग्रहणतो द्वितीयचोद्यस्यापि स्पष्टतरेण वचनेनासाधुतामुपदर्श्य निगमयन्नाह—तस्मान्न व्यञ्जनं प्रतिसमयोपचीयमानद्रव्यराशेर्हृद्देशावलम्बिनः, तस्मादन्यत्रापि नान्येन्द्रियेषु व्यञ्जनाभावप्रसङ्गः, प्रयोगः-हृद्देशसम्बन्धेऽपि मनसो व्यञ्जनावग्रहो नास्ति अनुपलम्भकालासम्भवात् स्वविषयसम्बन्धे चक्षुष इव व्यतिरेकेण श्रोत्रं, न चाप्राप्यकारिणी चक्षुःश्रोत्रे इति व्यतिरेकासिद्धिश्चोदनीया असत्पक्षत्वादस्येति गाथार्थः॥ २४१ ॥ अथ कोऽसावुत्तरभावार्थः? इत्यत आह-'समये'त्यादि, 'होर्द्द'त्यादि, अस्याक्षरयोजनया व्याख्या-तत्र 'जेण'त्ति येन कारणेन मनःशक्तिमान् जीवः 'समये २' समयं२ प्रति 'गृह्णाति' आदत्ते स्वीकरोति 'द्रव्याणि' मनोदलिकानि, सर्वलो-

काषच्चमनोद्रव्यवर्गणाभ्य इति गम्यते, तथा 'मनुते च तमर्थं' पर्यालोचयति च तमर्थं मेर्वादिकं तैः येन समये २ इति वर्त्तते, एष ताव-
त्सिद्धान्ताभिप्रायः, ततः किमित्यत आह-'पढमाओ चेव तेण समयाओ होइ मणोवावारो'त्ति, तिष्ठतु सांन्यासिकं तावदिति वक्ष्यामः
अथ द्वितीयमुपन्यस्योत्तरमाह-'जं चिंदिओयोगेऽवि'त्ति यच्चेन्द्रियोपयोगेऽपि-यस्माच्च श्रोत्रेन्द्रियाद्युपयोगमात्रेऽपि सत्यसंख्येय-
समयभाविनि प्राक् पुनः पश्चात् व्यञ्जनावग्रहेऽतिक्रान्ते सति, किमित्यत आह-'होइ मणोवावारो' त्ति भवति मनसो व्यापारः
प्रबोधशक्तिरितियावत्, कदा चेद् उच्यते-अर्थावग्रहणसमय इति गम्यते, 'जाहे हुंवि करेइ'त्ति वचनात्, अयं च द्वितीयः सिद्धान्ता-
भिमायस्तस्मान्न मनसः स्वल्पसंवेदनकालोऽस्ति, यदि पुनर्मनसोऽपि व्यञ्जनावग्रहः स्यात् तत इन्द्रियं प्रति स्याद्, इन्द्रियव्यञ्जना-
वग्रहेण सहानुश्लिष्टिः स्यादिति भावनीयम्,ततश्चेन्द्रियानिन्द्रियपरिकल्पनमनर्थकं स्यात्, एतदुक्तं भवति-यदि व्यञ्जनावग्रहे इन्द्रिय-
मात्रस्यैवोपयोगः स्यादर्थावग्रहे तूभयोस्ततो मनसोऽनवष्टम्भात् स्यादिन्द्रियानिन्द्रियनिमित्तता, नान्यथा, तथा यद्यस्यायं स्यादष्टावि-
धतिविधता च मतेर्हीयेत, नन्वेवं स्यात् २९ एवं वा ३२, इन्द्रियनिरपेक्षस्य मनसः प्रवर्तमानस्य प्रथमसमयभाविनि व्यञ्जनावग्रहे
प्रक्षिप्ते एवं २९, तथेन्द्रियजाश्चत्वारो मनसाऽपीन्द्रियानुगताश्चत्वार एवं ३२, अतः येन कारणेनास्य व्यञ्जनाभ्युपगमेऽमी दोषाः तत
उच्यते-प्रथमादेव ततो-मनःसमाधानसमयाद् भवति तदर्थग्रहणं-भवति तद्विषयावग्रहणं, इत्यमेवेन्द्रियानिन्द्रियनिमित्ताद्युपपत्तेः, इत्थं
चैतद् यतस्तत् मनोऽन्यथा-प्रथमसमयव्यापारार्थग्रहणमन्तरेण 'न प्रवर्तेत' न प्रसरेत्, कुतः ?-सङ्कल्पमयत्वाद्, आलोचनात्मकत्वा-
दित्यर्थः, अवधिवदिति साधर्म्यदृष्टान्तः, अयं चात्र पिण्डार्थः-यथा हि भाषको भाषयन् गृह्णाति भाषते चेत्येवं मन्ता अपि मनन्
गृह्णाति मन्यते च, न पुनरन्यः कश्चित् प्रकृतोपघातकार्यपि व्यञ्जनादानकालोऽस्ति प्रथमादिसमयावग्रहादिसद्भावात्, उपयोगस्तु छद्मस्थ-

नयनमन-
सोरप्राप्य-
कारिता

॥ ९८ ॥

स सर्वत्रान्तर्मुहूर्त्तिक एव, श्रोत्रादिषु प्राय ईहान्तत्वात् अवध्यादिष्वप्येवमेव विशेषग्राह्यपायान्तर्मुहूर्तप्रतिपादनवादिति जिनभद्राचार्यपूज्यपादा इति गाथाद्वयार्थः ॥ २४२–२४३ ॥ अपिच—'नेया'इत्यादि, ज्ञायत इति ज्ञेयं तस्मात् ज्ञेयादेव 'यद्' यस्मात् 'सो मणो' तन्मनो लभते स्वरूपं प्राप्नोत्याविर्भावं, मनुते मन्यते वा मन इत्यस्य क्रियाशब्दत्वात्, कायिव ? इत्याह–प्रदीपशब्दाविव, तथाहि–प्रकाशयन् प्रकाशकः स्वरूपतां लभते, अभिदधच्चाभिधानं स्वतत्त्वमाप्नोति, क्रियाशब्दत्वान्मनआदीनां, अतस्तस्य मनसः असंकल्पितानां–अनालोचितानां व्यञ्जनानां नास्ति ग्रहणमिति तदभावः, प्रयोगः–मनसो नानालोचनाकालोऽस्ति ज्ञेयादात्मलाभप्राप्तेः प्रदीपशब्दयोरिव, यथा हि प्रदीपस्यानालोकनकालो नास्ति तमःप्रतिघातादात्मलाभप्राप्तेः शब्दस्य च निजार्थादात्मलाभात्, तद्वन्मनसोऽप्यसौ नास्ति मन्यादात्मलाभात्, व्यतिरेकेण श्रोत्रं मनःपर्याप्तिकल्पं, तस्मान्न साध्यविकलो दृष्टान्तः, इतः स्थितमेतद् व्यवस्थानाच्च 'णयणमणोवज्जिंदियभेदातो वंजणोग्गहो चउह' त्ति प्रतिष्ठितमिति गाथार्थः ॥ २४४ ॥ अत्रैवं व्यवस्थिते प्रसङ्गसाधनवादी परश्चोद्यशेषमाह—

जइ नयणिन्दियमप्पत्तकारि सव्वं न गिण्हए कम्हा ? । गहणागहणं किंकयमपत्तविसयत्तसामन्ने ? ॥२४६॥
विसयपरिमाणमनियममपत्तविसयंति तस्स मणसो व्व । मणसोवि विसयनियमो न घमइ जओ स सव्वत्थ ॥
अत्थग्गहणेसु मुज्झइ सन्तेसुवि केवलाइगम्मेसु । तं किंकयमग्गहणं अपत्तकारित्तसामन्ने ? ॥२४७॥
कम्मोदयओव सहावओव नणु लोयणेवि तं तुल्लं । तुल्लो व उवालंभो एसो संपत्तविसएऽवि ॥२४८॥
सामत्थाभावाओ मणो व्व विसय परओ न गिण्हेइ । कम्मक्खओवसमओ साणुग्गहओ य सामत्थं ॥२४९॥

'जती'त्यादि। नयनेन्द्रियमाभ्यां हेतुदृष्टान्ताभ्यामप्राप्यकारि कस्मात् सकलं त्रैलोक्यं न गृह्णाति दृष्टान्तधर्म्मिमन इव ?, अतः, पश्चार्द्धं स्पष्टम् ॥ २४५ ॥ तस्मात्—'विसये'त्यादि। 'तस्स'त्ति तस्य चक्षुषो 'विषयपरिमाणं' आलम्बनपरिमाणं 'अनियतम्' अनन्तं अप्राप्तविषयत्वात् मनस इव, अत्राचार्यः साध्यविकलतां दृष्टान्तस्योद्भावयन्नाह—मनसोऽप्यप्राप्यग्राहिणो विषयेऽयं नास्त्येव, यस्मान्न तत्सर्वत्र क्रामतीति ॥ २४६ ॥ तथाहि—'अत्थे'त्यादि। 'अर्थगहनेषु' अर्थशुषिलेषु वस्तुष्वागमगम्येषु 'सत्स्वपि' विद्यमानेष्वपि कस्यचिन्मनो 'मुह्यति' कुण्ठीभवति, तथा केवलादिगम्येषु च, अतोऽहमपि भवन्तं पृच्छामि—तत्किं कृतं मनसोऽग्रहणं ?, अतीन्द्रियैन्द्रियकाणां भावानां, कस्मिन् सतीत्याह—अप्राप्यकारित्वे सामान्ये ग्राह्याग्राह्येष्विति गाथार्थः ॥ २४७ ॥ एवं पृष्टः पर आह—'कम्मो'इत्यादि। कर्मोदयात् तत्स्वाभाव्याद्वाऽप्राप्यकारित्वे सति ग्रहणाग्रहणं, सूरिराह—ननु लोचनेऽपि तद्—ग्रहणाग्रहणं तुल्यं कर्म्मोदययोश्च समावउभ्वत्ति,तदेवं अप्राप्यकारिवादिना प्राप्यकारिवाद्युक्तप्रसङ्गसाधने परिहृते प्राप्यकारिवादिनोऽप्यमुं दोषं गुणं वाऽभिधित्सुराह—तुल्यो वा एष उपालम्भः—सर्वासर्वग्रहणलक्षणः प्राप्यकारिवादिनोऽपि भवतः, कस्मिन् सतीत्याह—'संपत्तविसयेऽवि'त्ति नयनमनसोः प्राप्तेऽप्यर्थ इत्युक्तं भवति, तथाहि—न यावता नयनमभिसम्बध्यते तत्सर्वमेव गृह्यते अञ्जनरजोमलशलाकादिभिर्व्यभिचारात्, मनसा त्वनवस्थानान्न गृह्यते, गृह्यते च सम्बद्धमप्यनुभवादिति गाथार्थः ॥२४८॥ अथ सद्भावमाह—'सामत्थे'त्यादि। नयनं विषयपरतो न गृह्णाति सामर्थ्याभावात् मनोवत्, साधितश्च दृष्टान्तः, सामर्थ्यासामर्थ्यमेव कुतः ? इत्याह—कर्मक्षयोपशमात् सामर्थ्यं विषये तस्यैव वाऽक्षयोपशमादसामर्थ्यं विषये, तथा रूपालोकमनस्कारानुग्रहाच्च सामर्थ्यं तस्यैव चाननुग्रहादसामर्थ्यमिति गाथार्थः ॥ २४९ ॥ तदेवं चोद्यशेषं परिहृत्यास्मिन्नेवाधिकारे यत् सूत्रकारेणोपदिष्टं 'वंजणोग्गहस्स परूवणं करिस्सामि पडिबोहगदिट्ठंतेणं

नयनस्य विषयपरिमाणे हेतुः

मल्लगदिट्ठंतेण य, से जहा नाम ए केयि इत्यादि २ जाव जाहे तं वंजणं पूरियं होती'त्येतच्छुशो रयितुराह—

तोएण मल्लगंपिव वंजणमापूरियंति जं भणियं । तं दव्वमिंदियं वा तस्संजोगो व न विरुद्धं ॥२५०॥
दव्वं माणं पूरियमिंदियमापूरियं तहा दोण्हं । अवरोप्परसंसग्गो जया तया गिण्हइ तमत्थं ॥२५१॥
सामन्नमणिद्देसं सरूवनामाइकप्पणारहियं । जइ एवं जं तेणं गहिए सद्देत्ति तं किह णु ? ॥२५२॥
सद्देत्ति भणइ वत्ता तम्मत्तं वा न सद्दबुद्धीए । जइ होइ सद्दबुद्धी ताऽवाओ चेव सो होज्जा ॥२५३॥
जइ सद्दबुद्धिमेत्तयमवग्गहो तव्विसेसणमवाओ । नणु सद्दो नासद्दो न य रूवाई विसेसोऽयं ॥२५४॥
थोवमियं नावाओ संखाइविसेसणमवाओत्ति । तब्भेयावेक्खाए नणु थोवमियंपि नावाओ ॥२५५॥
इय सुबहुणाऽवि कालेण सव्वभेयावहारणमसज्झं । तंम्मि हवेज्ज अवाओ सव्वो चिय उग्गहो नाम ॥२५६॥
किं सद्दो किमसद्दोत्तऽणीहिए सद्द एव किह जुत्तं ? । अह पुव्वमीहिऊणं सद्दोत्तिमयं तई पुव्वं ॥२५७॥
किं तं पुव्वं गहियं जमीहओ सद्द एव विन्नाणं । अह पुव्वं सामण्णं जमीहमाणस्स सद्दोत्ति ॥२५८॥
अत्थोग्गहओ पुव्वं होयव्वं तस्स गहणकालेणं । पुव्वं च तस्स वंजणकालो सो अत्थपरिसुण्णो ॥२५९॥
जइ सद्दोत्ति न गहियं न ड जाणइ जं क एस सद्दोत्ति । तमजुत्तं सामण्णे गहिए मग्गिज्जइ विसेसो ॥२६०॥
सव्वत्थ देसयंतो सद्दो सद्दोत्ति भासओ भणइ । इहरा न समयमेत्ते सद्दोत्ति विसेसणं जुत्तं ॥२६१॥
अहव सुए चिय भणियं जह कोइ सुणेज्ज सद्दमव्वत्तं । अव्वत्तमणिद्देसं सामण्णं कप्पणारहियं ॥२६२॥

'जती'त्यादि। नयनेन्द्रियमाभ्यां हेतुदृष्टान्ताभ्यामप्राप्यकारि कस्मात् सकलं त्रैलोक्यं न गृह्णाति दृष्टान्तधर्म्मिमन इव ?, अतः, पश्चार्द्धं सष्टम् ॥ २४५ ॥ तस्मात्—'विसये'त्यादि। 'तस्स'त्ति तस्य चक्षुषो 'विषयपरिमाणं' आलम्बनपरिमाणं 'अनियतम्' अनन्तं अप्राप्तविषयत्वात् मनस इव, अत्राचार्यः साध्यविकलतां दृष्टान्तस्योद्भावयन्नाह–मनसोऽप्यप्राप्यग्राहिणो विषयेऽयं नास्त्येव, यस्मान्न तत्सर्वत्र क्रामतीति ॥ २४६ ॥ तथाहि—'अत्थे'त्यादि। 'अर्थगहनेषु' अर्थशुषिरेषु वस्तुष्वागमगम्येषु 'सत्स्वपि' विद्यमानेष्वपि कस्यचिन्मनो 'मुह्यति' कुण्ठीभवति, तथा केवलादिगम्येषु च, अतोऽहमपि भवन्तं पृच्छामि–तत्किं कृतं मनसोऽग्रहणं ?, अतीन्द्रियैन्द्रियकाणां भावानां, कस्मिन् सतीत्याह–अप्राप्यकारित्वे सामान्ये ग्राह्याग्राह्येष्विति गाथार्थः ॥ २४७ ॥ एवं पृष्टः पर आह—'कम्मो'इत्यादि। कर्मोदयात् तत्क्षयोपशमाद्वाऽप्राप्यकारित्वे सति ग्रहणाग्रहणं, सूरिराह–ननु लोचनेऽपि तद्–ग्रहणाग्रहणं तुल्यं कर्मोदययोश्च समानउच्यत्ति,तदेवं अप्राप्यकारित्यादिना प्राप्यकारित्वाद्युक्तप्रसङ्गसाधने परिहृते प्राप्यकारिवादिनोऽप्यमुं दोषं गुणं वाऽभिधित्सुराह–तुल्यो वा एष उपालम्भः–सर्वासंग्रहणलक्षणः प्राप्यकारिवादिनोऽपि भवतः, कस्मिन् सतीत्याह–'संपत्तविसयेऽवि'त्ति नयनमनसोः प्राप्तेऽप्यर्थ इत्युक्तं भवति, तथाहि–न यावता नयनमभिसम्बध्यते तत्सर्वमेव गृह्यते अञ्जनरजोमलशलाकादिभिर्व्यभिचाराद्, मनसा त्वनवस्थानान्न गृह्यते, गृह्यते च सम्बद्धमप्यनुभवादिति गाथार्थः ॥२४८॥ अथ सद्भावमाह—'सामत्थे'त्यादि। नयनं विषयपरतो न गृह्णाति सामर्थ्याभावात् मनोवत्, साधितश्च दृष्टान्तः, सामर्थ्यासामर्थ्यमेव कुतः ? इत्याह–कर्मक्षयोपशमात् सामर्थ्यं विषये तस्यैव वाऽक्षयोपशमादसामर्थ्यं विषये, तथा रूपालोकमनस्कारानुग्रहाच्च सामर्थ्यं तस्यैव चाननुग्रहादसामर्थ्यमिति गाथार्थः ॥ २४९ ॥ तदेवं चोद्यदोषं परिहृत्यास्मिन्नेवाधिकारे यत् सूत्रकारेणोपदिष्टं 'वंजणोग्गहस्स परूवणं करिस्सामि पडिबोहगदिट्ठंतेणं

नयनस्य विषयपरिमाणे हेतुः

मल्लगदिट्ठंतेण य, से जहा नाम ए केयि इत्यादि २ जाव जाहे तं वंजणं पूरियं होती'त्येतच्छुश्रोतायिपुराह—

तोएण मल्लगंपिव वंजणमापूरियंति जं भणियं। तं दव्वमिंदियं वा तस्संजोगो व न विरुद्धं ॥२५०॥

दव्वं माणं पूरियमिंदियमापूरियं तहा दोण्हं। अवरोप्परसंसग्गो जया तया गिण्हइ तमत्थं ॥२५१॥

सामन्नमणिद्देसं सरूवनामाइकप्पणारहियं। जइ एवं जं तेणं गहिए सद्देत्ति तं किह णु ? ॥२५२॥

सद्देत्ति भणइ वत्ता तम्मत्तं वा न सद्दबुद्धीए। जइ होइ सद्दबुद्धी ताऽवाओ चेव सो होज्जा ॥२५३॥

जइ सद्दबुद्धिमेत्तयमवग्गहो तव्विसेसणमवाओ। नणु सद्दो नासद्दो न य रूवाई विसेसोऽयं ॥२५४॥

थोवमियं नावाओ संखाइविसेसणमवाओत्ति। तब्भेयावेक्खाए नणु थोवमियंपि नावाओ ॥२५५॥

इय सुबहुणाऽवि कालेण सव्वभेयावहारणमसज्झं। तंमि हवेज्ज अवाओ सव्वो चिय उग्गहो नाम ॥२५६॥

किं सद्दो किमसद्दोत्तऽणीहिए सद्द एव किह जुत्तं ?। अह पुव्वमीहिऊणं सद्दोत्तिमयं तई पुव्वं ॥२५७॥

किं तं पुव्वं गहियं जमीहओ सद्द एव विन्नाणं। अह पुव्वं सामण्णं जमीहमाणस्स सद्दोत्ति ॥२५८॥

अत्थोग्गहओ पुव्वं होयव्वं तस्स गहणकालेणं। पुव्वं च तस्स वंजणकालो सो अत्थपरिसुण्णो ॥२५९॥

जइ सद्दोत्ति न गहियं न उ जाणइ जं क एस सद्दोत्ति। तमजुत्तं सामण्णे गहिए मग्गिज्जइ विसेसो ॥२६०॥

सव्वत्थ देसयंतो सद्दो सद्दोत्ति भासओ भणइ। इहरा न समयमेत्ते सद्दोत्ति विसेसणं जुत्तं ॥२६१॥

अहव सुए चिय भणियं जह कोइ सुणेज्ज सद्दमव्वत्तं। अव्वत्तमणिद्देसं सामण्णं कप्पणारहियं ॥२६२॥

अहव मई पुव्वंचिय सो गहिओ वंजणोग्गहे तेणं । जं वंजणोग्गहम्मिऽवि भणियं विण्णाणमव्वत्तं ॥२६३॥
अत्थि तयं अव्वत्तं न उ तं गिण्हइ सयंपि सो भणियं । नउ अग्गहियम्मि जुज्जइ सद्दोत्ति विसेसणं बुद्धी ॥२६४॥
अत्थोत्ति विसयगहणं जइ तम्मिवि सो न वंजणं नाम । अत्थोग्गहो च्चिय तओ अविसेसो संकरो वावि ॥२६५॥
जेणऽत्थोग्गहकाले गहणेहावायसंभवो नत्थि । तो नत्थि सद्दबुद्धी अहऽत्थि नावग्गहो नाम ॥२६६॥
सामण्णतयण्णविसेसेहावज्जणपरिग्गहणओ से । अत्थोग्गहेगसमओवओगबाहुल्लमावण्णं ॥२६७॥

'तोयेणे'त्यादि । 'जं भणियं' यदुक्तं सूत्रकारेण, किं तदित्याह–व्यञ्जनमापूरितमिति, केन किंवदित्याह– तोयेनेव 'मल्लकं' शरावं तत्र तद् द्रव्यं इन्द्रियं वा तयोः वा सम्बन्ध इति सर्वथाऽप्यविरोध इति गाथार्थः ॥ २५० ॥ कथमित्यत आह—'दव्व'मित्यादि। यदा द्रव्यं व्यञ्जनमधिक्रियते तदा 'जाहे तं वंजणं पूरियं होइ'त्ति कोऽर्थः ? इत्यत आह–'माणं पूरियं'ति, तत्प्रमाणं प्रभूतीहत्वेन स्वप्रमाणमानीतम्, तत्स्वविषयव्यक्तौ स्पष्टीकृतमितियावत्, यदा त्विन्द्रियं तदा 'जाहे तं वंजणं पूरियं होइ'त्ति कोऽर्थः ? इत्यत आह–आपूरितं व्याप्तं भृतं वासितमित्यर्थः, तथा 'दोण्हं'ति द्वयोरपि मिथो यदा सम्बन्धोऽधिक्रियते तदा 'जाहे तं वंजणं पूरियं होइ'त्ति अङ्गाङ्गीभावमानीतमनुपक्तं यदा भवति, इयं व्यञ्जनावग्रहपरिसमाप्तिः ॥ 'ताहे हुंति करेइ'त्ति व्याचिख्यासुराह–तदा त्रिप्रकारव्यञ्जनावग्रहोत्तरकालं 'गृह्णाति' आलम्बते तमर्थं व्यञ्जनार्थमिन्द्रियमनोव्यापारेणेति गाथार्थः ॥ २५१ ॥ हुमिति कुर्वन्, किंविशिष्टं तं गृह्णाति ? इत्यत आह – 'सामण्ण' मित्यादि । 'सामान्यं' रूपादिभ्योऽव्यवच्छिन्नं स च सामान्यो गोत्वादिरपि वाच्यो भवत्यत आह–'अनिर्देश्यं' अनभिलाप्यं, अनभिलाप्योऽपि कैश्चिन्निरूपणानुस्मरणविकल्पविशिष्ट एव गृह्यते अत आह–'स्वरूपनामा-

दिकल्पनारहितं' तत्र स्वरूपकल्पना शब्द इति नामजातिगुणक्रियाकल्पनास्तु प्रसिद्धा एव, भेदाभिधानं च स्वरूपकल्पनाया अन्तस्तत्त्वज्ञापनार्थं, एतदुक्तं भवति–सकलविशेषानवगुण्ठितत्वेनानाख्येयमित्यर्थः, कुत एतत् ? 'न उणं जाणइ के वेस सद्दा'त्ति वचनात्, एवमुक्ते सत्याह चोदकः–'जइ एवं'ति यद्येवं तदेत्येवमादि तो 'जं'ति जं सुत्ते भणियं, किं तदित्याह–'तेणं गहिते सद्दे'त्ति, 'तेणं सद्दत्ति उग्गहिते, ण उणं जाणइ के वेस सद्दे'त्ति, 'तं कहण्णु'त्ति तत् कथं सूत्रमविरोधेन यास्यति ?, एवमवग्रहं व्याख्यानयतस्तवेति मन्यते ॥ २५२ ॥ आचार्य आह, यतः—'सद्देत्ती'त्यादि । शब्द इति–एवं भणति वक्ता–अवग्रहप्रज्ञापको, न श्रोता, 'तम्मत्तं' अथवा तेन श्रोत्रा शब्दमात्रमवगृहीतं, अशेषविशेषविमुखमनाख्येयं वस्तुमात्रमित्यर्थः, कुत एतदिति चेत्, इतिकरणनिर्देशात्, अनभिमतप्रतिषेधमाह–'ण सद्दबुद्धिए'त्ति न शब्दोऽयमितिबुद्ध्या तेन तदवगृहीतं, एकसामयिकत्वात् तस्य, एवं चैतदङ्गीकर्त्तव्यं, अन्यथा यदि स्यात् शब्दबुद्धिः–शब्दोऽयमिति धीस्तस्य तस्मिंस्ततः कोऽन्यायः स्यादित्यत आह–ततोऽपाय एवासौ स्यात्, ततश्च षोडशभेदमात्रं श्रुतनिश्रितं स्यात्, सर्वत्रार्थावग्रहेहयोः पतितत्वादिति गाथार्थः ॥ २५३ ॥ यदुक्तं प्राक् 'तं णो बहुदोसभावाउ'त्ति तदिदानीमवसरायातत्वादुच्यते, अत्राह परः–ननु विवक्षिताद्यसमय एव रूपादिव्यपोहेन शब्दोऽयमिति प्रत्ययोऽवग्रहज्ञानमस्तु, तदुत्तरोत्तरकालभावी तु शाङ्खोऽयमित्यपायः, सति चैवं यथाश्रुताक्षरव्याख्या लभ्यते–उत्तरालापकस्य च सम्बन्धयता प्राप्नोति, यदाह–'तेणं सद्दत्ति उग्गहिते ण उणं जाणइ के वेस सद्दे तओ ईहं पविसती' त्येवमादि सुश्लिष्टमति स्यात्, इदमाचार्यः मत्यनुभाष्यानवस्थानमत्राह—'जती'त्यादि । यदि भवतो भगवदाज्ञामतिक्रम्य शब्दबुद्धिमात्रकं–शब्दोऽयमिति विज्ञानमवग्रहः श्रुतनिश्रिताद्यभेदः तद्विशेषणं तु शाङ्खोऽयमिति तु विज्ञानमपायो वर्त्तते तत्, ननु शब्दोऽयं नाशब्दो–यतो नैव रूपादिः, अयं विशेषो वर्त्तते, ततश्च न कश्चिद् भवतो-

ऽवग्रहो नाम, प्रथममेवापायभवनात्, 'सद्दबुद्धिमेत्तयमवग्गहे'त्यभ्युपगमादिति गाथार्थः ॥२५४॥ अत्र परेऽस्यवावग्रहतामन्यस्य चापायतां दर्शयन्नाह–'थोव'मित्यादि। इदं शब्दबुद्धिमात्रकं स्तोकत्वादल्पविशेषत्वाद् नापायः,किन्तु अवग्रह इति भावना,कस्तर्ह्यपायः ? इत्यत आह–शङ्खोऽयमितिविशेषणविशिष्टं यत् ज्ञानं तदवाय इति, उच्यते, यदि यद् यत् स्तोकं तन्नापाय एवं तर्हि निवृत्तेदानीं भवतोऽपायज्ञानस्य वार्त्ता स्तोकत्वाद्, आह च– तद्भेदापेक्षातः–शाङ्खभेदापेक्षायाः, ननु इदमपि शाङ्खोऽयमिति ज्ञानं भवतो नापायः, 'थोवं'ति स्तोकत्वात्, प्रयोगः–शाङ्खशब्दोऽयमिति ज्ञानमपायो न भवति उत्तरोत्तरविशेषाकांक्षित्वाच्छब्दोऽयमिति ज्ञानवद् ॥ २५६ ॥ अत एवाह–'इय' इत्यादि। एवमभिहितभावप्रयोगभावनया सुबहुनाऽपि कालेन सर्वेणाप्यायुषा सर्वे ये शङ्खगता भेदा–विशेषास्तदवधारणं 'असाध्यं' अशक्यं कर्त्तुं, यत्किंविशिष्टमित्यत आह–'यत्र' भेदावधारणे यत्र भेदाकांक्षानिवृत्तौ 'भवेत्' संपद्येत अपायः–एकपक्षनिक्षेपक्षमः प्रत्ययः, अनन्तत्वात् तद्भेदानां, तस्मात् सर्व एव प्रत्ययोऽवग्रहो नाम प्रसजति, सर्वस्य स्तोकविषयत्वात्, न 'थोवमिणं नावायो', किं तर्हि ?, अवग्रह एवेत्यभ्युपगमादिति गाथार्थः ॥ २५६ ॥ अपिच शब्दबुद्धिमात्रकावग्रहवादिन् !–'कि'मित्यादि। 'किं सद्दो किमसद्दो' इति एवमन्तर्मुहूर्त्तमात्रं कालं 'अनीहिते' अपर्यालोचिते अन्वयव्यतिरेकाभ्यां शब्द एवायं न रूपादिरिति, 'कथं' केन प्रकारेण युक्तं ?, नन्वाद्यसमयेऽपायज्ञानमयुक्तमनीहितत्वात्, किमिति मोहमाश्रितो देवानांप्रियः ?, तदेवं परस्मै उपालम्भं दत्त्वा तदभिप्रायेणाह–अथ मन्यसे 'पुव्वं' प्राक् 'ईहिऊणं' ईहित्वा पश्चाच्छब्द इति ज्ञानं भवति, यद्येवमभिधास्यसे, यतः 'तई' असौ ईहा 'पुव्वं' प्रथमं तावच्छब्दज्ञानात्सकाशात् सिद्धा, एतावन्मया भवतः सकाशाल्लब्धं, इदानीं पृच्छामि भवन्तम् ॥२५७॥ 'किं त'मित्यादि, किं तदीहायाः प्राग्गृहीतं यदीहमानस्य–आलोचयतः शब्द एवायमिति विज्ञानमादिसमय एव जायते इत्युच्यते, तदेवं क्षुभित-

स्योत्तरप्रदानासामर्थ्यं ज्ञात्वा तन्मुखविभापयिषयाऽर्थावग्रहसाधनमाह–अथ प्राक् सामान्यं गृहीतमिति वर्त्तते, यदीहमानस्य शब्द इति विज्ञानं जायते प्रथमसमय इति ॥ २५८ ॥ अथ परं रमयन्नाह–'अत्थो'इत्यादि, यद्येवं ततस्तस्य ग्रहणकालेन अर्थावग्रहात् पूर्वमादौ भवितव्यमन्यथानवकाशत्वादर्थावग्रहानभ्युपगमाच्च, ततः किमिति चेत्पूर्वं च–प्राक् तस्यावग्रहस्य व्यञ्जनकालः–पुद्गलादानकालः, ततोऽपि किमित्यत आह–स चार्थोपलब्धिशून्य इन्द्रियमात्रव्यापारत्वात्, अतस्तत्रापि न सामान्यमात्रग्रहणं, उच्यते चैतत् त्वया–'पुव्वं सामण्णं गहियं जमीहमाणस्स सद्दो'त्ति वचनात्, तस्मात् पारिशेष्यादर्थावग्रह एव सामान्यग्रहणं ततस्तदन्वयव्यतिरेकालोचनमीहाऽन्तर्मुहूर्त्तं ततोऽपायोऽन्तर्मुहूर्त्तमेव ततो धारणेत्ययं प्रवृत्तिक्रमः किमन्यथा कुचिन्तिकयेति, तस्मात् 'सद्देत्ति भणति वच'त्ति स्थितं, प्रथमसमये शब्द इत्येवमग्रहणादिति पौर्वापर्यमिति गाथार्थः ॥ २५९ ॥ तदेवं प्रबोधितोऽप्यनन्तरसूत्रावयवमधिकृत्य वासनापरीतः पुनरप्याह–'जई'त्यादि । भो ! यदि क्षुमितिकरणसमय एव तेन प्रबोध्यमानश्रोत्रा शब्दोऽयमिति न गृहीतं तद्वस्तु ततः 'ण उण जाणइ के वेस सद्दे'त्ति, 'जं'ति परसूत्रेऽपदिष्टं तत्किमित्यत आह–'तदयुक्तम्' अघटमानकं त्वयाऽऽख्यातं भवति, न चैतद्, गणधरवचनत्वात् तस्य, तस्मान्मदभिप्राय एव श्रेयान्, तथा च 'सामान्ये' शब्दमात्रे रूपादिव्यवच्छिन्ने 'गृहीते' निश्चिते सति पश्चात् 'मृग्यते' अन्विष्यते 'विशेषः' किमयं शाङ्ख आहोस्विच्छार्ङ्गः? इति, न चेदेवं सूत्रमसाधु, अर्थशून्यत्वाद् भवदभिप्रायप्रातिलोम्यादिति गाथार्थः ॥ २६० ॥ उच्यते–'सव्वत्थे'त्यादि । 'सर्वत्र' सूत्रावयवे पूर्वे उत्तरे च 'दर्शयन्' प्रज्ञापयन्नवग्रहस्वरूपं शब्दः शब्द इति–एवं 'भापको भणति' प्रज्ञापको भणति, नतु श्रोतेति, केयमनभिज्ञता भवतः?, इत्थं चैतद्, इतरथा यदीदं श्रोतृवचनं स्यात् ततो न समयमात्रेण व्यञ्जनावग्रहपूर्णमात्राच्छब्दोऽयमिति विशेषणं युक्तं, तीर्थंकरादिभिरनुक्तत्वादसम्भवात्, निभाल्यतां चैतत्

स्वयमप्यक्षिणी निमील्य किमहं युक्तवाद्ययुक्तवादी वेति, न हि जानानैर्वस्त्वपलापः कर्त्तुं शक्यत इति चेत्, ननु यदि भवतोऽसद्ग्राहस्ततोऽयं सांव्यवहारिको भविष्यतीति मा त्वरिष्ठा इति गाथार्थः ॥२६१॥ अत्रैव सौत्रं परिहारमाह–'अथवे'त्यादि । अथवा पठन्तमूर्ख ! श्रुत एवैतत् भणितं यदुत भागर्थावग्रहः, कतमेन सूत्रावयवेनेति तदुच्यते–आद्येन, कश्चासावित्यत आह–'जइ कोई सुणेज्ज सद्दमव्वत्तं' तथेदं सूत्रं–"से जहा नामए केइ पुरिसे अव्वत्तं सद्दं सुणेज्जा" पुनश्च "तेणं सद्देत्ति उग्गहिए,न उण भेयमाइ जाव तओ णं धरेइ संखेज्जं वा असंखेज्जं वा कालं"ति, तत्राव्यक्तमिति किमुक्तं भवति इत्यत आह–अव्यक्तं–अनिर्देश्यं सामान्यं–कल्पनादिरहितं छुमिति समयेऽर्थं श्रोताऽवगृह्णातीत्येतचोक्तमेवेति, एतदपि कुतः ? इति चेदवग्रहस्यानाकारोपयोगेऽन्तर्भूतत्वाद्, अनाकारोपयोगस्य चाव्यक्तविषयत्वात् सामान्यमात्रविषयत्वादिति भावनेति गाथार्थः ॥२६२॥ सूरिरेव पराभिप्रायमाशिशङ्कयिषुराह—'अहवे'त्यादि । अथ चेत्स्यान्मतिर्भवतः प्रागेव सोऽव्यक्तः शब्दो 'गृहीतः' उपात्तो 'व्यञ्जनावग्रहे' 'व्यञ्जनावग्रहवेलायां 'तेन' श्रोत्रेति, कुत एतत् ज्ञायते ? इत्यत आह–'जं वंजणोग्गहंमिवि भणियं विण्णाणमव्वत्तं' त्वयैवेति स्मर्यतां, 'सुत्तमत्तादिसुहुमबोहोव'त्ति वचनात्, तथा स्याद् यथाश्रुतमेव सूत्रमस्तु आद्यालापकस्याव्यक्तग्रहणविषयत्वादिति गाथार्थः ॥ २६३ ॥ उच्यते–'अत्थो' त्यादि । अयमत्र पौर्वापर्यानुविद्धो भावार्थो भावनीयः, तथाहि–अस्ति तदव्यक्तं श्रोतुर्व्यञ्जनावग्रहे ज्ञानं, न तस्यास्माभिरिदानीमपि भवत्कच्चगृहीतैरपलापः क्रियते, किन्तु नन्वात्मनीनमप्यमौ श्रोता तत् गृह्णातीत्येतदपि स्मर्यतां भणितं प्रागस्माभिः, ततश्च 'सुत्तादयो सयं चिय विन्नाणं नावबुज्झंति'त्ति वचनात्, 'न सो तेण वंजणोग्गहे गहिओ'त्ति चोद्यनिवृत्तिः। तत्रैतत्स्याद्–असौ व्यञ्जनावग्रहेऽव्यक्ततया गृहीतोऽपि तदनन्तरसमये व्यक्ततया ग्रहीष्यत इत्यत आह—'न च' नैव अगृहीतेऽव्यक्ततया सामान्ये न 'युज्यते' घटां याति, केत्याह–शब्द

इत्येवं विशेषणं—रूपादिव्यवच्छेदनं या लभते बुद्धिः सा, णमिति लोपाद्वा शब्द इत्येवं विशेषेण रूपादिव्यवच्छेदेन शब्द इति बुद्धिः
विशेषबुद्धिरिति, तस्यास्तृतीयस्थानभावित्वादिति गाथार्थः ॥२६४॥ यदि पुनर्व्यञ्जनादानकालेऽप्यव्यक्तग्रहः स्यात् क इव तर्हि दोषः
स्यादत आह—'अत्थोत्ती'त्यादि। अर्थं इति विषयग्रहणं-अर्थ इत्यव्यक्तशब्दाख्यार्थसंवेदनमुच्यते, ततश्च 'जति तंमिवि'त्ति
यदि तत्रापि-व्यञ्जनादानकाले 'सो'त्ति अव्यक्तशब्दग्रहः ततो न व्यञ्जनं नाम, निवृत्तेदानीं व्यञ्जनाग्रहवार्त्तेत्यभिप्रायः, य-
तोऽर्थावग्रह एवासौ वर्त्तते, अव्यक्तग्रहणात्, सूत्रप्रामाण्यात् तथाऽप्यसावस्त्येवेति चेदत आह—'अविशेषः' अनानात्वं तयोरितरेतरा-
वद्धस्वभावत्वादितरेतरस्वात्मवदिति, न चेदेवं सङ्करस्तर्हि, अन्योऽन्यासक्तत्वान्मेचकमणिप्रभावदिति गाथार्थः। यतश्चैवमप्यमी
दोषा अतो व्यक्तपक्षोऽप्यसाधुः, तथाहि-समुच्चयग्रहणेहापायाख्यकरणत्रयादेव व्यक्तशब्दबुद्धिर्भवति, नान्यथेति॥ २६५॥ अतः—
'जेणे' त्यादि। 'येनार्थावग्रहकाले' येनाव्यक्तध्वनिश्रवणवेलायां ग्रहणेहापायसम्भवो नास्ति साकल्येनेति मन्यते उत्सिद्धान्तत्वात्,
'तो' तेन कारणेन 'नास्ति' न विद्यते 'शब्दबुद्धिः' शब्दापायः, व्यञ्जनावग्रहचरमसमय इति प्रक्रमः, अथास्त्यत्र सा व्यञ्जनादान-
काल एवाव्यक्तस्य गृहीतत्वादिति ततो नासाववग्रहो नाम, किं तर्हि ?—अपाय एवासौ स्यात्, न चायमपायः, अवग्रहाद्यन्तरेणास्या-
भावात्, किं न ते संवेद्यन्ते ? इति चेत् कालस्य सूक्ष्मत्वादुत्पलपत्रशतव्यतिभेदवदिति गाथार्थः ॥२६६॥ अपिच—'सामण्णे' त्यादि।
'से'त्ति से-अस्य हुमिति कर्त्तुः श्रोतुः अर्थावग्रहैकसमये-हुमिति करणसमये उपयोगबाहुल्यमापन्नं-प्राप्तं भवतश्चोदकस्य, कुत इत्याह—
'सामन्ने'त्ति सामान्यं-शब्दसामान्यमुपात्तविषयावग्रहणं तच्चान्ये च तदन्ये तेषां विशेषास्तदन्यविशेषास्तद्विषया ईहा तदन्यविशे-
पेहा, वर्जनं च हेयानां, परिग्रहणं चोपादेयानामिति वर्जनपरिग्रहणं, तदन्यविशेपेहा च वर्ज्जनपरिग्रहणं च तदन्यविशेपेहावर्जनपरिग्रहणं

सामान्यं च तदन्यविशेषेहावर्ज्जनपरिग्रहणं च सामान्यतदन्यविशेषेहावर्जनपरिग्रहणं तस्मादेतद् भवति, अतः 'सद्देत्ति भणइ वत्त'त्ति, पुनरपि व्यवस्थितमिति गाथार्थः ॥२६७॥ विप्रतिपत्तिनिरासार्थोऽयमारम्भ इत्यत आह—

अण्णे सामण्णगहणं आहु बालस्स जायमेत्तस्स। समयम्मि चेव परिचियविसयस्स विसेसविन्नाणं ॥२६८॥
तदवत्थमेव तमपुव्वदोसओ तम्मि चेव वा समये। संखमहुराइसुबहुयविसेसगहणं पसज्जेज्जा ॥२६९॥
अत्थोग्गहो न समयं अहवा समओवओगयाहुल्लं। सव्वविसेसग्गहणं सव्वमई वोगहो गिज्झो ॥२७०॥
एगो धाऽवाओ चिय अहवा सोऽग्गहियणीहिए पत्तो। उक्कमचइक्कमा वा पत्ता धुवमोग्गहाईणं ॥२७१॥
सामण्णं च विसेसो सो वा सामण्णमुभयमुभयं वा। न य जुत्तं सव्वमियं सामण्णालंबणं मोत्तुं ॥२७२॥

'अन्ने'इत्यादि। 'अन्ये' प्रवादिनः 'सामान्यग्रहणम्' अव्यक्तशब्दग्रहणम् 'आहुः' ब्रुवते, कस्येत्याह—'बालस्य' उत्तानशायिनः शिशोः, किंविशिष्टस्य? इत्याह—जातमात्रस्य, तत्क्षणमेव योनिविनिर्लुठितस्येत्यर्थः, तस्याव्यक्तत्वात्, व्यक्तस्य का वार्त्तेत्याह—परिचितविषयस्य तु 'समयंमि चेव' आद्यशब्दश्रवणसमय एव 'विशेषविज्ञानं' विशेषावबोधनं भवति, तस्य व्युत्पन्नत्वात्, ततः किल 'तेणं सद्देत्ति उग्गहिए' इत्येवमादि यथाश्रुतमेवास्त्विति गाथार्थः ॥२६८॥ अत्र परस्य प्रसङ्गमुद्भावयन्नाह—'तदे'त्यादि। 'तदि'ति यत्तत्तरंवमुच्यते तत्तदवस्थमेव दूषणं ज्वलदास्ते, किं कारणमित्याह—'पूर्वदोषतः' प्रागुक्तदोषानतिवृत्तेः, उक्तं च—"सामन्नतदन्नविसेसमणेहे" त्येवमादि प्रपञ्चमारोपणीयम्, अथवा तदवस्थमेव 'तमपुव्वदोसतो'त्ति क्रियते, तथा चापूर्वदोषमुद्भावयन्नाह—तस्मिन्नेव वा समये विशिष्टार्थग्राहित्वेन विशेषग्राहिणि, किमत आह—शङ्खस्य मधुरत्वादयो ये बहवो विशेषास्तेषां ग्रहणं प्रसज्येत

भवत एवंवादिनः, एतदुक्तं भवति-यदि परिचितविषयत्वेनाद्यसमयेऽर्थावग्रहज्ञानं बाधित्वा शब्दज्ञानं प्राप्तमेवं परिचिततरविषयत्वेन शब्दज्ञानमपि बाधित्वा प्रथमसमय एवैकदैव मधुरोऽयमित्यपि प्राप्तं, तथा २ परिचयभावभावित्वात् तज्ज्ञानस्य, इष्यते च पुरुषशक्तेस्तारतम्यमिति, यद्वा उत्क्रमस्य भवता पक्षीकृतत्वादिति युक्तिर्वाच्येति, भवत्येव कस्यचिदिति चेत्, तन्न, 'न उणं जाणइ के वेस सद्दे' इत्यस्यानागमकत्वप्रसङ्गात्, विभ्रमपुरुषविषयमेतदिति चेत्, ननु वस्तुस्थितिविषयमेव किं न तावदङ्गीक्रियत इति गाथार्थः ॥२६९॥ अपिच-समयंमि चेव परिचियविसयविसेसविन्नाणवाइणो तुह-'अत्थोग्गहो न समय' मित्यादिगाथात्रयम्। 'अर्थावग्रहः' सामान्यार्थावग्रहः 'न समयं' न सामयिकः प्राप्नोति, विरोधाघ्रातत्वात्, तथाहि—यदि तत्र विशेषज्ञानं नासौ समयनिष्पत्तिः विशेषज्ञानस्यासंख्येयसमयनिष्पत्तित्वात्, समयं चेत् तत्र विशेषज्ञानं, तस्यैकसमयनिष्पन्नत्वात्, 'अहव'त्ति, अथवा किमस्माकं विरोधोद्भावनेन ? 'समयमवग्गहो' 'उग्गहो एक्कं समयं'ति वचनात्, अत उच्यते—एवमपि समयोपयोगबाहुल्यं भवतः, सदाऽऽद्यसमय एवापायाभ्युपगमात्, तस्य चावग्रहेहानान्तरीयकत्वात्, ततः को दोषः स्यादित्याह—सर्वविशेषग्रहणं-समय एव सर्वमतिज्ञानगम्यविषयपरिच्छेदनं स्यात्, द्वितीयसमये तु श्रुताविर्भावः स्यात्, 'श्रुतं मतिपूर्वक'मिति वचनात्, न चेदेवमेकसमये उपयोगबाहुल्यादीप्यते इत्यत आह-सर्वा मतिः अवग्रहो ग्राह्यः-अवग्रह इति प्रतिपत्तव्यः, ईहादीनामनभ्युपगमादेकसामयिकत्वात्, 'समयंमि चेव परिचितविसयस्स विसेसविन्नाणं'ति वचनादेवमेतदिति गाथार्थः । अत एवाह-'एगो वाऽवायो च्चिय'त्ति, अथवैवमेक एवापायो मतिः, ग्राह्य इति वर्त्तते, अवग्रहादीनामनभ्युपगमादपायोऽन्तर्मुहूर्त्तमिति च विरोधः स्यात्, 'अहव'त्ति अथवैवमयं दोषः-'सो'त्ति 'सो पढमसमयभावी अवायो अग्गहिए सामन्ने अणीहिए य उभयो मुखं पत्तो' प्राप्तो भवतो, न चैतत्सम्भवत्याकाशादपतनात्,

'वा' इत्यथवा एवं सति प्रथमसमयापायवादिनः ध्रुवं–निश्चितं अवग्रहादेर्भेदचतुष्टयस्य उत्क्रमव्यतिक्रमौ प्राप्तौ, तत्र उत्क्रमः–धारणापायेहाऽवग्रहपरिपाटी, उत्तरकालभाविन आदिकालभावित्वमिति भावना, धा–अ–ई–अ, प्रयोगो–धारणैव प्रागस्तु उत्तरकालभावित्वाद् व्यञ्जनावग्रहचरमसमयशब्दज्ञानवत्, सिद्धश्च परस्यायं दृष्टान्तः–"समयंमि चेव परिचियविसयस्स विसेसविन्नाणं" ति स्वीकृतत्वात्, एवं पुनरपायः पुनरीहेत्येवमादि स्वधियाऽभ्यूह्यमिति, व्यतिक्रमस्तु–इतरेतरोल्लङ्घनलक्षणः, तथाहि–अवग्रहमतिक्रम्येहा, तामतिक्रम्यापायस्तमतिक्रम्य धारणेति अ, ई, अ, धा, प्राग्ज्ञानमन्तरेणोत्तरकालज्ञानमस्तु भाविताभिधानेन व्यवहाराद् अव्यक्तज्ञानमन्तरेण व्यक्तज्ञानवत्, न चासिद्धो हेतुः 'उग्गहो ईह अवाओ य धारणे' त्येवमादिक्रमस्य गणधरभाषितत्वेनान्यजन्मन्यप्येवमेवावबुध्यमानत्वात्, सिद्धश्च दृष्टान्तः, एतदुक्तं भवति–पश्चानुपूर्वीभवनं उत्क्रमोऽनानुपूर्वीभवनं तु व्यतिक्रम इति गाथार्थः । तथा यदि प्रथमसमयावगृह्यमाणं विशेषतः '**सामन्नं च विसेसो**' त्ति । सामान्यं नाम विशेषः, प्रथमसमये सामान्यस्यैव गृह्यमाणत्वात्, अर्थापत्त्या च विशेषः सामान्यमत आह–'**सो वा सामण्णं**' ति विपर्ययः, यथा कम्बलीं प्राप्नोति यस्य वर्णिगित्यौरभ्रिको नाम वणिक् तथा वर्णिगौरभ्रिकः, प्रथमसमय एव ग्रहणात्, उभयं वा–विशेषसामान्यलक्षणं, किमत आह–'उभयं' त्युभयं च, एतदुक्तं भवति–विशेषः सामान्यं च, सामान्यमपि तद्विशेषश्चेति, आह–सर्वमेतत् सुन्दरं किमनेनैतावता वाक्सन्दर्भेणेत्यत आह–न च युक्तं सर्वमिदं गौन्दलस्यामलत्वात् उक्तवत्, किं सर्वथा नेत्याह–सामान्यालम्बनं मुक्त्वा व्यञ्जनावग्रहचरमसमय इति प्रकृतं, ततश्चार्थावग्रहः समयमस्य च प्राक् व्यञ्जनावग्रह इति स्थितमिति गाथात्रयार्थः ॥ २७०–२७१–२७२ ॥ मिथ्यात्वव्यावृत्त्यर्थंमया आरम्भा इत्यत आह–

केइ दिह्नालोयणपुव्वमोग्गहं बेंति तत्थ सामण्णं । गहियमहत्थावग्गहकाले सद्देत्ति निच्छिण्णं ॥२७३॥
तं वंजणोग्गहाओ पुव्वं पच्छा स एव वा होज्जा ?। पुव्वं तदत्थवंजणसंबंधाभावओ नत्थि ॥२७४॥
अत्थोग्गहोऽवि जं वंजणोग्गहस्सेव चरमसमयम्मि । पच्छावि तो न जुत्तं परिसेसं वंजणं होज्जा ॥२७५॥
तं च समालोयणमत्थदरिसणं जइ न वंजणं तो तं । अह वंजणस्स तो कहमालोयणमत्थसुण्णस्स ?॥२७६॥
आलोयणत्ति नामं हवेज्ज तं वंजणोग्गहस्सेव । होज्ज कहं सामण्णग्गहणं तत्थऽत्थसुण्णम्मि ? ॥२७७॥
गहियं व होउ तहियं सामण्णं कहमणीहिए तम्मि । अत्थावग्गहकाले विसेसणं एस सद्दोत्ति ? ॥२७८॥
अत्थावग्गहसमए वीसुमसंखेज्जसमइया दोऽवि । तक्कावगमसहावा ईहावाया कहं जुत्ता ? ॥२७९॥
खिप्पेयराइभेओ जमोग्गहो तो विसेसविण्णाणं । जुज्जइ विगप्पवसओ सद्दोत्ति सुयम्मि जं केई ॥२८०॥

'केयी'त्यादि । केचिद्वादिनः 'इह' अस्मिन् प्रस्तावे किमत आह–'उग्गहं बेंति'त्ति 'अवग्रहम्' एकसामयिकमर्थग्रहणं 'ब्रुवते' व्याचक्षते, किंविशिष्टमत आह–'आलोयणपुव्वं'ति आलोचनापूर्वं, किलान्यैरप्युक्तमेव–अस्ति ह्यालोचनाज्ञानं, प्रथमं निर्विकल्पकम् । (बालमूकादिविज्ञानसदृशंशुद्धवस्तुज ॥१॥ मित्यतः ) 'तत्थ' तत्रालोचने 'सामान्यं गृहीतम्' अव्यक्तः शब्दो गृहीतस्तेन श्रोत्रेति ग-म्यते, ततः किमित्यत आह–'अथे' त्यनन्तरं, क्वेत्याह–'अर्थावग्रहकाले' व्यञ्जनावग्रहचरमसमये इत्युक्तं भवति, शब्द इत्येवं रूपा-द्व्यपोहेन 'निच्छिन्नं'निर्णीतं तद्वस्त्वित्यतः 'से जहा नामए केइ पुरिसे अव्वत्तं सद्दं सुणेज्जा तेणं सद्देत्ति उग्गहिए' इति, एवमपि यदि जयो न भविष्यति तूष्णीं तर्हि चोदकेनासितव्यं, तन्नाम प्रेक्षावता भाषितव्यं यत्रात्मलाभं लभते,अन्यथा किं तयाऽऽत्मविडम्बन-

येति गाथार्थः ॥२७३॥ अथैतदालोचनं व्यञ्जनावग्रहान्न भिद्यते, तस्य चार्थपरिशून्यत्वे न शोभनं चोदकः पश्चाद् गणयतीति साधयन् सूरिराह–'नं' मित्यादि । तद् भवता उत्प्रेक्षितं व्यञ्जनावग्रहात् पुव्वं पच्छा स एव वा होज्जा ?, अन्यावस्थानाभावात् त्रयी कल्पना, किंचातः ?, आह–'पुव्वं नत्थि'त्ति, व्यञ्जनावग्रहात् पूर्वं तावत्तन्नास्ति, कुत इत्याह–अर्थव्यञ्जनसम्बन्धाभावतः, नहि प्रसुप्तादिदेवदत्ताः ( किंचिदप्यालोचयन्ति ) नहि तदा खल्वालोचनीयमस्तीत्यभिप्रायः, शब्दस्याश्रुतत्वाद्, अतः पूर्वपक्षो ह्यसङ्गतः ॥२७४॥ पश्चात्पक्षस्तर्हि सङ्गतो भविष्यतीत्यत आह–'अत्थोग्गहोवी'त्यादि । अर्थावग्रहोऽप्येकसामयिको मतिविशेषः, यद्–यस्माद् व्यञ्जनावग्रहस्यैव मत्याद्यकारणस्य 'चरमसमये' पर्यन्तसमये प्रादुर्भावमासादयति 'तो' ततः 'पश्चादपि' पृष्ठतोऽपि व्यञ्जनावग्रहस्य 'न जुत्तं' न घटते तदालोचनं, ततः किमिति चेदुच्यते–यद्येवं ततः 'पारिसेसं' पारिशेष्यसिद्धया तदालोचनं भवेद् व्यञ्जनावग्रहः स्यान्न कश्चिद्दोषो, नाममात्रविप्रतिपत्तेरिति गाथार्थः ॥२७५॥ आह–क्रियतां तर्हि चोदकवर्गेण वर्द्धापनकमाचार्याभिप्रायाविसंवादलाभात्, सूरिराह—मा, किं कारणं ?, विरोधात्, कथं विरोध इति, अत्रोच्यते, तदालोचनमर्थस्य वा भवेत् व्यञ्जनानां वेति विकल्पद्वयं, किं चातः ?, तत्र, प्रथमविकल्पमनुवदन्नाह—'तं चे' त्यादि । समालोचनं–तदालोचनम्, 'अत्थपरिसणं' यदि सामान्यार्थोपलम्भ इति यदभ्युपगम्यते 'न वंजणं तो तं'ति 'तो' ततस्तद् व्यञ्जनं न भवति, अर्थदर्शनस्य सामान्यग्राहित्वेनाशून्यत्वाद्, आलोचनारूपव्यञ्जनस्य तु शून्यत्वात्, 'पुव्वं च वंजणोग्गहकालो सो अत्थपरिसुण्णो'त्ति साधितत्वात्, न ह्यग्रहणं ग्रहणं भवति येन त्वया वर्द्धापनकमारभ्यते इत्यभिप्रायः । द्वितीयं विकल्पमुररीकृत्याह–'अह वंजणस्स'त्ति अथ मन्यसे 'व्यञ्जनस्य' विवक्षितस्य द्रव्यक-

१ यद्यप्यत्र ११३७ पर्यायाङ्कपुरीयजिनयद्मपुस्तके पाठोऽस्ति कियान् तथापि घर्षित इति न शक्यते वाचयितुं.

लापस्य जं दरिसणं–जं गहणं तत्समालोचनमित्युच्यते तो कहमालोयणं तदिति प्रतिज्ञा, कुतः ? इत्याह–'अत्थसुन्नस्से'त्यर्थ-
ग्रहणशून्यत्वादग्रहणावस्थावदिति गाथार्थः ॥ २७६ ॥ आह–का पुनरस्य स्थानान्तरप्रसिद्धस्यालोचनस्य गतिरिति, आचार्य आह–
न जानेऽहमपीदृशं, तथापि भवन्त एव संशयच्छेत्तार इति चेत् ,यद्येवं तस्मात्—'आलोयणं'तीत्यादि, आलोचनमित्येयं नाम भवेत्
द्वितीयं व्यञ्जनावग्रहस्यैव, स्वतन्त्रैतन्नाम्ना घटमानत्वात्, तदिदं वर्धापनकमिति चेत् न, यतो भवेत् कथं सामान्यग्रहणं ? तत्र–
व्यञ्जनावग्रहेऽर्थग्रहणशून्यत्वात्, अतः किमुच्यते–तत्थ सामन्नं गहियं, अह अत्थावग्गहकाले तदोत्ति निच्छिण्णं, न ह्यविशिष्टाश्र-
याश्रितेर्जयपताका हर्तुं शक्यते इति भावार्थः ॥ यच्चोक्तं ' अस्ति ह्यालोचनाज्ञान'मित्येवमादि तदर्थावग्रहज्ञानमालोचनं तद्व्यतिरि-
क्तत्वादिति गाथार्थः ॥ २७७ ॥ अथ 'दुर्बलं वादिनं दृष्ट्वाऽभ्युपगमोऽपि कर्तव्य' इति न्यायप्रदर्शनार्थमाह—'गहितं वे'त्यादि,
गृहीतं वा भवतु 'तर्हि'ति तत्र व्यञ्जनादानकाले 'सामान्यं' वस्तुसामान्यं, कथमनीहिते तस्मिन् सामान्येऽन्तर्मुहूर्तमात्रं कालं,अर्था-
वग्रहकाले एकसामयिक इति प्रक्रमाल्लभ्यते, विशेषणमेव शब्द इति ॥ २७८ ॥ ननु—'अत्थे'त्यादि, अर्थावग्रहसमये व्यञ्जनाव-
ग्रहाचरमसमयभाविनि 'धीसु' पुढो २ असंखेज्जसमयिया दोऽवि, किंविशिष्टावित्याह–'तक्कावगमसभावा' जहासंखं, काविवत्याह–
ईहावायौ कथं युक्तौ ? येन व्यञ्जनावग्रहचरमसमये व्यक्तशब्दग्राह्यथाश्रुतसूत्रव्याख्यां कारयसि, ननूक्तम् ' जइ होज्ज सद्दबुद्धी
तोऽवाओ चेव सो होज्ज'त्ति तस्माद् गम्ये सूत्रार्थे सति व्यञ्जनार्थावग्रहेहापायधारणाक्रम एवाश्रयणीय इति समस्तप्रकरणार्थः
॥ २७९ ॥ अथ चोदशेपमाशिशङ्कयिषुराह—'खिप्पेयरादी'त्यादि, 'जमोग्गहो'त्ति यद्–यस्मादवग्रहो–मतिज्ञानविशेषः क्षिप्रेत-
रादिभेदः प्रतिपादितः क्वचिदिति शेषः, 'क्षिप्रमवगृह्णाती'त्यादिवचनाद् अतो नावश्यमवग्रहः समयमात्रं, तन्मात्रत्वेऽस्य विशेषणस्य

नैष्फल्यापत्तेः, बाह्वित्यादेश्च, तेनैतदुक्तं भवति–सर्वस्यैव श्रोतुरविशेषेण प्राप्तिविषयस्थस्य शङ्खभेर्यादिद्रव्याभिसरणे सति बहुग्रहणात् ज्ञायते शङ्खभेर्यादिविशेषरूपेणावग्रहणमवग्रहः बहुविधाबहुविधविशेषणोऽपि गम्भीरादिविशेषग्रहणं, यस्मादेवमतः 'तो'त्ति तस्माद् 'विशेषविज्ञानं' शब्दज्ञानं 'युज्यते' घटते, किंविशिष्टमत आह–'सद्दो'त्ति शब्दोऽयमिति, कुतः ? इत्याह–'विकल्पवशतः' विकल्पवशात्, तथाहि–क्वचित्सामान्यग्रहणं शब्दमात्रत्वात्, अबहुग्रहणादित्यर्थः, क्वचिद्विशेषग्रहणं बहुविधग्रहणाद् एवंभूताद्विकल्पवशात्, क्वेत्याह–'सुत्तम्मि' सूत्रे, अस्य पूर्वपक्षतां दर्शयन्नाह–'जं केइ'त्ति ॥ २८० ॥ यदेवं केचन वादिनो यथाश्रुतसूत्रव्याचिख्यासयाऽऽत्मानं बहु मन्यन्ते तदपाकुर्वन्नन्यया दिशा प्राह–

स किमोग्गहोत्ति भण्णइ गहणेहाऽवायलक्खणत्तेऽवि ? । अह उवयारो कीरइ तो सुण जह जुज्जए सोऽवि ॥
सामण्णमेत्तगहणं नेच्छइओ समयमोग्गहो पढमो । तत्तोऽणंतरमीहियवत्थुविसेसस्स जोऽवाओ ॥२८२॥
सो पुणरीहाऽवायावेक्खाओऽवग्गहोत्ति उवयरिओ । एस्सविसेसावेक्खं सामण्णं गेण्हए जेणं ॥२८३॥
तत्तोऽणंतरमीहा तत्तोऽवाओ य तव्विसेसस्स । इय सामण्णविसेसावेक्खा जावंतिमो भेओ ॥२८४॥
सव्वत्थेहावाया निच्छयओ मोत्तुमाइसामण्णं । संववहारत्थं पुण सव्वत्थावग्गहोऽवाओ ॥२८५॥
तरतमजोगाभावेऽवाउ च्चिय धारणा तदंतम्मि । सव्वत्थ वासणा पुण भणिया कालन्तरेऽवि सई ॥२८६॥
सद्दोत्ति सुए भणितं विगप्पओ जइ विसेसविन्नाणं । गिण्हिज्ज तंपि जुज्जइ संववहारोग्गहे सव्वं ॥२८७॥
णिप्पेपराइभेओ पुव्वोइयदोसजालपरिहारो । जुज्जइ संताणेण य सामण्णविसेसववहारो ॥२८८॥

'स किं' मित्यादि। अयमत्र परमार्थोऽस्ति—तदित्थंभूतं विज्ञानं किन्तु ग्रहणेहापायलक्षणत्वेऽपीति, ग्रहणं चेहा चापायश्चेति तल्लक्षणं यस्य तत्तथा तस्य भावस्तत्त्वं तस्मिन्, अपिशब्दोऽभणननिमित्तार्थः,अतो ग्रहणेहापायलक्षणत्वेऽपि सतीति स व्यक्तः शब्दः, 'किं'मिति क्षेपार्थः, ततश्चायमर्थः स्वरकाक्वा–किमवग्रहो भण्यते तैर्दुरात्मभिरिति ?, मृदुकाक्वा वा नेयं, ततः किमिति प्रश्नार्थः स्यात्, परोऽपि चाचार्यहक्काप्रश्नतो विह्वलत्वादाह–नैव, ततः माग्उक्तार्थसिद्धिरेवेति किं बहुना ?, श्रौतोऽप्यर्थः सूत्रस्यास्तीति ख्यापयन्नाचार्य एव परं शिक्षयन्नाह—'अह्'ेति पश्चादर्धम्। अथ मन्यसे–उपचारः क्रियते तस्यैव शब्दस्यावग्रहत्वे इति, ततः शृणु तूष्णींभूत्वा यथा–येन प्रकारेण युज्यते सोऽप्युपचार इति गाथार्थः ॥२८१॥ 'सामन्ने' त्यादि गाथात्रयं, सामान्यमात्रग्रहणं वस्तुतो नैश्चयिकोऽयमवग्रहः प्रथमो—निरुपचरितः समयनिर्धृतत्वात्,ततोऽनन्तरमीहितस्य वस्तुविशेषस्य योऽपायः–अपायो यथा शब्दोऽयमिति, स किमित्यत आह–'सो पुण'त्ति सोऽवायो पुणोत्ति–पुणो द्वितीयं धर्ममङ्गीकृत्य, किमत आह–अवग्रह इति। एवं उपचरितः परिभाषितः, केन निमित्तेनेत्यत आह—'ईहावायावेक्खाओ',एतदेव भावयन्नाह–'एस्सविसेसावेक्खाओ सामन्नं–शब्दमात्रं येन कारणेन ततोऽनन्तरमीहा जायते,शब्दत्वे सति किमयं शाङ्खः शार्ङ्गो वेति ?, ततोऽपाय एव शब्दविशेषस्य शाङ्ख एवायमिति,एवं प्रभूतं कालं मुहुर्मुहुर्भावनीयं, आह–'इय सामान्नविसेसावेक्खा कायव्वा',कियतीं भुवं यावदित्याह–यावदन्त्यो भेदो लब्धो भवति यथासम्भवमिति भावनेति गाथात्रयार्थः ॥२८२–३–४॥ अयमत्र भावार्थः—'सव्वे' त्यादि 'सर्वत्र' विषयपरिच्छेदने, किमत आह–ईहापायौ भवतः, किं व्यवहारेण ?, नेत्याह–'निश्चयतः' परमार्थेन, किं सर्वथैव ?, नेत्याह–'निच्छयतो'त्ति द्विरावर्त्यते, ततश्च नैश्चयिकमादिसामान्यग्रहणं मुक्त्वा यदाऽऽलम्बनाद्याद्यावीहापायौ तस्यावग्रहत्वादिति भावनीयं, तदत्र विशिष्टव्यवहारप्रवृत्त्यङ्गमाह, संव्यवहारार्थं पुनः सर्वत्रोपर्युपरिधावने

योऽपायो–निश्चय एकपक्षनिक्षेपक्षमः सोऽव्यग्रहो भवति हि,प्रवृत्तेः तरतमयोगानुधावनात् ॥२८५॥ तदभावे तु किमित्यत आह–'तरे'-त्यादि, तरतमयोगाभावे यथासम्भवमिति सामर्थ्याद् बोद्धव्यं, किमत आह–अपाय एव, न तदनन्तरमीहेति वाक्यार्थः, अत एवाह–'धारणा' तदर्थाप्रच्युतिसंज्ञिता 'तदन्ते' अपायान्ते भवति, (इतरद्धारणाद्वयं) कस्यान्ते भवतीत्यत आह—'वासणा पुण भणिया' सर्वेऽपायान्तरालभाविनि अपायेऽविरोधितया, किमियमेव ?,नेत्याह—कालान्तरस्मृतिश्चेति ॥ तदनेन ग्रन्थेन प्रथमसमयभाव्यर्थावग्रहो नैश्चयिकोऽन्तर्मुहूर्त्तद्वयोत्तरकालभावी चौपचारिक इत्युक्तमुपचारविधिश्च, तदेवं विभक्तेऽमुमेवावग्रहमङ्गीकृत्य स्वाद्यथाश्रुतसूत्रव्याख्या–'से जहा नामये–केइ पुरिसे अव्वत्तं सद्दं सुणेज्जा तेणं सद्देत्ति उग्गहिए ण उणं जाणइ के वेस सद्दे ततो ईहं' मित्येवमादि,आह भाष्यकारः–सद्दोत्ति सुए भणितं निगप्पओ जइ विसेसविन्नाणं । गिण्हिज्ज तंपि जुज्जइ संववहारोग्गहे सव्वं ॥ २८७ ॥ सम्बन्धेनैवोक्तार्थेति न प्रतन्यते, नतरं विकल्पत इति–विवक्षयेति, अतः प्रागुपन्यस्तचोद्यस्यान्यविषयतामाह—'खिप्पे'त्यादि । अस्य भावार्थः–क्षिप्रेतरादिभेदं यत् पूर्वोदितदोषजालं समयोपयोगबाहुल्यापत्तिश्च तस्येदानीमेवं सति परिहारो युज्यते नैश्चयिकार्थावग्रहवादिनस्तस्य व्यावहारिकार्थावग्रहविषयत्वादितरस्य तु सामान्यमात्रग्रहणात्, पूज्यास्त्वाद्यसमय एव सर्वं क्षिप्रेतरादिविशेषजालं प्रतिपद्यन्ते, तथाभूतापायाग्र्यकार्यदर्शनात्, किल विशिष्टात् कारणाद् विशिष्टं कार्यं जायते, नाविशिष्टात्, सकलत्रैलोक्यैश्वर्यत्वप्रसङ्गात्,जिनभद्रगणिक्षमाश्रमणपूज्यपादैस्तु नोक्तं सुज्ञानत्वाद्, उत्तरत्र तूक्तं, सुखसंव्यवहार्यत्वात्, तथैवं सति 'संतावेण य'त्ति सन्तानाच्च–सामान्यविशेषलक्षणाल्लोके व्यवहारो युज्यते, इदमुक्तं भवति–इदं तदिति वा योऽध्यवसितोऽर्थः स प्राक् सामान्यापेक्षया विशेषः स एव चाकांक्षितविशेषापेक्षया सामान्यमेवं यावदन्त्यो भेदोऽनाकांक्षा चेत्युक्तमेतत्प्रागेवेति, इत्थं चैतदङ्गीकर्त्तव्यं, अन्यथा वास्तवापाया-

देनाशंकानिवृत्तिः स्यात्, तथा च सति नोत्तरधर्मजिज्ञासया तद्विशेषप्रतिपत्तिर्भवेत्, तथापि च सति व्यवहाराभावः, कुतः ?, उत्तरत्रावग्रहनिवृत्तावीहानिवृत्तिरीहानिवृत्तावपायनिवृत्तेः, ईहेनोत्तरत्र भविष्यतीति चेत् न, तस्या अवग्रहपूर्वकत्वाद् अवग्रहस्य च सामान्यग्राहित्वादीहायाश्च तद्विशेषव्यापाररूपत्वादतोऽयमेष्टव्य इत्यनेन द्वितीयतृतीयगाथयोः 'उग्गहो एक्कं समयं'तीत्येवं तावद् व्याख्यातमेतद्व्याख्यानाच्चावग्रहः परिसमाप्त इति गाथार्थः ॥ २८८ ॥ साम्प्रतमीहां व्याचिख्यासुराह—

इय सामण्णग्गहणाणंतरमीहा सदत्थवीमंसा । किमिदं सद्दोऽसद्दो व ? को होज्ज व संखसंगाणं ? ॥२८९॥
महुराइगुणत्तणओ संखस्सेवत्ति जं न संगस्स । विन्नाणं सोऽवाओ अणुगमवइरेगभावाओ ॥२९०॥
तयणंतरं तयत्थाविच्चवणं जो य वासणाजोगो । कालंतरे य जं पुणरणुसरणं धारणा सा उ ॥२९१॥
सेसेसुवि रूवाइसु विसएसुं होंति रूवलक्खाइं । पायं पच्चासन्नत्तणेणमीहाइवत्थूणि ॥२९२॥
थाणुपुरिसाइ-कुट्टुप्पलाइ-संभियकरिल्लमंसाई । सप्पुप्पलनालाइ व समाणरूवाइविसयाइं ॥२९३॥
एवं चिय सुमिणाइसु मणसो सद्दाइएसु विसएसु । होंतिंदियवावाराभावेऽवि अवग्गहाईया ॥२९४॥

'इये'त्यादि, यथावत् स्वधियाऽनुसरणीयम् ॥ २८९ ॥ अपायमाह—'महुरादी'त्याद्यपि (सुगमं) ॥ २९० ॥ धारणामाह—'तयणंतरे'त्याद्यपि ॥ २९१ ॥ तदेवं शब्दसूत्रं विषयविभागेन व्यवस्थाप्य यदुक्तं सूत्रकारेण 'एवं एएणं अभिलावेणं अव्वत्तं रूवं रसं गन्धं फासं च' इत्यादि, तदङ्गीकृत्याह—'सेसेसुव्वी'त्यादि, स्पष्टार्था, प्रत्यासन्नत्वं प्रायःसमानधर्मित्वमिति ॥२९२॥ तथा च—'थाणिव'त्यादि, स्वधिया नेयम् ॥२९३॥ यदुक्तम् "से जहा नामए केइ पुरिसे अव्वत्तं सुमिणय'मित्यादि, तच्छोधयन्नाह—'एवं

च्चिये'त्यादि, भावितार्थे, नवरं जाग्रतः सुप्तस्य च ॥ २९४ ॥ मूलगाथैवकारार्थं साक्षादधुना आह—

उक्कमओऽइक्कमओ एगाभावेऽवि वा न वत्थुस्स। जं सब्भावाहिगमो तो सव्वे नियमियकमा य ॥२९५॥
ईहिज्जइ नागहियं नज्जइ नाणीहियं न यानायं। धारिज्जइ जं वत्थुं तेण कमोऽवग्गहाईओ ॥२९६॥
एतो चिय ते सव्वे भवंति भिन्ना य णेव समकालं। न वइक्कमो य तेसिं न अन्नहा नेयसब्भावो ॥२९७॥
अब्भत्थेऽवाओ चिय कत्थइ लक्खिज्जई इमो पुरिसो। अन्नत्थ धारणच्चिय पुरोवलद्धे इमं तंति ॥२९८॥
उप्पलदलसयवेह व्व दुव्विभावत्तणेण पडिहाइ। समयं व सुक्कसक्कुलिदसणे विसयाणमुवलद्धी ॥२९९॥

'उक्कमओ' इत्यादि। भावितत्वान्न विव्रियते ॥२९५॥ तथा चाह— ईहिज्जती'त्यादि,क्षुण्णार्थम् ॥२९६॥ 'एतो च्चिये'त्यादि,'अत एव' एवं क्रमनियमात् ते सर्वे स्वतन्त्रा एव भवन्ति, असङ्कीर्णत्वादपूर्वापूर्ववस्तुपर्यायग्रहणात्, अत एव न समकालं, क्रमवृत्तिक्षयोपशमजन्यत्वात्, न च तेषां व्यतिक्रमः,एवं क्षयोपशमाविर्भूतिस्वाभाव्याद्,अत एव न चान्यथा शब्दादिज्ञेयसद्भावः,उक्तवदिति गाथार्थः ॥ २९७ ॥ आह–अन्यथाप्यनुभूयते ज्ञेयसद्भावः ? इति, आह च—'अब्भत्थे'त्यादि। अह्नि च रात्रौ च अनवरतमभ्यस्तेऽतिपरिचिते क्वचिद्वस्तुनि प्रथमसमये एवापायोऽनुभूयते, मया त्वया वेति वाक्यशेषः,यथाऽयं पुरुषः, तथाऽन्यत्र वस्तुनि धारणैव प्रथममुपलभ्यते, किंविशिष्टे ?–पूर्वोपलब्धे,कथमित्यत आह–इदं तदिति यन्मया प्रागुपलब्धमासीदिति गाथार्थः ॥२९८॥ उच्यते,नैतदेवम्,अस्यान्यथासिद्धत्वाद्,आह–'उप्पे'त्यादि, इह दुव्विभावत्तणेण पडिहाइ जुगवमिव विसयाणमुवलद्धी,अवग्रहादेरसंवेदनमिति यदुक्तं भवति,क्वेवेत्याह–'उप्पलदलसयवेहव्व''सुक्कसक्कुलिदसणे वा', न चैतदेवं, कालस्य सूक्ष्मत्वादाशु संचारित्वाच्च मनस एकत्वादणुत्वात् मनोवेष्टिते-

न्द्रियविषयप्रवृत्तविमनस्केन्द्रियमात्रव्यापारेऽप्युपलम्भाभावात्, 'युगपद् ज्ञानानुत्पत्तिर्मनसो लिङ्ग'मिति वचनादिति गाथार्थः ॥२९९॥

'समासेणं'न्त्यस्य प्रयोजनमाह—

सोइंदियाइभेएण छव्विहाऽवग्गहादओऽभिहिआ। ते होंति चउव्वीसं चउव्विहं वंजणोग्गहणं ॥३००॥

अट्ठावीसइभेयं एयं सुयनिस्सियं समासेणं। केई तु वंजणोग्गहवज्जे छोढूणमेयम्मि ॥ ३०१ ॥

अस्सुयमिस्सियमेवं अट्ठावीसइविहंतिभा(पहा)संति। जमवग्गहो दुभेओऽवग्गहसामण्णओ गहिओ॥३०२॥

तव्वइरित्ताभावा जम्हा न तमोग्गहाइओ भिन्नं। तेणोग्गहाइसामण्णओ तयं तग्गयं चेव ॥ ३०३ ॥

किह पडिकुक्कुडहीणो जुज्झे ? चिंतेणऽवग्गहो ईहा। किं सुसिलिट्ठमवाओ दप्पणसंकंतबिंबंति ॥३०४॥

जह उग्गहाइसामण्णओऽवि सोइंदियाइणा भेओ। तह उग्गहाइसामण्णओऽवि तमणिस्सिया भिन्नं॥३०५॥

अट्ठावीसइभेयं सुयनिस्सियमेव केवलं जम्हा। जम्हा तम्मि समत्ते पुणरस्सुयनिस्सियं भणियं ॥३०६॥

'सोइंदियाती'त्यादि, 'सोइंदियाइभेएण छव्विहेण छव्विहा अवग्गहाद्यो–अवग्गहेहापायधारणातो भणियातो होंति, चउव्वीसं 'छ चउक्का चउव्वीसं'ति, तथा चउव्विहं च वंजणुग्गहणम् ॥ ३०० ॥ एवं 'अट्ठे'त्यादि, 'समासेणं'त्ति मध्यमया प्रतिपत्त्येति गाथार्द्धार्थः। अत्र केपाञ्चिन्मतमाह—'केई तु' आयरिया 'एयंमि'त्ति 'एयम्मि' सामान्येन मतिज्ञाने, किंविशिष्टे ? इत्याह 'वंजणोग्गहवज्जे' व्यञ्जनावग्रहचतुष्टयपतितत्वेन चतुर्विंशविधे २४ 'छोढूण' प्रक्षिप्य, किमत आह–'असुयनिस्सियं' उप्पत्तियादि ४, एवं 'अट्ठावीसइविहं पहासंति', किं पुनः कारणं व्यञ्जनावग्रहचतुष्टयममुतः पात्यते ? इत्यत आह–'जमवग्गहो दुभेदोऽवि

अवग्गहसामन्नओ एक्को चेव गणिज्जइ, सामान्यवादित्वादस्माकमिति सार्धगाथार्थः ॥ ३०२ ॥ इतश्चैतदेवम्—'चउ' इत्यादि, चत्वारोऽवग्रहादयः, तेभ्यो व्यतिरिक्तं चतुर्व्यतिरिक्तं तस्याभावश्चतुर्व्यतिरिक्ताभावस्तस्मात्, यस्मान्न तदौत्पत्तिक्यादि अवग्रहादिभ्यो भिन्नं—अर्थान्तरं, येनैवं तेनावग्रहाद्यस्तित्वसामान्यात् तदन्तर्गतमेव—चतुर्विंशतिविधमतिज्ञानान्तर्गतमेवेति गाथार्थः ॥ ३०३ ॥ तत्रे-तरस्यात्—कथं पुनरत्राप्यवग्रहादयः ? इत्यत आह—'किहे'त्यादि, कथं मतिकुक्कुटहीनोऽयं कुर्कुटो युध्येत ?, बिम्बेनेति चेत् अव-ग्रहः अयमत्र भवति, ईहा का ? इत्यत आह—'किं बिंबं से सुसिलिट्ठं किं दप्पणसंकंतं उदगकलंदगसंकन्तं व'त्ति, अतोऽपाय आह—'दप्पणसंकंतबिंबं' स ह्यघातविप्रलम्भसद्भावाद् उदके च तदभावात्, तस्मादेवमष्टाविंशतिभेदभिन्ना मतिः, पूर्वपक्ष इति गाथार्थः ॥३०४॥ अत्राचार्य आह—'जहे'त्यादि, यथा—येन प्रकारेण 'उग्गहातिसामन्नओऽवि' उग्गहेहावायधारणत्ते तुल्लेऽवि 'छण्हं चउक्काणं'ति सामर्थ्याद्गम्यते, पुनश्च 'सोइंदियातिणा' अपान्तरालभेदेन भेदो—नानात्वं, तथाहि—एके स्पर्शनेन्द्रियसम्बन्धिनो यावदन्ये तु मनःसम्बन्धिन इति, तथा किमित्यतो दार्ष्टान्तिकोपसंहारमाह—'तह उग्गहाइसामन्नओऽवि' एतेऽप्यवग्रहादय इमे चा-वग्रहादय इत्यविशेषतोऽपि 'तं' उप्पत्तियाइबुद्धिचउक्कं 'अणिसियं' अपान्तरालभेदनिबन्धनतया 'भिन्नं' पृथग्भूतं वर्तते, श्रुतनिश्रितादिति प्रक्रमाद् गम्यते, अतः किमिति ?, उच्यते—"जमवग्गहो दुभेदोऽवग्गहसामण्णओ एक्को" तथा—"चउवइ-रित्ताभावा जम्हा ण तमोग्गहादितो भिण्णं । तेऽणुग्गहाइसामण्णओ तदन्तग्गयं चेव ॥" ननु पौर्वापर्येणालोच्य भाष्यमाणे किं ग्रहणकं केनचिद् गृह्यते येन व्यञ्जनावग्रहचतुष्कं पातयित्वौत्पत्तिक्यादिबुद्धिचतुष्टयप्रक्षेपेणाष्टाविंशतिविधत्वं मतेः पूर्यते ? इत्यत एवाह—'अट्ठावी'त्यादि, तस्मात् श्रुतनिश्रितमेवाष्टाविंशतिविधं, नान्येन तदेवमिति भावना, अपिच—यस्मात् 'तस्मिन्' श्रुतनिश्रिते 'समासे'

पारङ्गते मति 'पुनः' पश्चाद्श्रुतनिश्रितं भणितं भगवता सूत्रकारेण । "सेत्तं सुयनिस्सियं, से किं तं अस्सुयनिस्सिय" मित्यागमात् । अथवा 'केई तु' अमुतः प्रारभ्य सार्द्धगाथासूत्रं परमतं, अत्राचार्य आह–'चउ' इत्यादि गाथार्थः प्राग्वद् व्याख्येयः, नवरं "तदन्तगयं चेव–अट्ठावीसतिविहं मतिण्णाणं तग्गयं चेव" किमेतत्प्रक्षेपात् तदेवं पूर्य्यते ?, अतदन्तर्गतेन पूरणस्य न्याय्यत्वात् । कथं पुनरिदमेतदन्तर्गतमित्यत आह–'किहे'त्यादि प्राग्वत् ॥ किं सर्वथैव तदेतदन्तर्गतमाहोस्वित् कथञ्चिदित्याह–'जहे'त्यादि प्राग्वत् ॥ ॥ ३०६ ॥ तदेवमस्याष्टाविंशतिविधत्वमावेद्यास्यैवान्यया विवक्षया बहुतरभेदत्वमाह—

जं बहुबहुविहखिप्पानिस्सियनिच्छियधुवेयरविभिन्ना। पुणरुग्गहादओ तो तं छत्तीसं तिसयभेयं ॥३०७॥

नाणासद्दसमूहं बहुं पिहं मुणइ भिन्नजाईयं। बहुविहमणेगभेयं एक्केक्कं निद्धमहुराई ॥३०८॥

खिप्पमचिरेण तं चिय सरूवओ जं अणिस्सियमलिंगं। निच्छियमसंसयं जं धुवमचंतं न उ कयाइ ॥३०९॥

एत्तो चिय पडिवक्खं साहिज्जा निस्सिए विसेसो वा। परधम्मेहिं विमिस्सं निस्सियमविणिस्सियं इयरं ॥३१०॥

एयं बज्झब्भंतरनिमित्तयइचित्तओ मइबहुत्तं । किंचिम्मेत्तविसेसेण भिज्जमाणं पुणोऽणंतं ॥३११॥

'ज'मित्यादि, यद्–यस्मात् पुनरवग्रहादयो बह्वित्यादिसेतराः सन्तो द्वादश १२ भवन्त्यतस्तन्मतिज्ञानं षड्त्रिंशत्त्रिशतभेदं भवति ३३६, अष्टाविंशतेर्भेदानां एकैकस्य द्वादशभिर्गुणनादिति गाथार्थः ॥३०७॥ अथाद्यभेदव्याचिख्यासयाऽऽह—इह श्रोता आचार्यान्तराभिप्रायेणार्थावग्रहसमये, अथ त्वेतदाचार्याभिप्रायस्ततोऽन्तर्मुहूर्त्तेन 'बहुं मुणइ'त्ति बहु मन्यते–बहु अवगृह्णाति, किं ?, 'नानाशब्दसमूहं' द्रडिपटहमृदङ्गवेणुसम्मिश्रं किंविशिष्टमत आह–'भिन्नजातीयं' अन्यान्यप्रकारं, अत एवाह–'पिहं'ति पृथग्व्यक्तिकं, तथा

बहुविधमनेकभेदमवगृह्णात्येव एकैकस्निग्धमधुरादिगुणोपेतम् ॥२०८॥ 'खिप्प'मित्यादि, क्षिप्रमवगृह्णाति, किमुक्तं भवतीत्यत आह—'अ-चिरेण' तूर्णमित्यर्थः, तथा 'तं चिय सरूवओ 'ज'मिति यत्तदेवावगृह्णाति 'स्वरूपतः' स्वरूपमात्रत एव तदनिश्रितं, किमुक्तं भवतीत्याह—'अलिङ्गं' न पताकयेव देवकुलं,तथा यदसंशयमवगृह्णाति तन्निश्चितं,तथा यदवश्यमवगृह्णात्येव,नतु कदाचित्,तद् ध्रुवमुच्यते ॥२०९॥ इत-रग्रन्थं व्याचिख्यासुराह—'एत्तो चिये'त्यादि, अत एव पदसमूहात् प्रतिपक्षं साधयेद्यावदध्रुवं, तथाहि—अबहुमवगृह्णाति शब्दमात्रमेकजा-तीयमित्यर्थः, अबहुविधमेकपर्यायमेव, 'अक्षिप्रं' चिरेण, निश्रितं लिङ्गाद्, अनिश्चितं सन्दिग्धं, अध्रुवं कदाचिदेव, अथवा निश्रितानि-श्रितयोरपरं विशेषमाह—निश्रिते—निश्रितस्य 'विशेषो' भेद इतरस्मात्, किंविशिष्टः ? इत्याह—निश्रितं परधर्मैर्विमिश्रं अवग्रहणमुच्यते, तद्यथा—गामेव सारङ्गधर्मैरवगृह्णतः, अनिश्रितमवगृह्णाति गामेव गोधर्मैरिति, एवं सर्वत्रायोजनीयमिति गाथार्थः ॥२१०॥ उपसंजिही-र्षुराह—'एव'मित्यादि, 'एवं' अनया दिशा मतिबहुत्वं भावनीयं, कुतः ?—बाह्याभ्यन्तरनिमित्तभेदात्, तत्र बाह्यनिमित्तवैचित्र्यं आलोकविषयगतस्पष्टविमध्याव्यक्ताल्पमहत्त्वसन्निकर्षभेदात्, अभ्यन्तरवैचित्र्यं तु आवरणक्षयोपशमोपयोगोपकरणेन्द्रियनानात्वात्, एतेषामपि मन्दमन्दतरादिभेदाद् एतदेव ईषद्भेदाद् भिद्यमानमनन्तं स्यात् । अतः प्रागुक्तं निर्युक्तिगाथाद्वयं व्याख्यातमिति प्रकरणार्थः ॥ २११ ॥ अनैवेदानीं विशेषोपलम्भार्थमिदमाह—

इह संसयादणंतब्भावाओऽवग्गहादयोऽन्नाणं । अणुमाणमिवाह न संसयाइसब्भावओ तेसुं ॥२१२॥
ननु संदिद्धे संसयविवज्जया संसओऽह चेहाऽवि । बच्चासो वा निस्सियमवग्गहोऽणज्झवसियं तु ॥२१३॥
इह सज्झसोग्गहाईण संसयाइत्तणं तहवि नाम । अब्भुवगंतुं भण्णइ नाणं चिय संसयाईया ॥२१४॥

वत्थुस्स देसगमगत्तभावओ परमयप्पमाणं च । किह वत्थुदेसविण्णाणहेयवो ? सुणसु तं वोच्छं ॥३१५॥
इह वत्थुमत्थवयणाइपज्जयाणंतसत्तिसंपन्नं । तस्सेगदेसविच्छेयकारिणो संसयाईया ॥३१६॥
अह चेव सव्वधम्मावभासया तो न नाणमिट्ठं ते। नणु निन्नओऽवि तद्देसमेत्तगाहित्ति अन्नाणं ॥ ॥३१७॥
जइ एवं तेण मुहं अन्नाणी कोऽवि नत्थि संसारी । मिच्छद्दिट्ठीणं ते अन्नाणं नाणमियरेसिं ॥३१८॥
सदसदविसेसणाओ भवहेउजहिच्छिओवलम्भाओ। नाणफलाभावाओ मिच्छद्दिट्ठिस्स अण्णाणं ॥३१९॥
एगं जाणं सव्वं जाणइ सव्वं च जाणमेगंति । इय सव्वमयं सव्वं सम्मद्दिट्ठिस्स जं वत्थुं ॥३२०॥
जे संसयादिगम्मा धम्मा वत्थुस्स तेऽवि पज्जाया । तदहिगमत्तणओ ते नाणं चिय संसयाईया ॥३२१॥
पज्जायमासयंतो एक्कंपि तओ पओयणवसाओ । तत्तियपज्जायं चिय तं गिण्हइ भावओ वत्थुं ॥३२२॥
निण्णयकालेऽवि जओ न तहारूवं विदन्ति ते वत्थुं । मिच्छद्दिट्ठी तम्हा सव्वं चिय तेसिमण्णाणं ॥३२३॥
फड्डयरं पन्नाणं विवज्जओ चेव मिच्छद्दिट्ठीणं । मिच्छाभिणिवेसाओ सव्वत्थ घडे व्व पडबुद्धी ॥३२४॥
अहवा जहिंदनाणोवओगओ तम्मयत्तणं होइ । तह संसयाइभावे नाणं नाणोवओगाओ ॥३२५॥
तुल्लमिणं मिच्छस्सवि सो सम्मत्ताइभावसुन्नोत्ति। उवयोगम्मिऽवि तो तस्स निघमन्नाणपरिणामो ॥३२६॥
जं निन्नओवओगेऽवि तस्स विवरीअवत्थुपडिवत्ती । तो संसयाइकाले कत्तो नाणोवओगो से ? ॥३२७॥
अहवा जए सुयनाणावसरे सामण्णदेसणं भणियं । तह मइनाणावसरे सव्वमइनिरूवणं कुणति ॥३२८॥

अवग्रहसंशयोज्ञानता सम्यग्दृष्टिमिथ्यादृष्ट्योर्ज्ञानाज्ञाने

बहुविधमनेकभेदमवगृह्णात्येव एकैकस्निग्धमधुरादिगुणोपेतम् ॥२०८॥ 'खिप्प'मित्यादि, क्षिप्रमवगृह्णाति, किमुक्तं भवतीत्यत आह—'अचिरेण' तूर्णमित्यर्थः, तथा 'तं चिय सरूवओ 'ज'मिति यत्तदेवावगृह्णाति 'स्वरूपतः' स्वरूपमात्रत एव तदनिश्रितं, किमुक्तं भवतीत्याह—'अलिङ्गं' न पताकयेव देवकुलं, तथा यदसंशयमवगृह्णाति तन्निश्चितं, तथा यदवश्यमवगृह्णात्येव, नतु कदाचित्, तद् ध्रुवमुच्यते ॥२०९॥ इतरशब्दं व्याचिख्यासुराह—'एत्तो चिये'त्यादि, अत एव पदसमूहात् प्रतिपक्षं साधयेद्यावदध्रुवं, तथाहि—अबह्ववगृह्णाति शब्दमात्रमेकजातीयमित्यर्थः, अबहुविधमेकपर्यायमेव, 'अक्षिप्रं' चिरेण, निश्रितं लिङ्गात्, अनिश्चितं सन्दिग्धं, अध्रुवं कदाचिदेव, अथवा निश्रितानिश्रितयोरपरं विशेषमाह—निश्रिते—निश्रितस्य 'विशेषो' भेद इतरस्मात्, किंविशिष्टः ? इत्याह—निश्रितं परधर्मैर्विमिश्रं अवग्रहणमुच्यते, तद्यथा—गामेव सारङ्गधर्मैरवगृह्णतः, अनिश्रितमवगृह्णाति गामेव गोधर्मैरिति, एवं सर्वत्रायोजनीयमिति गाथार्थः ॥२१०॥ उपसंजिहीर्षुराह—'एव'मित्यादि, 'एवं' अनया दिशा मतिबहुत्वं भावनीयं, कुतः ?—बाह्याभ्यन्तरनिमित्तभेदात्, तत्र बाह्यनिमित्तवैचित्र्यं आलोकविषयगतस्पष्टविभक्ताव्यक्ताल्पमहत्त्वसन्निकर्षभेदात्, अभ्यन्तरवैचित्र्यं तु आवरणक्षयोपशमोपयोगोपकरणेन्द्रियनानात्वात्, एतेषामपि मन्दमन्दतरादिभेदाद् एतदेव ईषद्भेदाद् भिद्यमानमनन्तं स्यात्। अतः प्रागुक्तं निर्युक्तिगाथाद्वयं व्याख्यातमिति प्रकरणार्थः ॥ २११ ॥ अत्रैवेदानीं विशेषोपलम्भार्थमिदमाह—

इह संसयादणंतब्भावाओऽवग्गहादयोऽनाणं । अणुमाणमिवाह न संसयाइसम्भावओ तेसुं ॥२१२॥
नहु संदिद्ध संसयविवज्जया संसओऽह् चेहाऽवि । वच्चासो वा निस्सियमवग्गहोऽणज्झवसियं तु ॥२१३॥
इह सज्झमोग्गहाईण संसयाइत्तणं तहवि नाम । अब्भुवगंतुं भण्णइ नाणं चिय संसयाईया ॥२१४॥

मतिज्ञानस्य बह्वादयो भेदा ॥१२२॥

वत्थुस्स देसगमगत्तभावओ परमयप्पमाणं व । किह वत्थुदेसविण्णाणहेयवो ? सुणसु तं वोच्छं ॥३१५॥
इह वत्थुमत्थवयणाइपज्जयाणंतसत्तिसंपन्नं । तस्सेगदेसविच्छेयकारिणो संसयाईया ॥३१६॥
अह चेह्न सव्वधम्मावभासया तो न नाणमिट्ठं ते। णणु निन्नओऽवि तद्देसमेत्तगाहित्ति अन्नाणं॥ ॥३१७॥
जइ एवं तेण सुहं अन्नाणी कोऽवि नत्थि संसारी । मिच्छद्दिट्ठीणं ते अन्नाणं नाणमियरेसिं ॥३१८॥
सदसदविसेसणाओ भवहेउजहिच्छिओवलम्भाओ। नाणफलाभावाओ मिच्छद्दिट्ठिस्स अण्णाणं ॥३१९॥
एगं जाणं सव्वं जाणइ सव्वं च जाणमेगंति । इय सव्वमयं सव्वं सम्मद्दिट्ठिस्स जं वत्थुं ॥३२०॥
जे संसयादिगम्मा धम्मा वत्थुस्स तेऽवि पज्जाया । तदहिगमत्तणओ ते नाणं चिय संसयाईया ॥३२१॥
पज्जायमासयंतो एक्कंपि तओ पओयणवसाओ । तत्तियपज्जायं चिय तं गिण्हइ भावओ वत्थुं ॥३२२॥
निण्णयकालेऽवि जओ न तहारूवं विदन्ति ते वत्थुं । मिच्छद्दिट्ठी तम्हा सव्वं चिय तेसिमण्णाणं ॥३२३॥
कइपरं वऽन्नाणं विवज्जओ चेव मिच्छद्दिट्ठीणं । मिच्छाभिणिवेसाओ सव्वत्थ घडे व्व पडबुद्धी ॥३२४॥
अहवा जहिंदनाणोवओगओ तम्मयत्तणं होइ । तह संसयाइभावे नाणं नाणोवओगाओ ॥३२५॥
तुल्लमियं मिच्छस्सवि सो सम्मत्ताइभावसुन्नोत्ति। उवयोगम्मिऽवि तो तस्स निचमन्नाणपरिणामो॥३२६॥
जं निन्नओवओगेऽवि तस्स विवरीअवत्थुपडिवत्ती । तो संसयाइकाले कत्तो नाणोवओगो से ? ॥३२७॥
अहवा जह सुयनाणावसरे सामण्णदेसणं भणियं । तह मइनाणावसरे सव्वमइनिरूवणं कुणति ॥३२८॥

अवग्रहसंशयर्योर्ज्ञानता सम्यग्दृष्टिमिथ्यादृष्ट्योर्ज्ञानाज्ञाने

॥१२३॥

एसा सम्माणुगया सव्वा नाणं विवज्जए इयरं। अविसेसिआ मइच्चिय जम्हा निद्दिट्ठमाईए ॥३२९॥
विवरीअवत्थुगहणे जं सो साहणविवज्जयं कुणइ। तो तस्सऽन्नाणफलं सम्मद्दिट्ठिस्स नाणफलं ॥३३०॥
जइ सोऽवि तस्स धम्मो किं विवरीयत्तणंति तं न भवे। धम्मोवि जओ सव्वो न साहणं किंतु जो जोग्गो॥३३१॥
जोग्गाजोग्गविसेसं अमुणंतो सो विवज्जयं कुणइ। सम्मद्दिट्ठी उण कुणइ तस्स सट्ठाणविणिओगं ॥३३२॥

'इहे'त्यादि, इहावग्रहादयो ज्ञानं, कुतः ? इत्याह—'संसयादणंतब्भावाओ'त्ति, आत्मधर्मत्वे सति संशयाद्यनन्तर्भूतत्वात्, हेत्वनैकान्तिकत्वनिरासार्थं च हेतुविशेषणं दृष्टान्तमाह—अनुमानमिवेति, अत्र लब्धावसरोऽसकृत्पराजितोऽपि धाष्टर्यात् पर आह—'न' नैतदेवं, तेष्ववग्रहादिषु संशयादिसद्भावादिति गाथार्थः ॥ ३१२ ॥ कथमित्यत आह—'णणु'इत्यादि, नन्वित्यक्षमायां 'सन्दिग्धे' सन्दिग्धापायहेतावपगृह्यमाणे संशयो निभ्रान्तं, एवं च सन्दिहानस्य विपर्ययोऽपि स्यादत उक्तं संशयविपर्ययौ, हस्तप्राप्ताविति शेषः, अथवा किमित्युक्ते इहापि संशयः, दोलायमानप्रत्ययरूपत्वादुभयसिद्धसंशयवत्, 'वा' इत्यथवा यत्परधर्मैर्निश्चितमित्यवग्रहणं तं 'वधासो' विपर्यय इत्यर्थः, न हि नृत्यन् विपर्ययो भवति, किन्त्वयमेवेत्यभिप्रायः, अवग्रहः पुनरनध्यवसितं—अनध्यवसायो वर्त्तते, सर्वतो विमुखत्वादतोऽकिञ्चित्करं मतिज्ञानं, दोषशतसहस्रजर्जरत्वात् तथाविधभाजनवदिति पूर्वपक्षः ॥ ३१६ ॥ सूरिराह—'इहे'त्यादि, इह—अस्मिन् विचारे 'साध्यं' साधनीयमवग्रहादीनामुक्तप्रकारं संशयादित्वं सम्यग्दृष्टिसम्बन्धिनामित्याकूतं, तथापि नाम 'अब्भुवगंतुं' अभ्युपगम्य तदमीषां भण्यते उत्तरं, ननु सत्यमज्ञानं संशयादयः ?, पर आह—किमत्र प्रष्टव्यं ?, आचार्य आह—'नाणं च्चिय' नाणमेव, के ?, 'संशयादयः' संशयविपर्ययानध्यवसायाः ॥ ३१४ ॥ कुतः ? इत्याह—'वत्थुस्से'त्यादि। 'वस्तुनो' गवादेः स्वपर-

अवग्रहसंशयोर्ज्ञानता सम्यग्दृष्टिमिथ्यादृष्टयोर्ज्ञानाज्ञाने

पर्यायापेक्षयाऽनन्तधर्मात्मकस्य 'देशगमकत्वभावात्' देशगमकत्वात् 'परमतप्रमाणमिव' निर्णयज्ञानवदिति, तत्रैतत् स्याद्–इतोऽसिद्धो हेतुः, तथा च प्रश्नद्वारेणाह–कथं वस्तुदेशविज्ञानहेतवः ?, संशयादय इति गम्यते, आचार्य आह–शृणु तद्वक्ष्ये इति गाथार्थः ॥३१५॥ 'इहे'त्यादि। 'इह' त्रैलोक्ये 'वस्तु' गवादि, अर्थपर्याया उच्यन्ते शब्दविपरीतवृत्ताः, न चानभिलाप्या एव प्रतिपादिताः, अभिलाप्यत्वादपि केषांचिद्, आदिशब्दः स्वपरपर्यायत्वावरोधार्थः, वचनपर्यायास्तु शब्दादिमोवसशब्दा(गता घोषा)दयः, आदिशब्दः पूर्ववत् अर्थवचनादि पर्यायाश्च ते अनन्ताश्चेति समासः, त एव शक्तयस्तत्सम्पन्नं तीर्थंकरगणधरैरावेदितमिति सामर्थ्याद् गम्यते, यदि नामैवं ततः प्रकृतोपयोगः कः ? इत्यत आह—तस्यैवंविधस्य वस्तुनः 'एकदेशविच्छेदकारिणः' एकदेशावलम्बिनोऽवग्रहादयोऽन्यथा तदनुत्थानमेव तस्मान्निर्विषयत्वात् खकुसुमरूपाद्यवग्रहणवत्, अतः संशयादयो ज्ञानमेवेति सिद्धम् ॥३१६॥ 'अहे'त्यादि, अथ चेन्न सर्वधर्मावभासका–न कात्स्न्येन गवादिसर्वधर्मग्राहिणः 'तो' ततः न ज्ञानमिष्टं 'ते' संशयादयः, आचार्य आह—ननु निर्णयोऽपि भवतो मुदितमूर्द्धाभिषिक्तः 'तद्देशमात्रग्राही'ति गवादिपिण्डदेशमात्रग्राहीति अज्ञानं प्रसजते, निर्णयोऽप्यज्ञानं एकदेशग्राहित्वात् संशयादिवदिति, अर्थैकदेशविषयत्वेऽपि निर्णयस्यैव प्रामाण्यं, न तेषामिति, ननु भूम्यालिङ्गनमारभ्यं भवता तत्प्रसाधन इति गाथार्थः॥ ३१७॥ परोऽत्र विलक्षीभूत आह—'जती'त्यादि, यद्येवं भवतः संशयोऽपि ज्ञानं तेन तवेदानीमज्ञानी नास्ति कश्चित्संसारे, छद्मस्थस्य संसारे संशयारूढत्वात् तस्य च ज्ञानत्वात्, न तत्र यदुक्तं भवता 'इया अण्णाणतो किये'त्येवमादि, तच्चासम्बद्धं स्यात्, आचार्य आह–किमिदमविज्ञाताभिधानमारभ्यते भवता 'णणु मिच्छद्दिट्ठीणं' 'ते' संसयादीया अण्णाणं, ततश्च हन्यतामज्ञानिनः क्रियेति काऽत्रासम्बद्धतेति, इतरेषां पुनः–सम्यग्दृष्टीनां ज्ञानमेव, अनध्यवसायोऽपि ज्ञानं सामान्यमात्रग्रहणादिति गाथार्थः॥ ३१८॥ किं पुनः कारणं मिथ्यादृष्टीनां तदज्ञा-

अवग्रहसंशयादीनां ज्ञानता सम्यग्दृष्टि-मिथ्यादृष्ट्योर्ज्ञानाज्ञाने

नमित्यत्र आह—'सदसते'त्यादि, भावितार्थैवेति ॥ ३१९ ॥ इतरेषां पुनस्ते किमिति ज्ञानं भवन्तीत्युच्यते—'जे एगं जाणइ से सव्वं जाणइ, जे सव्वं जाणइ से एगं जाणइ' इत्यागमप्रामाण्याद्, आह च भाष्यकारः— 'एग'मित्यादि, 'एकं' परमाणुं जानन् तत्सत्तानिबन्धनपर्यायैस्तत्सत्तानियन्धनपर्यायैश्च 'सर्वम्' अन्यूनं लोकालोकं जानाति, तत्परिज्ञाननान्तरीयकत्वादेकस्य, सर्वं च जानन्नेकं, एकपरिज्ञाननान्तरीयकत्वादस्य, एवं सम्यग्दृष्टेः सर्वं वस्तु सर्वात्मकं 'स्वपरसत्ताभावाभावोपादानापोद्यं हि वस्तुनो वस्तुत्व'मिति अभ्युपगमात्, यस्मादेवं तस्माद् 'णाणमितरेसिं'ति गाथार्थः ॥ ३२० ॥ 'जे' इत्यादि, ये संशयादिगम्या धर्म्माः सामान्यं पश्यतो विशेषानपश्यतः स्मरतश्च विशेषा—ऊर्ध्वतासामान्यादयस्तेऽपि वस्तुनः पर्यायास्तद्ग्रहणेऽपि ते ज्ञानं, उपरिष्टात् ज्ञानं न भविष्यतीति चेन्मा भवतु, को दोषः ?, अतस्तदधिगमकत्वाद्—वस्त्वंशैकगमकत्वात् ज्ञानमेव संशयादयः सम्यग्दृष्टेरिति ॥ ३२१ ॥ अयमत्र स्पष्टो विधिरित्याह—'पज्जाये'त्यादि, 'तओ' असौ घटोपयुक्तः सम्यग्दृष्टिरेकमपि अङ्गुलिगणितं पर्यायमाश्रयन् असद्भावस्थापनया परमाणुं गृह्णन् दक्षिणदिग्भागप्रतरमध्यवर्त्तिनं, कुतः ?–प्रयोजनवशात्, केनचित् कारणेनेति भावना, किमत आह—'तं गिण्हइ'त्ति तदसौ वस्तु–घटाद्यवयवि 'गृह्णाति' विषयीकरोति, तावत्पर्यायमेव यावद्भिः पर्यायैर्बाह्याभ्यन्तरवर्त्तिभिः परमाणुभिस्तन्निर्वृत्तं, तस्य तद्ग्रहणमन्तरेणाश्रयणायोगात्, तत्सव्यपेक्षस्य तथाऽवस्थानात्, प्रयोगः–यो यत्र यत्सव्यपेक्षो व्यवस्थितस्तत्र तदाकर्षण इतरेषामप्याकर्षणं भवतीति बोद्धव्यं, तद्यथा—कनकशृङ्खलाप्रबन्धेऽन्यतमकटिकाग्रहण इतरासामिति, तथा चैकपर्याय इति, एवं परमाणुजगतोर्भावना, आह–दृष्टान्तेऽनुभूयते एतन्न दार्ष्टान्तिक इति, उच्यते, विशिष्टश्रुतधरानुभविकत्वादभिनन्दनीयमेतदन्यजन्मान्तरफलत्वाद्, अत एवाह—'भावतः'परमार्थत इति, एतदुक्तं भवति–सम्यग्दृष्टेरेकान्यतमनिश्चयेऽप्यन्यनिश्चयो भवतीत्याहुर्भगवन्त इति गाथार्थः ॥३२२॥ इतरस्य विपर्ययमाह—

'निण्णये'त्यादि, निर्णयकाले घटोऽयमिति अपायकालेऽपि 'यतो' यस्मात् न तथारूपं 'विदन्ति' जानन्ति 'ते' मिथ्यादृष्टयो 'वस्तु' यथाऽयं घटः सद्द्रव्यादिभिरस्तीवद्द्रव्यादिभिस्तु नास्तीति, तस्मात् सर्वमेव निर्णयादि तेषामज्ञानमज्ञानफलत्वाद् भाषाचतुष्टयानृतवदिति गाथार्थः ॥३२३॥ अथवा न तेऽज्ञानमात्रेण मुच्यन्त इत्याह—'कट्ठे'त्यादि, कष्टतरं वा—दुःसहतरं वाऽज्ञानं मिथ्यादृष्टीनां, कथमित्याह—'वियज्जओ चेव सव्ववत्थुसु' कुतः? इत्याह—मिथ्याभिनिवेशात् घटे पटबुद्धिवत्, तस्मादेतदेवमिति गाथार्थः ॥३२४॥ 'अहे'त्यादि, अथवा यथेन्द्रज्ञानोपयोगतो वक्तुः 'तन्मयत्वम्' इन्द्रोपयोगमयत्वं भवति, तथा 'संशयादिभावे' संशयाद्यवग्रहणे सति 'नाणं'ते सम्यग्दृष्टेः, कुतः? इत्याह—ज्ञानोपयोगात्, यथेन्द्रोपयोगाद् भावेन्द्रत्वमेवं संशयादिभावेऽपि ज्ञानोपयोगाभिप्रायाज्ज्ञानमेव सम्यग्दृष्टेरिति पिण्डार्थः इति गाथार्थः ॥३२५॥ आह—'तुल्ल'मित्यादि, मिथ्यादृष्टेरपि तुल्यमदः, तस्यापि ज्ञानोपयोगाभिप्रायाविशेषाद्, उच्यते—'सो' इत्यादि स्पष्टम् ॥३२६॥ तथा हि—'ज'मित्यादि, स्पष्टार्थैत्यतः 'कइयरं वऽन्नाणं'ति स्थितं ॥३२७॥ 'अथवे'त्यादि, अथवाऽस्य मघट्टस्यापरः सम्बन्धः, यथा श्रुतज्ञानावसरे सामान्यदेशनं भणितं, अज्ञानस्याप्यभिधानादिति भावनीयम्, तथा मतिज्ञानावसरेऽस्मिन् सर्वस्या मतेः संशयविपर्ययानध्यवसायनिर्णयात्मिकायाः 'निरूवणं कुणइ' भाष्यकारोऽभेदोपचारादिति गाथार्थः ॥३२८॥ कथमित्यत आह—'एसा'इत्यादि, स्पष्टार्था ॥३२९॥ 'विवरीते'त्यादि, यस्मान्मिथ्यादृष्टिः विपरीतवस्तुग्रहणे—अन्यथावस्तुप्रतिपत्तौ साधनविपर्ययं करोति, स्नानादेर्मोक्षं प्रतिपद्यते, ततस्तस्य मिथ्यादृष्टेः सर्वं ज्ञानमज्ञानफलं, सम्यग्दृष्टेस्तु ज्ञानफलं, तत् ज्ञानं "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः" इति प्रतिपत्तेः "संयोगसिद्धीये"त्यादिप्रतिपत्तेश्च, 'उत्पद्येत हि सावस्थे'त्यादिप्रतिपत्तेश्चेति गाथार्थः ॥३३०॥ आह—'इय सव्वमयं सव्वं सम्मद्दिट्ठिस्स जं वत्थुं'ति वचनाद् यथा मोक्षो ज्ञानदर्शनचारित्रात्मकः एवं मिथ्यात्वाज्ञानाविरत्यात्मकोऽप्यतः कस्यचिदेवमसौ

अवग्रहसंशयोर्ज्ञानता सम्यग्दृष्टिमिथ्यादृष्ट्योर्ज्ञानाज्ञाने

भवतु कस्यचिच्चेवम्, अतः–"देहस्स य भेदंमि, दुन्निवि तुल्ला भविस्सामो" तस्मान्न यो लालयतीन्द्रियाणि तस्यामृतं स्रवति हस्तगतं प्रमादात्, आह च—'जई'त्यादि, यदि 'सो' विवरीयभावो 'तस्स' मोक्खस्स 'धम्मो सभावो जहा घडस्स पडो तो किं विवरीयत्तणं' मिच्छद्दिट्ठीस्स मिच्छत्ताण्णाणाविरइघणस्स, न किञ्चिदित्यर्थः, विपरीताविपरीतधर्म्मस्वभावाद् वस्तुनः। आचार्य आह—'तन्न भवे' तदेतन्न भवति, यतः–धर्मोऽपि यतः सर्वो न 'साधनं' कारणं भवितुमर्हति, किन्तु यो योग्यः–अनुगुणो धर्मः स मोक्षस्य साधन, अत एवोक्तं 'जे जत्तिया उ हेऊ भवस्से'त्येवमादि, अतः—'जोग्गे'त्यादि, अतोऽसौ मिथ्यादृष्टिः मिथ्यात्वोपहतमानसत्वात् योग्यायोग्यविशेषमजानन् विपर्ययं करोति, अतत्त्व एव तत्त्वबुद्धिं करोति, अपुण्यैरधिकृतत्वात् शलभक इवेति, सम्यग्दृष्टिरप्येवमेव करिष्यति मनोरथ इति चेत् तद् दूरेण, आह च–'सम्मद्दिट्ठी उ ण कुणइ तस्स सट्ठाणविणिओगं' तयोः योग्यायोग्योः, किं कारणं ?, विशेषज्ञत्वात्, उक्तं च–"धिगस्तु कुशास्त्राणां वैशेषिकषष्टितन्त्रबौद्धानाम्। येषां दुर्विहितत्वाद् भगवत्यनुरज्यते चेतः ॥१॥ तथा–"मिच्छुण्हाभिहयाणं छायं भवियाण केण हु करेंतो। संमत्तदयामूलो जइ जिणवरपायवो न होंतो ॥१॥" इत्येवमादि, अथवा सम्यग्दृष्टिः पुनर्ज्ञानदर्शनचारित्रत्रयं मोक्षकारणत्वेन विज्ञाय करोति स्वस्थानविनियोगम् उक्तं च–"काले सिक्खइ नाणं जिणभणियं परमभत्तिराएणं। दंसणपभावगाणि अ सिक्खइ सत्थाइं कालम्मि ॥१॥ काले य भत्तपाणं गवेसए सयलदोसपरिसुद्धं। आयरियादीणऽट्ठा पवयणमायासु उवउत्तो ॥२॥ एवं समायरन्तो काले कालं विसुद्धपरिणामो। असवत्तजोगकारी सलाहणिज्जो य भुवणम्मि ॥३॥ सयलसुरासुरपणमिअजिणगणहरभणियकिरियविहिकुसलो। आराहिऊण सम्मत्तनाणचरणाइं परमाइं ॥४॥ सत्तट्ठभवग्गहणऽब्भंतरकालम्मि केवलं नाणं। उप्पाडिऊण गच्छइ निद्धुयमलो सासयं मोक्खं ॥५॥ तत्थ य जरजम्मणमरणरोगतण्हच्छुहाभयविमुक्को। साइअपज्जव-

अवग्रहसंशयोर्ज्ञानता सम्यग्दृष्टिमिथ्यादृष्ट्योर्ज्ञानाज्ञाने

साण कालमणंतं सुहं लहइ ॥६॥ इत्यादि । 'अहवा सम्मद्दिट्ठी उ ण कुणइ' तस्य योग्यायोग्यस्योपलम्भे सति 'सट्ठाणविणियोगं' भव-मोक्षहेत्वोरिति गम्यते, ततश्च यदुक्तं-"जे जत्तिया उ हेऊ भवस्से"त्येवमादि, तदुभयविवक्षया, केवलपरमसम्यग्दृष्टिविवक्षायां त्वसत्यां रागद्वेषप्रवृत्तौ सर्वेषां हेतूनां निर्वाणाराधकत्वात्, उक्तं च-"इच्चेयाइं चत्तारि भासजायाइं भासमाणे आराहए विराहए ?,गोयमा ! सम्मद्दिट्ठी उवउत्ते भासमाणे आराहए, नो विराहए" इत्येवमादीति गाथार्थः ॥३३२॥ साम्प्रतमभिहितस्वरूपाणामवग्रहादीनां कालप्रमाणमभिधित्सुराह—

**उग्गहो एक्कं समयं ईहावाया मुहुत्तमंतं (मद्धं) तु । कालमसंखं संखं च धारणा होइ नायव्वा ॥३३३॥ (नि.४)**

अत्थोग्गहो जहन्नो समयं सेसोग्गहादओ वीसुं । अंतोमुहुत्तमेगं तु वासणा धारणं मोत्तुं ॥३३४॥

सोत्ताईणं पत्ताइविसयया पुव्वमत्थओ भणिया । इह कंठा सट्ठाणे भण्णइ विसयप्पमाणं च ॥३३५॥

'उग्गहो' इत्यादि, तत्राभिहितलक्षणो नैश्चयिकत्वेन जघन्योऽर्थावग्रह एकं समयं भवतीति सम्बन्धः, परमनिकृष्टश्च कालविशेषः समयोऽभिधीयते, स च प्रवचनप्रतिपादितोत्पलपत्रशतव्यतिभेदोदाहरणात् पट्टशाटिकापाटनदृष्टान्ताच्चावसेयः, व्यञ्जनावग्रहसांव्यवहारिकार्थावग्रहौ तु पृथगन्तर्मुहूर्त्तकालं भवत इति ज्ञातव्यौ, ईहा चापायश्च ईहापायौ, प्राकृतशैल्या बहुवचनं, उक्तं च-" बहुवयणेण दुवयणं छट्ठिविहत्तीएँ भन्नइ चउत्थी । जह हत्था तह पाया नमोऽत्थु देवाहिदेवाणं ॥ १ ॥" इत्येवमादि, तावीहापायौ मुहूर्त्तार्धं ज्ञातव्यौ भवतः, घटिकाद्वयप्रमाणः कालोऽभिधीयते मुहूर्त्तं तस्यार्धं मुहूर्त्तार्द्धं, तुविशेषणार्थः, तेनैतदुक्तं भवति-व्यवहारत इदं मुहूर्त्तार्धमुक्तं परमार्थतस्तु अन्तर्मुहूर्त्तमवसेयं, अन्ये तु पठन्ति, 'मुहुत्तमन्तं तु' तत्रापि मुहूर्त्तान्तरिति भवति, अयमत्रार्थः-अन्तर्मध्यकरणे,तुरे-

वकारार्थत्वादवधारणे, तेनैतदुक्तं भवति–ईहापायौ मुहूर्त्तान्तरन्तर्मुहूर्त्तमेवेत्यर्थः, कलनं कालस्तं कालं, न विद्यते सङ्ख्या इयन्तः पक्ष-मासर्त्त्वयनसंवत्सरादय इत्येवंभूता यस्यासावसंख्यः, पल्योपमादिलक्षण इत्यर्थः, तं कालमसंख्यं, तथा विपर्ययेण संख्यं, चशब्दादन्तर्मुहूर्त्तं च, धारणा चतुर्थो मतिभेदः भवति ज्ञातव्या, एतदुक्तं भवति–अविच्युतिस्मृती अन्तर्मुहूर्त्तं, वासनारूपा तु तदावरणक्षयोपशमाख्या इतरयोः कारणभूताऽसंख्येयवर्षायुषामसंख्येयं संख्येयवर्षायुषां संख्येयमिति निर्युक्तिगाथार्थः ॥३३३॥ एतद् व्याचिख्यासुर्भाष्यकार आह–'अत्थो'इत्यादि, व्याख्यातार्थैवेति ॥३३४॥ साम्प्रतमिन्द्रियाणां प्राप्यकारित्वादिनिरूपणार्थं 'पुट्ठं सुणेइ सद्दं' इत्यस्याः समवसरः, अत्रावसरे प्राह–न त्वतिक्रान्तमेतत् "नयणमणोवज्जिंदियभेदाउ" इत्येवमादिना ग्रन्थेन, किमिति भूयोऽपि अग्रतो व्यवस्थितमिति ?, अत्र भावार्थमाह भाष्यकारः—'सोतादीण'मित्येवमादि, श्रोत्रादीनां प्राप्यादि विषयतेत्येतत्माग्वदनुसरणीयं, प्राग्व्यञ्जनावग्रहतत्त्वादिनिरूपणप्रस्तावेऽर्थतो भणिता भाष्यकारेण मया प्रपञ्चिता, तच्चातुर्विध्यप्ररूपणार्थं, ततः किमित्यत आह–इह पञ्चमे गाथासूत्रे कण्ठात्–सौत्रेण न्यायेन स्वस्थानत्वाद् भण्यते भद्रबाहुस्वामिना, किमित्येतावदेव ?, नेत्याह–विषयप्रमाणं च श्रोत्रादीनामिहोच्यते इति गाथार्थः ॥ ३३५ ॥ तमाह—

पुट्ठं सुणेइ सद्दं रूवं पुण पासई अपुट्ठं तु । गंधं रसं च फासं च बद्धपुट्ठं वियागरे ॥३३६॥ (नि. ५)

पुट्ठं रेणुंव तणुम्मि बद्धमप्पीकयं पएसेहिं । छिक्काइं चिय गिण्हइ सद्ददव्वाइं जं ताइं ॥३३७॥

बहुसुहुमभावुगाइं जं पडुययरं च सोत्तविण्णाणं । गंधाई दव्वाइं विवरीयाइं जओ ताइं ॥३३८॥

फरिसाणंतरमत्तप्पएसमीसीकयाइं घेप्पंति । पडुयरविण्णाणाइं जं च न घाणाइकरणाइं ॥३३९॥

शब्दादीनां स्पृष्टतादि

'पुट्ठ'मित्यादि, पुट्ठं–आलिंगियं रेणुं व तणुंमि शृणोति गृह्णात्युपलभत इति पर्यायाः, कं ?–शब्द्यतेऽनेनेति शब्दः तं, शब्दप्रायोग्यां,द्रव्यसंहतिमित्यर्थः,तस्य बहुसूक्ष्मभावुकत्वात् श्रोत्रेन्द्रियस्य चान्येन्द्रियगणतः पटुतरत्वात्,तथा रूप्यत इति रूपं तद् रूपं पुनः पश्यति–गृह्णाति उपलभते 'अपुट्ठं' अस्पृष्टमेवानालिङ्गितमेव, किं कारणं ?, चक्षुषः अप्राप्यकारित्वात्, पुनःशब्दस्य विशेषणार्थत्वात् अस्पृष्टमपि योग्यदेशस्थं नायोग्यदेशस्थमपि सौधर्मादीति, गन्ध्यत इति गन्धस्तं, रस्यत इति रसस्तं, स्पृश्यते इति स्पर्शस्तं च, चशब्दौ पूरणार्थौ, बद्धं–आत्मीकृतमात्मप्रदेशैस्तोयवदाश्लिष्टमित्यर्थः, 'पुट्ठं तु' पूर्ववत्, प्राकृतशैल्या चेत्थमाह 'बद्धपुट्ठं तु',अर्थतस्तु 'पुट्ठबद्ध'मिति द्रष्टव्यं, अनुगुणत्वात्, अत्राह–यद् बद्धं गन्धद्रव्यादि तत् स्पृष्टं भवत्येवेति स्पृष्टग्रहणं न कर्त्तव्यं, तन्न, सकलश्रोतृसाधारणत्वाच्छास्त्रारम्भस्य, प्रपञ्चितज्ञानुग्रहार्थमर्थापत्तिगम्यार्थाभिधानेऽप्यदोषात्, अथवा स्पृष्टं च तद् बद्धं चेति विशेषणसमासाङ्गीकरणाददोषः, तत्र स्पृष्टं गन्धादि विशेष्यं वर्त्तते, बद्धमिति तु विशेषणम्, आह–एवमपि स्पृष्टग्रहणमतिरिच्यते, बद्धस्य स्पृष्टत्वाव्यभिचारादुभयपदव्यभिचारे च विशेषणविशेष्यभावो दृष्टो यथा नीलोत्पलमिति,न चेहोभयपदव्यभिचारः एकपदव्यभिचाराद् उच्यते, एकपदव्यभिचारेऽपि विशेषणविशेष्यभावो दृष्ट एव, यथाऽप् द्रव्यं पृथिवी द्रव्यमिति, तत्र अप् द्रव्यं नियमात् द्रव्यं पुनरप् वाऽन्यद् वेति, तद्वदत्रापि, भावार्थस्त्वयं–स्पृष्टानन्तरमात्मप्रदेशैरागृहीतं गन्धादि बादरत्वात् अभावुकत्वादल्पद्रव्यरूपत्वात् घ्राणादीनां चापटुत्वात्, गृह्णाति विनिश्चिनोति घ्राणेन्द्रियादिगण इत्येवं 'व्यागृणीयात्' प्रतिपादयेदिति निर्युक्तिगाथासमुदायार्थः ॥ ३३६ ॥ अवयवार्थस्तु भाष्यकार आह–'पुट्ठं'मित्यादि 'बद्ध'इत्यादि 'फरिसे'त्यादि, गाथात्रयं भावितार्थम् ॥३३७–३८–३९॥ 'रूवं पुण पासती अपुट्ठं तु' इत्येतद्विशेषतो व्याचिख्यासुराह—

अप्पत्तकारि नयणं मणो य नयणस्स विसयपरिमाणं । आयंगुलेण लक्खं अइरित्तं जोयणाणं तु ॥३४०॥
नणु भणियमुस्सयंगुलपमाणओ जीवदेहमाणाई । देहपमाणं चिय तं न उ इंदियविसयपरिमाणं ॥३४१॥
जं तेण पंचधणुसयनराइविसयववहारवोच्छेओ । पावइ सहस्सगुणियं जेण पमाणंगुलं तत्तो ॥३४२॥
इंदियमाणेऽवि तयं भयणिज्जं जं तिगाउआईणं । जिब्भिंदियाइमाणं संववहारे विरुज्झेज्जा ॥३४३॥
तणुमाणं चिय तेणं हविज्ज भणियं सुएऽवि तं चेव । एएण देहमाणाई नारयाईण मिज्जंति ॥ ३४४॥
लक्खेहिं एक्कवीसाएँ साइरेगेहिं पुक्खरद्धम्मि । उदये पेच्छंति नरा सूरं उक्कोसए दिवसे ॥३४५॥
नयणिंदियस्स तम्हा विसयपमाणं जहा सुएऽभिहियं । आउस्सेहपमाणंगुलाण एक्केणऽवि ण जुत्तं ॥३४६॥
सुत्ताभिप्पाओऽयं पयासणिज्जे तयं न उ पयासे । वक्खाणओ विसेसो नहि संदेहादलक्खणया ॥३४७॥
बारसहिंतो सोत्तं सेसाइं नवहिं जोयणेहिंतो । गिण्हंति पत्तमत्थं एत्तो परओ न गिण्हंति ॥३४८॥
दव्वाण मंदपरिणामयाएँ परओ न इंदियबलंपि । अवरमसंखेज्जंगुलभागाओ नयणवज्जाणं ॥३४९॥
संखेज्जइभागाओ नयणस्स मणस्स न विसयपमाणं । पोग्गलमित्तनिबंधाभावाओ केवलस्सेव ॥३५०॥

'अप्पत्ते'त्यादि, नयनमनसी अप्राप्यकारित्वाद् रूपं न स्पृष्टमेव गृह्णतः, यदुक्तं–'विषयप्रमाणं च' तदिदानीं प्रतायते, 'णयणस्से'त्यादि, अयमत्र प्रक्रमः–अत्र त्रिविधमङ्गुलमुक्तं, आत्माङ्गुलमुच्छ्रयाङ्गुलं प्रमाणाङ्गुलं चेति, तत्राद्यं "जे णं जया मणूसा तेसिं जं होइ माणरूवं ति । तं भणियमिहायंगुलमणियतमाणं पुण इमं तु ॥१॥ द्वितीयं तु–"परमाणू तसरेणू रहरेणू अग्गयं च वालस्स

लिक्खा जूया य जवो अट्ठगुणविवड्ढिया कमसो ॥२॥" तृतीयं तु–"उस्सेहंगुलमेगं हवइ पमाणंगुलं सहस्सगुणं । तं चेव दुगुणियं खलु वीरस्सायंगुलं भणियं ॥३॥ आयंगुलेण वत्थुं उस्सेहपमाणओ मिणसु देहं । णगपुढविविमाणाइं मिणसु पमाणंगुलेणं तु ॥४॥" एवं स्थिते 'नयनस्य' चक्षुरिन्द्रियस्य 'विषयपरिमाणं' प्रसर्प्पणपरिमाणं कियति देशे व्यवस्थितं रूपमालम्बते ? इति गाथार्थः ॥३४०॥ इदानीं चिन्त्यत इति वाक्यशेषः, कतमेनाङ्गुलेनेति चेत्, अत आह—'आतंगुलेणं'ति तस्यैव विष्णुकुमारस्य वैक्रियशक्तिमतो यदङ्गुलं तेनात्माङ्गुलेन अतिरिक्तो योजनलक्ष इत्यर्थः, इह च यदुक्तमात्माङ्गुलेन तत्रैवं नियमो वेदितव्यः–आत्माङ्गुलेनैवेति, स्थितपक्षत्वादिति गाथार्थः ॥३४०॥ अत्र 'उस्सेहपमाणओ मिणे देहं'ति स्मृत्वा देहं चेन्द्रियविषयपरिमाणयोरुपलक्षणार्थमवबुद्ध्यमानः पर आह–'णणु'इत्यादि, ननु भणितं–उक्तं अन्यत्र, 'उच्छ्रयाङ्गुलप्रमाणतः' उच्छ्रयाङ्गुलेन 'देहपमाणं'ति नारकादिशरीरप्रमाणं साध्यते, आदिशब्दादिन्द्रियविषयप्रमाणमिन्द्रियप्रमाणं चानुकृष्यते, एकजातीयत्वात्, तत्रस्थस्योपलक्षणत्वाद्, अतः किमुच्यते–आत्माङ्गुलेनास्य लोचनस्यैतावान् विषय इति, ननूच्यतां–उच्छ्रयाङ्गुलेनेति, गुरुराह–'देहप्रमाणमेव' देहप्रमाणमात्रकमेव तत्तेन मीयत इति तत्रोक्तं, अनभिमतप्रतिषेधमाह–न त्विन्द्रियविषयपरिमाणं–न त्विन्द्रियविषयप्रमाणमपि, तस्यात्माङ्गुलमेयत्वेनावस्तुत्वाद्, अतः किमयं देह एतदुपलक्षणत्वेनावबुद्ध्यते ? इति गाथार्थः ॥३४१॥ तत्रैतत्स्यात्–किमिति न देहवदिन्द्रियविषयपरिमाणमप्युच्छ्रयाङ्गुलेन मीयते ? इत्यत आह–'ज'मित्यादि, यद्–यस्मात्तेन–उच्छ्रयाङ्गुलेन देहवदिन्द्रियविषयपरिमाणमपि मीयत इति ब्रूपे ततः पञ्चधनुःशतायामभरतस्वामिसम्बन्ध्यात्माङ्गुलविस्तारनिष्पन्नयोजनद्वादशगुणस्कन्धावारस्य पुर्या वा द्वादशयोजनसहस्रप्रमाणो विस्तारः प्राप्नोति, कुतः ?–भरतात्माङ्गुलस्य प्रमाणाङ्गुलत्वात्, तस्य चोच्छ्रयाङ्गुलत्वे सहस्रगुणत्वाद्, उच्छ्रयाङ्गुलेन चेन्द्रियविषयो मीयते इति मनोरथाभ्युपगमात्, ततश्चातोद्यशालोदर-

इन्द्रियतद्विषययोर्मानविचारः

गतमहारवभेरीप्रताडनेऽपि केषांचित्तच्छब्दाश्रवणं स्यात्, 'बारसहिंतो सोसं'ति सिद्धान्ताभ्युपगमाद्, अत आह–'जं तेण पंचधणुसयनराण विसयववहारवोच्छेओ पावइ' कुतः? इत्याह–'जेण तत्तो-उस्सेहंगुलाओ सहस्सगुणियं पमाणंगुलं होइत्ति, भावितमिति, तत्-तस्माद् देहप्रमाणं चिय तमित्येवमादि स्थितमिति गाथार्थः ॥३४२॥ अपिच–"उस्सेहपमाणतो मिणे देहं"ति बोध्यम्, 'इंदिये'त्यादि, इन्द्रियाणि–कायजिह्वाघाणनयनश्रोत्रसंज्ञितानि तेषां मानं इन्द्रियमानं तस्मिन्नपीन्द्रियमाने साध्ये कर्त्तव्ये वा'तयं' उच्छ्रयाङ्गुलं भाज्यं–विकल्पनीयं, कदाचिद्व्यापार्यते कदाचिन्नेति भावना, कायेन्द्रिये व्यापार्यते, न शेषेष्वित्यभिप्रायः, कुतः? इत्यत आह—यद्–यस्मात् 'त्रिगव्यूतादीनां' त्र्यादिगव्यूताद्युच्छ्रितानां जिह्वेन्द्रियादिमानं पृथक्त्वादिलक्षणं यदुक्तमार्ये तत्संव्यवहारे कल्पतरुफलादनलक्षणे 'विरुध्येत' न घटते यद्युच्छ्रयाङ्गुलेन तदपि प्रमीयेत, तन्मुखस्यात्माङ्गुलानुरूपत्वेनातिविशालत्वात्, जिह्वायाश्चोच्छ्रयाङ्गुलमेयत्वेन वस्तुतो न किञ्चिद्, आह—तस्मात्तन्मुखवदसावपि तदङ्गुलमेया अस्मदादीनामपि चेति गाथार्थः ॥ ३४३ ॥ अतः पारिशेष्यात्—'तणु' इत्यादि, तेनेत्युच्छ्रयाङ्गुलेन श्रुतं–अनुयोगद्वाराणि, शेषं स्पष्टमतः केयं कल्पना ?, उपलक्षणमेतदिति गाथार्थः ॥ ३४४ ॥ तदेवं नयनस्यात्माङ्गुलेनैतावति विषये १००००० प्रसाधिते सति पुनरपि सिद्धान्तपौर्वापर्यज्ञानाऽभिमानी पर आत्मानं विडम्बयन्नाह–'लक्खेहिं'इत्यादि, , तत्र 'पुक्खरद्धंमि'त्ति पुष्करद्वीपसार्द्धे मानुषोत्तरपर्वतार्वाग्भागासन्नवर्त्तिनो नरा 'उदये' गभस्त्युद्गमवेलायां 'सूरम्' आदित्यं 'पश्यन्ति' प्रलोकयन्ति 'उत्कृष्टे दिवसे' कर्क्कटसंक्रान्तौ, दक्षिणायन इत्यर्थः, कियद्दूरे व्यवस्थिताः ? इत्याह–योजनलक्षैरेकविंशत्या सातिरेकैर्व्यवस्थिताः, अनुभवसिद्धत्वात्, भरतक्षेत्र इव, "सीयालीस सहस्सा दो य सया जोयणाण तेवट्ठा । एगवीस सट्ठिभागा कक्कडमाइम्मि पेच्छ नरा ॥१॥" इति वचनात्, उक्तं चैतत्–"एगवीसं खलु लक्खा चउतीसं चेव तह सहस्साइं । तह पंच सया

भणिया सत्तत्तीसाएँ अहरित्ता ॥१॥ इति नयणविसयमाणं पुक्खरदीवद्धवासिमणुआणं । पुव्वेण य अवरेण य पिहं पिहं होइ नायव्वं ॥२॥ सीयालीससहस्सा दो य सया जोयणाणुमिचाई । जह जंबुदीवयाणं अवट्ठियं चेव विण्णेयं ॥३॥ जह जह समये २ पुरओ संचरइ भक्खरो चरिमो (गयवे) । तह तह इओवि नियमा जायइ रयणीइ भावत्थो ॥४॥ एवं च सइ नराणं उदयत्थमणाणि होंतऽनिययाणि । सइ देसभेए कस्सइ किंची ववइस्सइं नियमा ॥५॥ सइ चेव य निद्दिट्ठो भद्दमुहुत्तो कमेण सव्वेसिं । केसिंचीदाणिं चिय विसयपमाणे रवी जेसिं ॥६॥ केसिंची सावित्तो मायाए (मज्झण्हे) आगओ रवी जेसिं । संचरइ मुहुत्तेणं जावइयं तं निसामेह ॥७॥ लक्खदुगं छत्तीससहस्सच्छस्सया य साहीया । उक्कोसदिणंमि रवी चरयंऽतमुहुत्त एवइयं ॥८॥ उक्कोसे चिय दिवसे जंबूदीवंमि जो रवी चरइ । सो पञ्चसहस्सा खलु अट्ठावन्न चिय सट्ठिभागा साहिया नवरं ॥९॥(पञ्चसहस्सा दोसयइगवन्निसगचत्तभागहिया)सव्वं पुणऽस्स भणियं तावक्खेत्तं जिणेहिं सव्वेहिं । पुव्वावरेहिं तं चिय, सीयालीसाइ दुगुणं तु ॥१०॥ पणयालीससहस्सा उत्तरओ तावखेत्तपरिमाणं । जा मेरुफलिहकंडं, दाहिणओ से पवक्खामि ॥११॥ तेत्तीससहस्स तिन्नि य, सया य तेत्तीसया अणूणाओ । जोयणतिभाग एको, लवणं पत्ति तावखेत्तं से ॥१२॥ इयरस्स उ सव्वं चिय पुक्खरअद्धस्स चरममाणुस्स । तावक्खेत्तं भणियं तं चिय दुगुणं जओ भणियं ॥१३॥ बायालीसं लक्खा अउणत्तरि चेव तह सहस्साई । चउहत्तरी य सेसा, दसभागा सत्त य हवंति ॥१४॥ तावक्खेत्ता चउरो हवंति भाणूण दोन्नि दो ससिणं । सेसं सवित्थरं जाण सूरपण्णत्तिओ सव्वं ॥१५॥" अत उक्तं–'लक्खेहीं'त्येवमादि, 'नयणिंदिये'त्येवमादि, तस्मान्नयनेन्द्रियस्य विषयप्रमाणं–अवकाशप्रमाणं 'यथा' श्रुते–अनुयोगद्वारेऽभिहितं तथा तत् त्रयाणामेकेनापि न युक्तं, द्वयोरतिमहत्त्वादेकस्य तु प्रमाणाङ्गुलस्य द्विगुणसाधिकत्वादिति गाथाद्वयार्थः ॥ ३४५–३४६ ॥ गुरुराह—'सुत्ते'त्यादि, 'अयं सूत्राभिप्रायः' इयं सूत्रविवक्षा–यदुत प्रकाशनीये विषये

पर्वतादौ तच्चक्षुरिन्द्रियमनुप्रवर्त्तते, 'आयंगुलेण समतिरित्तं जोयणलक्खं'ति, 'ण उ पयासे'त्ति न पुनः प्रकाशकेऽर्थे सवितृलक्षणे, अतः किमुच्यते–'आउस्सेहप्पमाणंगुलाणमेगेणऽवि न जुत्तं'ति, कथमयं सूत्राभिप्रायोऽन्तर्गतो ज्ञायते ? इत्यत आह–'व्याख्यानतः' पौर्वापर्यमीलनात् 'विशेषो' विवक्षायाः परिज्ञानं भवति, न हि 'सन्देहात्' साक्षादयमर्थो न श्रूयत इति लक्षणात् 'अलक्षणता' असमसता सूत्रस्य स्यात्, उक्तं च—"जं जह सुत्ते भणियं तहेव जइ तं वियालणा नत्थि । किं कालियाणुओगो दिट्ठो दिट्ठिप्पहाणेहिं ? ॥१॥" ॥ ३४७ ॥ अथ शेषाणां विषयप्रमाणमाह—'थारे'त्यादि, श्रोत्रं मेघमालारसितादिध्वनिमाद्वादशभ्यो योजनेभ्यो गृह्णाति, शेषं स्पष्टम् ॥ ३४८ ॥ कुत एतदित्याह—'दव्वाणे'त्यादि, गाथार्द्धं सुगमं, 'अवरं'ति एतदुत्कृष्टमुक्तम्, अथ जघन्यमाह–अङ्गुलासंख्येयभागादागतं घ्राणादि गृह्णाति, किमविशेषेण नेत्याह—नयनवर्ज्जानाम् ॥ ३४९ ॥ तस्य का वार्त्तेत्यत आह—'संखे'त्यादि, अतिसन्निकृष्टस्यानुपलम्भात्, मनसस्त्विदं नास्ति, मूर्त्तामूर्त्तप्रवृत्तेः, केवलवद्, व्यतिरेकेण मनःपर्यायावधी इति, नन्वेवं पूर्वापरविरोधः–"मणसोऽवि विसयनियमो एकमइ जओ स सव्वत्थ"त्ति वचनात्, तन्न, निर्व्याघातमनसः पक्षीकृतत्वात्, आह–मतिश्रुतयोः कथमुभयनिबन्धे सति ?, उच्यते, मतिश्रुतवृत्तिरेव मनो, न च तयोरपि देशनियमोऽस्तीति गाथार्थः ॥ ३५० ॥ 'पुट्ठं सुणेइ सद्द'मित्युक्तमत आह–किं शब्दप्रयोगोत्सृष्टान्येव केवलानि ध्वनिदलानि शृणोत्युतान्यान्येव तद्वासितान्याहोश्वित् तन्मिश्राणीति, उच्यते–न तावत्केवलानि, तेषां वासकत्वाल्लोकस्य च तद्योग्यद्रव्याकुलत्वात्, मिश्राणि तु स्युः, परं तद्वासितान्यन्यानि वेत्यत आह—

भासासमसेढीओ सद्दं जं सुणइ मीसयं सुणइ । वीसेढी पुण सद्दं सुणेइ नियमा पराघाए ॥३५१॥ (नि०६)

सेढी पएसपंती वदतो सव्वस्स छद्दिसिं ताओ। जासु विमुक्का धावइ भासा समयम्मि पढमम्मि ॥३५२॥

भासासमसेढिठिओ तन्भासामीसियं सुणइ सद्दं । तद्‌दव्वभावियाइं अण्णाइं सुणइ विदिसत्थो ॥३५३॥
अणुसेढीगमणाओ पडिघायाभावओऽनिमित्ताओ । समयंतराणवत्थाणओ य मुक्काइं न सुणेइ ॥३५४॥

'भासा'इत्यादि, तत्र भाष्यत इति भाषा, वक्त्रा शब्दतयोत्सृज्यमाना द्रव्यसंहतिरित्यर्थः, तस्याः समश्रेणयः–समाकाशपङ्क्तय इति भाषासमश्रेणयः, समग्रहणं विश्रेणिव्यवच्छेदार्थं, ता इतो–गत इति 'भाषासमश्रेणिगतः' भाषासमश्रेणीस्थित इत्यर्थः, कोऽसौ ?, श्रोता इति गम्यते, 'शब्दम्' उक्तशब्दार्थं, यं पुरुषशब्दादिकं 'शृणोति' उपलभते' यत्तदोर्नित्याभिसम्बन्धात् तं, किंविशिष्टं शृणोतीत्यत आह—'मीसयं'ति मिश्रकम्, उत्सृष्टद्रव्यभावितापान्तरालस्थशब्दपुद्गलसंवलितमित्यर्थः, 'वीसेढी पुण'त्ति विश्रेणिः पुनः, इत इति वर्त्तते, तेनैतदुक्तं भवति–विश्रेणिव्यवस्थितः पुनः श्रोता, शब्दमिति पुनः शब्दग्रहणमकारि पराघातवासितद्रव्याणामपि तथाविधशब्दत्वख्यापनार्थं, किमत आह—शृणोति 'नियमात्' नियमेन पराघाते सति, पराघातितान्येव शृणोति, नेतराणि, तेषामनुश्रेणीगमनाद् प्रतिघाताभावाच्च । अथवा 'भासासमसेढीयं' भासासमश्रेण्यामितं शब्दमिति, शेषं प्राग्वदिति, 'वीसेढी पुण'त्ति अत्र तु विश्रेणिस्थ एव विश्रेणिरुच्यते, पदेऽपि पदावयवप्रयोगप्रदर्शनाद् भीमसेनः सेनः सत्यभामा भामेति यथा, इत्येवं गन्धादिद्रव्याण्यपि मिश्राण्यादत्ते अनुश्रेणिगमनत्वे अनियमो, बादरत्वाद्वातायनरेणुवन्नियमोऽप्येके इति गाथार्थः ॥३५१॥ 'सेढी' इत्यादि, इह श्रेणिराकाशपङ्क्तिरभिधीयते, एकवचनं च जात्यपेक्षं, यत आह–सर्वस्य वक्तुर्वदतः सतः षट्सु दिक्षु पूर्वापरोत्तर–दक्षिणोर्ध्वाधःप्रभृतिषु (०धोरूपासु) ता भवन्ति, लोकमध्यवर्त्तित्वे सतीति गम्यते, 'जास्वि'त्यादि स्पष्टम् ॥ ३५२ ॥ इतग्रहणं व्याचिख्यासुराह—'भासे'त्यादि, 'भाषासमश्रेणिस्थो' भाषासमश्रेणीतः इत्युक्तं भवति, कोऽसौ ?–श्रोता, 'तब्भासामीसियं'ति तस्य

–वक्तुर्भयादेर्वा भाषा तया मिश्रितं शृणोति । पश्चादर्धं व्याचिख्यासुराह—'तदव्वे'त्यादि भावितार्थम् ॥ ३५३ ॥ ननु तानि किमित्यत आह—'अणु' इत्यादि, तेषामनुश्रेणिगमनात्, अनुश्रेणिगमनेऽपि कस्यचित् स्खलनतोऽपि विश्रोतोगमनं भवतीत्यत आह–प्रतिघाताभावाद् असम्भवात्, स किमित्यत आह–निमित्ताभावात् सूक्ष्मत्वात् अपि च समयान्तरानवस्थानाच्च, किमत आह–'मुक्काइं' वक्त्रा न शृणोति 'विदिसत्थो'त्ति गाथार्थः ॥ ३५४ ॥ भाषाधिकारस्य प्रस्तुतत्वादाह–केन पुनर्योगेनामीषां वाग्द्रव्याणामादानमुत्सर्गं न करोति ? कथं चेत्यत आह निर्युक्तिकारः—

गिण्हइ य काइएणं निसिरइ तह वाइएण जोएणं । एगंतरं च गिण्हइ निसिरइ एगंतरं चेव ॥३५५॥ (नि. ७)

गिण्हिज्ज काइएणं किह निसिरइ वाइएण जोएणं ? । को वाऽयं वाजोगो ? किं वाया कायसंरंभो ? ॥३५६॥
वाया न जीवजोगो पोग्गलपरिणामओ रसाइ व्व । न य ताए निसिरिज्जइ स च्चिय निसिरिज्जए जम्हा ॥३५७॥
अह सो तणुसंरंभो निसिरइ तो काइएण वत्तव्वं । तणुजोगविसेसच्चिय मणवइजोगत्ति जमदोसो ॥३५८॥
किं पुण तणुसंरंभेण जेण मुंचइ स वाइओ जोगो । मण्णइ य स माणसिओ तणुजोगो चेव य विभत्तो ॥३५९॥
तणुजोगो च्चिय मणवइजोगा काएण दव्वगहणाओ । आणापाणव्व न चे तओऽवि जोगंतरं होज्जा ॥३६०॥
नुदि तणुजोगत्ते कीस व जोगंतरं तओ न कओ ? । मणवइजोगा व कया ? भण्णइ ववहारसिद्धत्थं ॥३६१॥
कायकिरियाइरित्तं नाणापाणप्फलं जह वईए । दीसइ मणसो य फुडं तणुजोगब्भंतरो तो सो ॥३६२॥
अहवा तणुजोगाहिअवइदव्वसमूहजीववावारो । सो वइजोगो भण्णइ वाया निसिरिज्जए तेणं ॥३६३॥

तह तणुवावाराहिअमणदव्वसमूहजीववावारो। सो मणजोगो भण्णइ मण्णइ नेयं जओ तेणं ॥३६४॥
जह गामाओ गामो गामंतरमेवमेग एगाओ। एगंतरंति भण्णइ समयाओऽणंतरो समओ ॥३६५॥
केई एगंतरियं मण्णंतेगंतरंति तेसिं च। विच्छिन्नावलिरूवो होइ घणी सुयविरोहो य ॥३६६॥
आह सुए चिय निसिरइ संतरियं न उ निरंतरं भणितं। एगेण जओ गिण्हइ समयेणेगेण सो मुयइ ॥३६७॥
अणुसमयमणंतरियं गहणं भणियं जओ चिमुक्खोऽवि। जुत्तो निरन्तरो चिय, भणइ कहं संतरो भणिओ? ३६८
गहणावेक्खाएँ तओ निरन्तरं जम्मि जाइं गहियाइं। नवि तम्मि चेव निसिरइ जह पढमे निसिरणं नत्थि।३६९।
निसिरिज्जइ नागहियं गहणंतरियंति संतरं तेणं। न निरंतरं न समयं न जुगवमिह होंति पज्जाया ॥३७०॥
गहणं मोक्खो भासा समयं गहनिसिरणं च दो समया। होंति जहण्णंतरओ तं तरस व बीयसमयम्मि ॥३७१॥
गहणं मोक्खो भासा गहणविसग्गा य होंति उक्कोसं। अंतोमुहुत्तमेत्तं पयत्तभेएण भेयो सिं ॥३७२॥
गहणविसग्गपयत्ता परोप्परविरोहिणो कहं समए?। समए दो उवओगा न होज्ज किरियाण को दोसो? ॥३७३॥

'गेण्हती'त्यादि, तत्र कायेन निर्वृत्तः कायिकस्तेन कायिकेन, योगो व्यापारः कर्म क्रियेत्यनर्थान्तरं, सर्व एव हि वक्ता कायक्रियया शब्दद्रव्याण्यादत्ते, चोऽवधारणे, स च भिन्नक्रमः, कायिकेनैव, निसृजति–व्युत्सृजति 'मुञ्चति' 'तथे'त्यानन्तर्यार्थः, उक्तिर्वाग् वाचा निर्वृत्तो वाचिकः तेन वाचिकेन योगेन, कथं गृह्णाति निःसृजति वा? किमनुसमयमुत अननुसमयमित्यत आह–एकान्तरमेव गृह्णाति, निसृजत्येकान्तरं चैव, एतदुक्तं भवति–प्रतिसमयं गृह्णाति मुञ्चति चेति, कथं?, यथा ग्रामादन्यो ग्रामो ग्रामान्तरं

पुरुषाद्वा पुरुषः पुरुषान्तरम्, अनन्तरोऽपि सन्, एवमेकैकस्मात्समयादेकैक एवैकान्तरः अनन्तरसमयो निर्दिष्टः, स्थापना, इति गाथासमुदायार्थः ॥ ३५५ ॥ अत्र पूर्वार्द्धमधिकृत्य चोदक आह—'गिण्ही'त्यादि, इह भाषा-भाषाद्रव्याणि गृह्णीयात् कामं कायिकेन योगेन, करणरूपेण, तस्यारम्भव्यापारत्वात्, किन्तु न काममित्यत आह-कथं निसृजति ?, वाचिकेन योगेन निसृजतीत्युक्तं किं वा ?, नैवेत्यभिप्रायः, तस्य निसृज्यमानत्वेन कर्मत्वात् किं वाऽनेन ऋजुनोक्तेन ? अन्यत्पृच्छामः-को वाऽयं वाग्योगो नाम येन निसृजतीत्युक्तम्, 'किं वाग'त्ति किं वागेव निसर्गव्यापारापन्ना सती वाग्योगः उत कायसंरम्भस्तन्निसर्गहेतुर्वाग्योग इति द्वयी गतिः ?, किञ्चातः-पद्यायः पक्षः, तत्र, तस्या योगत्वानुपपत्तेः ॥३५६॥ आह च-'वाया'इत्यादि, इह वाकेवला अच्छिन्ना न जीवव्यापारः, हेतुदृष्टान्तौ सुगमौ, व्यतिरेकेण जीवस्कायव्यापारः, अपि च-'न य ताए'त्ति न च तया वाचा निसृज्यते, काययोगेनैव, किं कारणं ?, तस्या एव निसृज्यमानत्वात्, नहि कर्मैव करणं स्यादित्यभिप्राय इति गाथार्थः ॥३५७॥ द्वितीयं विकल्पमधिकृत्य तत आह—'अहे'त्यादि, अथासौ वाग्योगस्तनुसमारम्भः-कायव्यापारः, ततः कायिकेनैव निसृजतीत्येवं वक्तव्यं भद्रबाहुस्वामिना, भाष्यकृदुत्तरमाह—सर्वमेतदसाधु अभिप्रायापरिज्ञानात्, तथाहि-'ननु योगविशेषावेव' तनुयोगापान्तरालभेदावेव मनोवाग्योगाविति सिद्धान्तः, 'यत्' यस्मात् एवमतोऽयमदोषः, इति गाथार्थः ॥ ३५८ ॥ यद्येवमुच्छिन्ना तर्हि 'मणेणं वायाए काएणं'ति करणत्रयचारणेत्यत आह—'किं पुणे'त्यादि, 'किं पुण'त्ति, ततश्चेत्यर्थः, ततश्चात्मनः शरीरव्यापारे सति येन रूपेण वाग्द्रव्याणामुपादानं करोति स कायिकः, अत उक्तं 'गेण्हइ य काइयेणं'ति। तथा 'तणु'इत्यादि द्वितीयः, अत उक्तं-'निसिरइ तह वाइएण जोएणं'ति, तथा 'मन्नइ य तणुसंरंभेण जेण य उ माणसिओ मन्नइ' अतस्तनुयोग एव सामान्यः सन् 'विभक्तो' विभाजितस्त्रेधा उपाधिभेदादिति गाथा-

र्थः ॥ ३५९ ॥ प्रमाणयन्नाह—'तणु'इत्यादि, पादत्रयं सुगमं, व्यतिरेकेणाभावः । साम्प्रतमाचार्य एव परोत्प्रेक्षितां गाथामाह—'न चे'ति न चेत् कायव्यापाररूपत्वेऽपि तावसावित्यत आह—'तओऽवि' असावपि प्राणापानो योगान्तरं चतुर्थं स्याद् भवतः, अतः किमुच्यते भवता उभयसन्ध्यं 'पडिक्कमामि तिहिं जोगेहीं'त्येवमादीति गाथार्थः ॥ ३६० ॥ तदेवं सर्वेषामिति काययोगत्वे उक्ते पर आह—'तुल्ल'इत्यादि, प्राणापानयोरतुल्ये-समाने मनोवाग्योगाभ्यां तनुयोगत्वे किमिति चासौ प्राणापानुर्योगान्तरं चतुर्थं न कृतं ?, मणवइजोगा व कया जोगान्तरं, तुल्ले तणुजोगत्ते उस्सासनिस्सासेण समं एको वा योगोऽस्तु चत्वारो वेत्यभिप्रायः, गुरुरुत्तरमाह—'भन्नइ ववहारसिद्धत्थं' एतावेवास्मात् पृथक् कृताविति गाथार्थः ॥३६१॥ तथाहि—'काये'त्यादि, कायक्रियायाः अतिरिक्तं-अधिकं कायक्रियातिरिक्तं, न प्राणापानोः फलं, दृश्यत इति सम्बन्धः, यथा कस्याः ? इत्यत आह—यथा वाचो-गिरः, तथाहि—वाचि परप्रत्यायनं फलमालोक्यते, नत्विदं प्राणापानावन्यत्र हृदयादिघट्टनात्, तथा मनसश्च स्फुटं कायक्रियातिरिक्तं फलं दृश्यते, यस्मादेवं तस्मात् तनुयोगाभ्यन्तर एवासौ प्राणापानुः, तुल्ये तनुयोगत्वेऽपीति प्रक्रमाल्लभ्यत इति सुष्ठूच्यते—'पडिक्कमामि तिहिं योगेहिं'ति गाथार्थः ॥३६२॥ 'अहवे'त्यादि, अथवाऽयमेवार्थोऽन्यथा निर्दिश्यते—काययोगाहृतानि यानि वाग्द्रव्याणि तेषां यः समूहः तस्मा विधायो जीवव्यापारः परप्रत्यायनफलो ध्वनितया स वाग्योगो भण्यते, तेन किं क्रियते ? इत्याह—तेन वाग् निसृज्यते परप्रत्यायनार्थमिति गाथार्थः ॥३६३॥ 'तहे'त्याद्यनया दिशा स्पष्टं ॥३६४॥ अथ पश्चार्द्धव्याचिख्यासयाऽऽह—'जहे'त्यादि, भावितवत्, तदेवं व्याख्यायमाने यदुक्तं सूत्रे 'अणुसमयमविरहितं निरन्तरं गेण्हइ' तदप्याराधितं सात्मसूणशब्दश्रवणं चेति गाथार्थः ॥३६५॥ अन्यथा तु विपर्यय इति, आह च—'केयी'त्यादि, केचन व्याख्यातारः 'एगंतरं'ति यदुक्तं निर्युक्तिकृता तन्मन्यन्ते-व्याख्यानयन्ति, कथमित्यत आह—'एगं-

तरं'ति एकैकेनान्तरितं—व्यवहितमेकान्तरं तथा दृष्टत्वादेकान्तरोपवासवत् स्थापना—ग्रमो ग्रमो ग्रमो, ततः को दोषः ? इत्याह—तेषां चैवं मन्तॄणां 'विच्छिन्नावलिरूवो होइ घणी', कुत एतत् ?, ग्रहणान्तरितत्वान्निसर्गस्य निसर्गान्तरितत्वाच्च ग्रहणस्य, ग्रहणसमयेऽश्रवणात्, किमेतावानेव तेषां दोषः ? इति, नेत्याह—'सुयविरोधो' श्रीमन्महावीरवर्द्धमानस्वामिमतानुसारिभगवदाचार्यश्यामस्वामिप्रणीत'प्रज्ञापना'ऽध्ययनप्रसिद्धाज्ञालङ्घनं च, 'अणुसमयमविरहियं गेण्हती'ति तद्वचनात्, तथा हीदं सूत्रं प्रतिसमयग्रहणप्रतिपादकत्वात् प्रतिसमयनिसर्गप्रतिपादकमपि बोद्धव्यं मसृणशब्दानुभवात्, अथ ब्रूयुर्भवतोऽप्येवं व्याख्यातुस्तदुक्ताज्ञाखण्डनमेव सूत्रान्तरविरोधादिति, 'संतरं निसिरइ नो निरन्तरं, एगेणं समएणं गिण्हइ एगेणं समएणं मुञ्चती'ति सूत्रप्रश्रवणात्, तथा हीदं सूत्रं सान्तरनिसर्गप्रतिपादकत्वात् सान्तरग्रहणप्रतिपादकमपि विज्ञातव्यं, न च स्खलितशब्दश्रवणानुभवः, स्तोकत्वेन सूक्ष्मत्वादपान्तरालकालस्येति गाथार्थः ॥२६६॥ अथैतत्सूत्रं गाथयोपनिबध्नन् पर आह—'आह सुये भिये'त्यादि, गतार्था, नवरं 'सो'त्ति वक्ता ॥२६७॥ अथ सूत्रद्वयमपि विषयविभागेऽव्यवतिष्ठापयिपुराह—'अणुसमय'मित्यादि, समयं अनु—पश्चादनुसमयं, किमुक्तं भवतीत्यत आह—नान्तरितमनन्तरोपवासवदित्यनन्तरितमव्यवहितमितियावत् ग्रहणं—वाग्द्रव्योपादानं 'भणितं' उक्तं प्रथमसूत्रे भगवता आर्यश्यामेन, 'यतः' यस्मात्, ततः किमित्यत आह—'विमोक्षोऽपि' निसर्गोऽपि तेषां 'युक्तो' घटमानकः 'निरंतर एव' अनुसमयमविरहितमेवेतियावदिति, कोऽर्थः ?, कुत एतत् ?, प्रथमसमये ग्रहणात् द्वितीयादिषु निसर्गग्रहणादन्त्य एव निसर्गात्, इतश्चैतदेवं, द्विसामयिकस्यैव जघन्यस्य ग्रहणनिसर्गस्योक्तत्वात्, स्याश्रोतुर्मूर्पोर्वेत्यभिप्रायः, एवमुक्ते सति द्वितीयसूत्रश्रवणभ्रमन्मतिश्चोदको भणति—चोएइ 'कथं' ? कया विवक्षया 'सान्तरः' सव्यवधानः 'भणितः' तेनैव मुखेन प्रतिपादितो द्वितीयसूत्रे तेन, निसर्ग इति गम्यत इति गाथार्थः ॥२६८॥

गुरुराह—'गहणे'त्यादि, 'तओ'त्ति नन्वसौ निसर्गः सान्तरो भणितः, तेन द्वितीयसूत्रे ग्रहणापेक्षया काका आद्यमाद्यं ग्रहणमङ्गीकृत्य, नतु समयापेक्षया, तथा निरंतरत्वादेव, ग्रहणवत्, कथमेतदेवमित्यत आह—'निरंतरं' पइसमयं 'जंमि' पढमाइसमए 'जाइं' दलियाइं 'गहियाणि' आदत्ताणि ताइं नतु 'तंमि चेव' गहणसमये 'निसिरइ' मुंचइ, कः प्रत्ययः ? इत्यत आह—जह पढमे समये निसिरणं नत्थि एवं दुयाइसमएसुवि तत्समयोपात्तानामिति भावनीयं, एतदुक्तं भवति—प्रथमसमयोपात्तानां न तत्रैव निसर्गः, अपि तु द्वितीये, एवं द्वितीयसमयोपात्तानां न तत्रैव, अपि तु तृतीय इत्येवमादि सान्तरनिसर्गसिद्धिस्तस्मात् ग्रहणापेक्षयाऽसौ द्वितीयसूत्रे तथोक्त इति गाथार्थः ॥३६९॥ तत्रैतत्स्याद्—यथा ग्रहणापेक्षया सान्तरो निसर्गः, एवं निसर्गापेक्षयाऽपि सान्तरं ग्रहणं, नानिसृष्टं पुनर्गृह्णत इत्यतो—'विच्छिन्नावलिरूवो पत्थुद्वितीए धणी होइ', तत्र, निसर्गस्य ग्रहणपरतन्त्रत्वात् द्वितीयसमयवत्, कुत एतदित्यत आह—'निसी'त्यादि, नागृहीतं धुर्यसमये द्वितीयसमये निसृज्यते इत्येकान्तः, अनिसृष्टं तु गृह्णात आदिसमय इत्यनेकान्तः, येनैवं तेन किमित्यत आह—'संतरं तेणं'ति, तेन कारणेन सान्तरं निसर्ज्जनमुक्तं भगवता द्वितीयसूत्रावयवेनेति प्रक्रमः, कुत ? इत्यत आह—'गहणंतरियं'ति ग्रहणान्तरितमितिकृत्वेति भावार्थकथनं, सर्वत्राधःपङ्क्तौ स्वतन्त्रग्रहणव्यवहितमितिकृत्वेत्यभिप्रायः, ततश्च 'गहणावेक्खाए तत्तो'त्ति व्यवस्थितं 'नो निरंतरं'ति, द्वितीयं सूत्रावयवं शुशोधयिषुराह—'नो निरंतरं'ति, किमुक्तं भवतीत्याह 'न निरन्तरं'ति, न समकं न युगपदिति पर्याया एते भवन्ति, क एषां भाषितानामर्थः ? इति चेत्, उच्यते, न ग्रहणैककालं निसृजति, किं तर्हि ?, द्वितीये समये इति, अथवा 'नो निरंतरं'ति, अस्यायमर्थः—'न पढमसमये चेव निसिरइ, किंतु 'संतरं'ति उक्तं प्राक्, एवमन्वयव्यतिरेकतः सूत्रार्धं गतं, एगेणं समएणं गिण्हइ एगेणं मुञ्चतीत्यस्य कोऽर्थः ? इति चेत्, उच्यते, आद्यचरमसमययोरेकान्त-

ग्रहणनिसर्गसद्भावात् 'एगेणं समएणं गेण्हइ एगेणं समयेणं मुंचती'त्येवमादि यन्त्रकमध्यं भावनीयमित्यत एवं गृह्णतां 'अणुसमयमविरहियं निरंतरं गेण्हइ संतरं निसिरइ नो निरंतर' मित्येवमादीति गाथार्थः ॥३७०॥ साम्प्रतं ग्रहणादेर्द्विविधं कालप्रमाणमभिधित्सुः प्राह— 'गहण'मित्यादि, गृह्यत इति ग्रहणं तदेकं समयं भवति, मोक्षोऽपि–भाषाऽपि जघन्यतः, तत्रैतत्स्यात्–मोक्षस्य निसर्गस्वभावत्वात् निसर्गस्य च भाषात्वान्मोक्षग्रहणे भाषाग्रहणमतिरिच्यते ? इति, उच्यते, न व्यतिरिच्यते, भाष्यमाणा भाषा, न ग्रहणमात्रं न मोक्षमात्रं नाप्युभयमात्रं, प्रत्येकस्य मानमभिधायोभयस्याह–'गहनिसिरणं व'त्ति ग्रहणनिसर्गौ च द्वौ समयौ भवतो जघन्यं–सर्वस्तोकतया, कस्य ?, मुमूर्षोः द्वितीयसमये तिष्ठासोर्वेति गाथार्थः ॥३७१॥ उत्कृष्टं ग्रहणनिसर्जनमाह—'गहण'मित्यादि, ग्रहणं मोक्षो भाषा ग्रहणविसर्गाश्चेति पृथक् प्रकर्षेणान्तर्मुहूर्त्तं भवन्ति, तथा च द्वौ प्रत्येकपक्षौ अपर उभयपक्षः अपरो भाषापरिणामपक्ष इति, सर्वत्र च पुरुषान्तरे एतेषां–ग्रहणादीनां कालभेदो भवति, अल्पमहाप्रयत्नभेदादिति गाथार्थः ॥३७२॥ यदुक्तमाद्यन्त्यसमययोरेकान्तेन ग्रहणनिसर्गावेव, मध्यमसमयेषु तूभयं, तत्राह—'गहण'मित्यादि, स्पष्टार्था, एकसमये क्रियाद्वयमस्ति अविरुद्धत्वात् कर्मसंघातसाटक्रियावत् युगपदङ्गुल्याकाशसंयोगविभागक्रियावद्वा, स्थानविधौ वा मनआदिक्रियावदिति गाथार्थः ॥३७३॥ गृह्णाति कायिकेनेत्युक्तं, स चौदारिकादिभेदात् पञ्चधेति मा मंस्थाः पञ्चविधेनापि, अपि त्वौदारिकवैक्रियाहारकेणेति, आह च—

तिविहम्मि सरीरम्मी जीवपएसा हवंति जीवस्स। जेहि उ गेण्हइ गहणं तो भासइ भासओ भासं ॥( नि. ८)

ओरालिवेउव्वियआहारओ गेण्हई मुयइ भासं। सच्चं सच्चामोसं मोसं च असच्चमोसं च ॥३७५॥ ( नि. ९)

सच्चा हिया सयामिह संतो मुणओ गुणा पयत्था वा। तव्विवरीआ मोसा मीसा जा तदुभयसहावा ॥३७६॥
अणहिगया जा तीसुवि सद्दो चिय केवलो असच्चमुसा। एया सभेयलक्खण सोदाहरणा जहा सुत्ते ॥३७७॥

'तिविहंमी'त्यादि, त्रयो विधा यस्य तत्तथा तस्मिन्, शीर्यत इति शरीरं तस्मिन्, जीवतीति जीवः तस्य प्रदेशा भवन्तीति, कस्येत्यत आह—'जीवस्य' आत्मनः, ननु च षष्ठीद्वयश्रवणात् पुनरुक्तदोषः ?, तन्न, जीवस्य प्रदेशा भवन्तीत्युच्यमाने इयं षष्ठी भेदे वर्तिष्यत इति व्यामोहनिवृत्त्यर्थं जीवस्यात्मभूता भवन्तीति पुनरप्याह, "भेदाभेदवर्त्तिनी च षष्ठी"ति पाणिनीयाः, ततश्चानेन निष्प्रदेशात्मवादासाधुत्वमाह, सति तस्मिन् करचरणोरुग्रीवाद्यवयवसंसर्गाभावः प्राप्नोति, तथाहि—पादतलसंयुक्तात्मप्रदेशस्य तालुसम्बन्ध्यात्मप्रदेशभेदोऽभेदो वेति वाच्यं, भेदश्चेत् कथमप्रदेशः ? अभेदश्चेदेकत्वतो न भेदोपलम्भः स्यात्, यैर्गृह्णाति—आदत्ते, तुशब्दस्य विशेषणार्थत्वान्न सर्वदैव 'ग्रहण'मिति गृह्यत इति ग्रहणं शब्दद्रव्यनिवहमित्यर्थः 'तो' ततो गृहीत्वा 'भाषते' वक्ति, भाषत इति भाषकः क्रियाविष्ट इत्यर्थः, अनेन निष्क्रियात्मवादव्युदासमाह, सति तस्मिन् भाषणाभावप्रसंगः, तस्य तत्त्वादप्रच्यवमानत्वात् प्रच्युतौ च स्वात्महानेः, कामित्याह—भाष्यत इति भाषा तां भाषां, आह—'तो भासइ भासओ' इत्यनेनैव गतार्थत्वान्नैतदुच्चारणं कर्त्तव्यमिति, तन्न, भाष्यमाणैव भाषा, न प्राक् न पश्चात् इत्यस्यार्थस्य ज्ञापयितुमभिप्रेतत्वादिति गाथार्थः ॥ ३७४ ॥ अथ किं तत ? इत्याह—'ओरालिए'त्यादि, स्पष्टा ॥ ३७५ ॥ सत्यादिकाया लक्षणमाह—'सच्चा' इत्यादि, सद्भ्यो हिता—आराधनी प्रत्यायनफला वेति सत्या, सन्तः के उच्यन्ते ? इत्यत आह—सन्तो मुनयो—यतयश्च तेषां हिता सत्या, इहपरलोकाराधनीत्यर्थः, गुणा वा—मूलोत्तरगुणाः पदार्था वा—जीवादयः, तद्विपरीता तु मृषा, मिश्रा तूभयस्वभावेति गाथार्थः ॥ ३७६ ॥ 'अणही'त्यादि, तिसृष्वप्यपतिता

अनुभयस्वभावा, आसां भावार्थमङ्गीकृत्यातिदेशमाह–एताश्चतस्रोऽपि भाषाः सभेदलक्षणसोदाहरणा यथा सूत्रे दशवैकालिके उक्तास्तथैव ज्ञातव्याः, तत्र भेदाः 'जणवय संमय ठवणे'त्येवमादि वक्तव्यम्, यावद् 'वोयड अव्वोयडा चेवे'ति गाथार्थः ॥ ३७७ ॥ भाषाधिकारस्यैवानुवर्तमानत्वादाह–द्वादशभ्यो योजनेभ्यः परतो न श्रूयते, द्रव्याणां मन्दपरिणामत्वादित्युक्तम्, अथ किं विषयपरतोऽपि द्रव्याणां गतिरस्ति, यथा च विषयाभ्यन्तरतो नैरन्तर्येण तद्वासनासामर्थ्यमस्ति तद्वत् किं परतोऽपीति, उच्यते, अस्ति केषाचिदालोकान्तात्, आह–यद्येवं—

कईहिं समएहिं लोगो भासाए निरन्तरं तु होइ फुडो। लोगस्स य कइभाए कइभाओ होइ भासाए ॥ (नि०१०)

चउहिं समयेहिं लोगो भासाए निरंतरं तु होइ फुडो। लोगस्स य चरिमंते चरिमंतो होइ भासाए ॥३७९॥(नि. ११)

कोई मंदपयत्तो निसिरइ सयलाइं सव्वदव्वाइं। अन्नो तिव्वपयत्तो सो मुंचइ भिंदिउं ताइं ॥ ३८० ॥

गंतुमसंखेज्जाओ अवगाहणवग्गणा अभिन्नाइं। भिज्जंती धंसंति य संखिज्जे जोअणे गंतुं ॥ ३८१ ॥

भिन्नाइं सुहुमयाए अणंतगुणवड्ढिआइं लोगंतं। पावंति पूरयंति य भासाएँ निरंतरं लोगं ॥ ३८२ ॥

'कतिही'त्यादि, 'कतिभिः' कियत्संख्यैः 'समयैः' परमनिकृष्टकालविशेषैः 'लोकः' चतुर्दशरज्ज्वात्मकः क्षेत्रलोकः भाषया निरन्तरमेव भवति 'स्पृष्टो' व्याप्तः, तथा लोकस्य च–अस्यैव कतिभागे कतिभागो भवति भाषायाः ? इति, ॥ ३७८ ॥ अत्रोच्यते– 'चउही'त्यादि, पूर्वार्द्धं भावत्, नवरं तुशब्दो न सर्वैव,अपि तु 'कयाऽपि', यद्वक्ष्यते भाष्यकारः—'कोयी'त्येवमादि प्रपञ्चेनात्रेति,

तथा लोकस्य च क्षेत्रचरमान्तः,प्राक्तनान्तः असंख्येयभागो भवति भाषाया गणितमपेक्ष्य चरमान्ते–प्राक्तने असंख्यभागे, समस्तलोकव्यापिन्या इति गाथार्थः ॥ ३७९ ॥ 'कोथी'त्यादि, कश्चिदुरःक्षतोपेतत्वेन मन्दप्रयत्नो निःसृजति सकलानि–अदलितानि शब्दद्रव्यस्कन्धदलानि, अन्यस्तु भाषकः तीव्रप्रयत्नो निरुजकरणत्वात् स तु तानि 'मुञ्चति' प्रेरयति 'भित्त्वा' परमाणुतया कृत्वा ॥ ३८० ॥ अत्र सूत्रम्—'जाइं भंते ! अभिण्णाइं निस्सरती"त्यादि सर्वमुच्चारणीयं 'ताइं तु' तानि किमत आह—'गंतु'मित्यादि, तानि 'अभिन्नानि' निसृष्टानि गत्वाऽसंख्येयाः खल्ववगाहनावर्गणा 'भिद्यन्ते' अनन्तशो भिदां प्रतिपद्यन्ते, ध्वंसं चापद्यन्ते, शब्दपरिणाममपि जहतीत्यर्थः, किं लोकान्तं यात्वा ?, नेत्याह–संख्येयानि योजनानि गत्वेति गाथार्थः ॥ ३८१ ॥ भिन्नेषु का वार्त्तेत्यत आह—'भिन्नानी'त्यादि, भिन्नान्यतिपटुताल्वोष्ठपुटयन्त्रकेण निर्दलितानि सूक्ष्मतया–अतिप्रचुरतयाऽनन्तगुणवर्द्धितानि वासकत्वात् लोकान्तं प्राप्नुवन्त्याद्यसमय एव, यद्वत् दिक्षिति वाक्यशेषः, किमेतावच्छक्तीन्येव ?, नेत्याह–'पूरयन्ति च' व्याप्नुवन्ति च 'भाषया' पराघातवासनावासितसकललोकापन्नवाग्द्रव्यपटलैः, निरन्तरमिति क्रियाविशेषणं, इतः–इतः पूरणात्, कं ?, 'लोकं' क्षेत्रलोकमिति, एतच्च सामान्येनोक्तं समयानियमनादिति गाथार्थः ॥ ३८२ ॥ साम्प्रतम् यदुक्तम्–'चउहिं समएहिं' इत्यादि, तत्रानादेशं पूर्वपक्षीकुर्वन्नाह—

जइणसमुग्घायगइएँ केई भासंति चउहिं समएहिं। पूरइ सयलो लोगो अण्णे उण तीहिं समएहिं ॥३८३॥
पढमसमए चिय जओ मुक्काइं जंति छद्दिसिं ताइं। बितियसमयम्मि ते चिय छदंडा होंति छम्मंथा ॥३८४॥
मंथंतरेहिं तइए समये पुन्नेहिं पूरिओ लोगो। चउहिं समएहिं पूरइ लोगंते भासमाणस्स ॥ ३८५ ॥

दिसिविद्दियस्स पढमोऽतिगमे ते चेव सेसया तिन्नि। विदिसिट्ठियस्स समया पंचातिगमम्मि जं दोण्णि ।३८६॥
चउसमयमज्झगहणे तिपंचगहणं तुलाइमज्झस्स। जह गहणे पज्जंतग्गहणं चित्ता य सुत्तगई ॥ ३८७ ॥
कत्थइ देसग्गहणं कत्थइ घेप्पंति निरवसेसाइं। उक्कमकमजुत्ताइं कारणवसओ निउत्ताइं ॥ ३८८ ॥
चउसमयविग्गहे सति महल्लयंघंमि तिसमओ जह वा। मोत्तुं तिपंचसमये तह चउसमओ इह निबद्धो ॥३८९॥
होइ असंखेज्जइमे भागे लोगस्स पढमबिइएसु। भासा असंखभागो भयणा सेसेसु समयेसु ॥ ३९० ॥
आपूरियम्मि लोगो दोण्हवि लोगस्स तह य भासाए। चरिमन्ते चरिमन्तो चरिमे समयम्मि सव्वत्थ ॥३९१॥
न समुग्घायगईए मीसयसवणं मयं च दंडम्मि। जइ तोऽवि तीहिं पूरइ समएहिं जओ पराघाओ ॥३९२॥
जइणे न पराघाओ स जीवजोगो य तेण चउसमओ। हेऊ होज्जाहि तहिं इच्छा कम्मं सहावो वा ॥ ३९३ ॥
गंथोऽवि वीससाए न पराघाओ य तेण चउसमओ। अह होज्ज पराघाओ हविज्ज तो सोऽवि तिसमइओ ॥३९४॥
एगदिसमाइसमए दंडं काऊण चउहिं पूरेइ। अन्ने भणंति तंपि य नागमजुत्तिक्खमं होइ ॥ ३९५ ॥

'जइणे' त्यादि। जैनसमुद्घातगत्या केचन भाषन्ते चतुर्भिः समयैः सकललोकः पूर्यते, 'प्रथमे समये दंड' मित्येवमाद्यनयेत्यभिप्रायः, तत्रैतत् स्यात्–भाषन्तां को निवारयते इति ?, उच्यते, सिद्धान्तः, तथाहि–एषामेवंवादिनामूर्ध्वाधोदिग्द्वये दण्डमात्रगमनानन्तरं दिक्षु मिश्रशब्दश्रवणमादिसमये न प्राप्नोति, उक्तं चैतदविशेषेण निर्युक्तिकृता–'भासासमसेढीओ सद्दं जं सुणइ मीसयं सुणई'। अथ सामान्योक्तित एव व्याख्यानतोऽर्थप्रतिपत्तिर्दण्ड एव मिश्रशब्दश्रवणं, न शेषदिक्ष्विति, नन्वेवमपि त्रिभिरापूर्यत इति

स्यात्, प्रथमदण्डसमयानन्तरं द्वितीयसमय एव पराघातसामर्थ्याच्चतसृषु दिक्षु मन्थानसिद्धिस्ततृतीयसमय एवापान्तरालपूरणात्, नन्वक्षिणी निमील्यालोच्यतामेतदिति, तत्रैतत्स्यात्–जैनसमुद्घातगत्योक्तमतो नायं दोषः, दोषश्चेदत्रापि त्रिभिरापूरणं प्रसजति, किल प्रथमसमये दण्डमात्रगमनात्, तन्न, सिद्धान्तापरिज्ञानात्, तथाहि–जैनसमुद्घातं स्वरूपेणापूरणादपराघातसामर्थ्यान्न द्वितीयसमये मन्थानसिद्धिर्येन भवत इवात्र समयत्रयापूरणं भवेत्, "दण्डं प्रथमे समये कपाटमथ चोत्तरे तथा समये। मन्थानमथ तृतीये" सकर्मकजीवव्यापारत्वादिति वचनात्, भाषायां तु द्वितीयसमय एव मन्थानं अनुश्रेणीगमनाच्चतुर्दिशं पराघातद्रव्यान्तरवासकत्वाच्च, अचित्तमहास्कन्धः कस्माज्जैनसमुद्घातवच्चतुर्भिरापूरयतीति चेत्, उच्यते, अचिन्त्यत्वाद्विश्रसापरिणामस्य पराघाताभावात् क्रमपरिणामित्वादिति गाथाऽर्द्धार्थः। साम्प्रतं स्थितपक्षवादिमतमाह–'पुरती' त्यादि गाथापश्चार्द्धं, 'पूर्यते' व्याप्यते 'सकलः' सम्पूर्णो 'लोकः' चतुर्दशरज्जु(वा)हल्यः, अन्ये पुनरभिदधति–त्रिभिः समयैरिति गाथार्थः ॥३८३॥ किं वाग्मात्रेण ?, नेत्याह—'पढमे' त्यादि। इह लोकमध्यस्थितवक्तुर्यतः प्रथमसमय एव मुक्तानि तान्यालोकान्तात् षट्सु दिक्षु यान्ति जीवसूक्ष्मपुद्गलानुश्रेणीगमनात्, ततः किमित्यत आह–द्वितीयसमये त एव षड् दण्डाः षड् मन्थानो भवन्ति, चतुर्दिशमेकैकशोऽनुश्रेण्या छत्वरीभवन्त इति वाक्यशेषः, इह चान्योऽन्यच्छत्वरानुगमोऽपि न विरुध्यते सूक्ष्मत्वादिति गाथार्थः ॥३८४॥ ततोऽपि किमित्यत आह—'मंथ'मित्यादि पूर्वार्धार्थः। साम्प्रतं प्रकाराभिप्रायेणाह–चतुर्भिः समयैर्लोकः पूर्यते लोकान्ते भाषमाणस्य,कथं ?, नाड्या बहिःस्थितसूणां दिशामन्यतरस्यां दिशि त्रुयतः प्रथमसमयेऽन्तर्नाडीमनुप्रविशन्ति त्रयोऽन्ये प्रागवद् दण्डादिक्रमेण, अयमत्राभिप्रायः–'सयंभुरमणपच्छिमपेरंतठिओ भासओ पढमसमये दंडं निसिरइ, सो य आयामओ रज्जू बाहल्लेण चत्तारि अंगुलाणि तिरश्चीनमलोकस्खलित इतिकृत्वेति भावनीयं, ततो वितिय-

समये ताओ दंडाओ सव्वओ परघायसामत्थेण उड्ढहो चोद्दसरज्जूसितं सव्वओ रज्जुवित्थरं चउरंगुलबाहल्लं छप्परं पसरइ णाडिमज्झे, पूर्वापरतिरश्चीनमित्यर्थः,इओऽवि तिरियं पराघातओ चेव दाहिणुत्तरतिरिच्छयं, मज्झभागं पडुच्च रज्जुमेत्तविच्छिण्णं वट्टं छप्परं पसरइ, य त्रमध्यत्वाल्लोकस्य, ततो तइए नाडिमज्झतिरिच्छट्ठियछप्परातो सव्वओ तयणुसेढीए दाहिणुत्तरपुव्वावरेण सयलं नाडिं भरेमाणं छप्परं पसरइ, एतदुक्तं भवति–लोकस्य ब्रह्मलोकमध्ये चउद्दिसिं दुरज्जुओ मंथो, अहोवि चउद्दिसिं (दु) रज्जुओ मंथो,शेषे तु प्रदेशहान्या स इति,चतुर्थसमये त्वेतदपान्तरालपूरणात् सकललोकव्याप्तिरिति ॥३८५॥ आह च–'दिसी'त्यादि गतार्थं पूर्वार्द्धम्,अन्याचार्याभिप्रायमेवाह—'विदिसिट्ठियस्से' त्यादि, विदिग्व्यवस्थितस्य जल्पतः समयाः पञ्च भवन्ति, लोकापूरणमङ्गीकृत्य, किं कारणमित्याह–'अइगमंमि' नाडीप्रवेशे यद्–यस्माद् द्वौ समयौ, गच्छतोऽनुश्रेणिगमनादिति गाथार्थः ॥३८६॥ यद्येवं किमनेकविकल्पसम्भवे सति सूत्रकारेण चतुःसमयग्रहणमकारि ?, उच्यते—'चउ' इत्यादि। चतुर्णां समयानां समाहारश्चतुःसमयं, चतुःसमयं न तन्मध्यं च त्रिपञ्चसमयापेक्षयेति चतुःसमयमध्यं.तस्य ग्रहणं तस्मिन् सति, किमत आह–त्रिपञ्चग्रहणं कृतमेव द्रष्टव्यमिति वाक्यशेषः, दृष्टान्तमाह–जहा तुलामज्झस्स गहणे आइपज्जंतगहणं, अपि च चित्रा गतिर्भगवतः सूत्रस्य लक्ष्यते ॥३८७॥ तथाहि—क्वचित्प्रदेशे देशग्रहणं यथाऽत्रैव, क्वचित् गृह्णन्ते निरवशेषाणि पक्षान्तराणि, उत्क्रमक्रमयुक्तानि 'कारणवशात्' मध्यग्रहणादिलक्षणात् 'नियुक्तानि' पदानि सूत्राणि भवन्तीति तन्त्रनीतिरिति गाथार्थः ॥३८८॥ अत्रैव प्रदेशान्तरसंवादिनं दृष्टान्तमाह—'चउ'इत्यादि। यथा वा भगवत्यां 'महल्लयंधम्मि' महल्लबंधोद्देशके सर्वत्र चतुःसामयिके सति 'त्रिसमयः' त्रिसामयिको विग्रहः प्रतिपादितः, तद्दहारि मोत्तुं तिपञ्चगमये चउसमयो लोकापूरणप्रकारो निबद्ध इति को दोषः ? इति गाथार्थः ॥३८९॥ अथ यदुक्तं 'लोकस्य च

कतिभागे कतिभागो भवति भाषायाः ?' इत्येतद् व्याचिख्यासुराह—'होई' त्यादि। 'लोकस्य' चतुर्दशरज्जुबाहल्यस्य 'भवति' समयते 'असंख्येयतमे भागे' स्तोकविभागे क्षेत्रगणितेन–क्षेत्रगणितमङ्गीकृत्य, कः ? इत्यत आह–भाषाया अपि व्यापिन्या असंख्येयतम एव भागः, कदेत्यत आह–प्रथमद्वितीयसमययोः, भजना तु शेषसमयेषु, इयमत्र भावना–त्रिसामयिकव्याप्तौ प्रथमसमये चतुःसमयव्याप्तौ च प्रथमद्वितीययोः, तृतीये तु सकलनाडीभरणात् संख्येयभागे संख्येयभागः, पञ्चसामयिकव्याप्तौ तु प्रथमद्वितीयतृतीयेषु 'होती'त्यादिगाथाऽऽद्यपादत्रयानुवृत्तिरित्याद्यनिर्युक्तिगाथापश्चार्द्धार्थः ॥३९०॥ अथ द्वितीयनिर्युक्तिगाथापश्चार्द्धार्थमाह–'आपूरियं'मी'त्यादि सुगमा, नवरं 'सर्वत्रे'ति सर्वपक्षान्तरेष्विति गाथार्थः ॥३९१॥ तदिदानीमनादेशदूषणं साक्षादाह—'न' इत्यादि। न केवलिसमुद्घातभङ्ग्या चतुःसमयापूरणं सैद्धान्तिकाः क्षन्तुमर्हन्ति, किमिति ?, यतः तत्र न प्रथमसमये 'छद्दिसिं मीसयसवणं लब्भइ', उक्तं च सूत्रकृता, व्याख्यानतोऽर्थप्रतिपत्तिः 'मतं च दंडम्मि, जइ'त्ति ननु तथापि त्रिभिरापूर्यत इति स्यात्, किं कारणमित्याह—यतः–द्वितीयसमय एव चतसृष्वपि दिक्षु पराघातसामर्थ्यान्मिन्थानसिद्धिस्तदनन्तरं च व्याप्तेरिति गाथार्थः ॥३९२॥ ननु च यथा जिनसमुद्घातः पराघातेऽसत्यपि चतुःसामयिकः, एवमयमपीत्येतदाशङ्क्याह—'जइणे'त्यादि, जैने पराघावो नास्ति, स्वरूपेणापूरणात्, येन कारणेनैवं तेन 'चउसमयो सो होउ, सजीवजोगो य'त्ति, यतश्चासौ सजीवयोगः–सकर्मजीवव्यापारः तेन चतुःसमयः क्रमवृत्तित्वात्, 'वा' इत्यथवा तत्र जैनसमुद्घाते चतुर्भिः समयैर्भवति, भवेत् 'हेतुः' कारणं 'इच्छा' एवमेव तस्येच्छा स्याद्येनाद्यसमय ऊर्ध्वाधो दण्डमात्रमेव निसृजति, कर्म वा स्वभावो वेति, शब्दद्रव्याणां तु अनुश्रेणिगमनपराघातस्वभावमात्रादन्यो न हेतुरस्तीति गाथार्थः ॥३९३॥ अचित्तमहास्कन्धे कस्मात् प्रथमसमयानन्तरं कपाटमात्रमित्यत आह—'खंधोऽची'त्यादि प्राय उक्तार्थैवेति ॥३९४॥

अनादेशान्तरमेव पूर्वपक्षीकुर्वन्नाह—'एगे' इत्यादि । अन्ने भणंति 'आदिसमये' प्रथमसमये एकदिक्कं दंडं कृत्वा चतुर्भिः पूरयति, एतदुक्तं भवति–ऊर्ध्वदिशा अतिरभसेन दण्डं करोति, द्वितीयसमये तु तत्र मन्थानमधोदिशि च दण्डमतितरलत्वात्, तृतीये तदन्तरालापूरणमिति, आह—साध्व्येवेयं कल्पनेति, तन्न, यतः—'तंपि'त्ति तदप्येवं परिकल्पनं नागमक्षमं, क्वचिदश्रुतत्वेनानार्षत्वात्, नापि च युक्तिक्षमं, सर्वतोऽनुश्रेणिगमनभाजामेकतोदिक्कं गच्छतां युक्त्यभावात्, वक्तृमुखप्रेरणानुकूल्यं चेत्, तन्न, तेषामाकाशपटलस्थानां प्रेर्यमाणत्वात्, तत्र च यद्दिशमनुश्रेणिसद्भावात्, अपिच एवं चतुर्विश्रेण्यनुकूलावस्थाने विश्रेणीगमनप्रसङ्गोऽपि स्यात्, तथा चतुःसमयानियमश्च पडहादिशब्दानां, वक्तृप्रयत्नाभावादिति गाथार्थः ॥३९५॥ तदेवमाभिनिबोधिकं तत्त्वतो भेदतश्च चर्चितं, इदानीं तु पर्यायतो नानादेशजविनेयजनानुग्रहार्थं चर्चयन्नाह सूत्रकारः—

ईहा अपोह वीमंसा, मग्गणा य गवेसणा । सण्णा सई मई पण्णा, सव्वं आभिणिबोहियं ॥३९६॥ (नि० १२)

होइ अपोहोऽवाओ सई धिई सव्वमेव मइ पण्णा । ईहा सेसा सव्वं इदमाभिणिबोहियं जाण ॥ ३९७ ॥

मइ-पन्ना-भिणियोहिय-बुद्धीओ होंति वयणपज्जाया । जा उग्गहाइसण्णा ते सव्वे अत्थपज्जाया ॥३९८॥

सव्वं वाऽभिणियोहियमिहोग्गहाइवयणेण संगहियं । केवलमत्थविसेसं पइ भिन्ना उग्गहाईया ॥३९९॥

उग्गहणमोग्गहोत्ति य अविसिट्ठमवग्गहो तयं सव्वं । ईहा जं मइचेट्ठा मइवावारो तयं सव्वं ॥४००॥

अवगमणमवाउत्ति य अत्थावगमो तयं हवइ सव्वं । धरणं च धारणत्ति य तं सव्वं धरणमत्थस्स ॥४०१॥

'ईहे'त्यादि, ईहनमीहा–सदर्थपर्यालोचनं, अपोहनमपोहो निर्णयः, 'विमर्शः' अपायात् पूर्वं ईहायाश्चोत्तरत्र शङ्खधर्मा घटन्ते

इति विमर्शः, मार्गणा त्वन्वयधर्मप्रार्थना, 'गवेषणा' हेयधर्मप्रार्थना, संज्ञानं संज्ञा व्यञ्जनावग्रहादुत्तरकालभावी प्रत्ययः, स्मृतिस्तु स्मरणं-प्रागुपलब्धप्रत्यभिज्ञानं, मननं मतिः कथञ्चिदर्थपरिच्छित्तावपि अपूर्वसूक्ष्मतरधर्मालोचनरूपा बुद्धिः, प्रज्ञानं प्रज्ञा-विशिष्टतरक्षयोपशमाहितप्रभूतवस्तुगतयथावस्थितधर्मालोचनरूपा मतिरेवेत्यर्थः । एते विशेषाः, सामान्यमाह-सर्वमेतदाभिनिबोधिकमिति गाथार्थः ॥ ३९६ ॥ अतो यद्यद् अभिधीयते तदाह—'होइ'इत्यादि, सुगमा, नवरं मतिप्रज्ञे सर्वमेव मतिज्ञानं, शेषभेदास्त्वीहा, सर्वं चैतन्मतिज्ञानान्न भिद्यते, वचनार्थपर्यायत्वादिति ॥ ३९७ ॥ तथाहि—'मती'त्यादि, मत्यादिवचनचतुष्टयं वचनपर्यायाः सम्पूर्णवस्तुवाचकत्वात्, यास्त्ववग्रहादिसंज्ञाः सर्वेऽर्थपर्यायाः, अथवा सर्व एवाभिलापा वचनपर्यायाः, इतरे त्वितरे सर्ववस्तूनां, एवं मतावपीति गाथार्थः ॥ ३९८ ॥ 'सव्वं वे'त्यादि, अथवा इह-अस्मिन् प्रस्तावेऽवग्गहादिवयणेणंति पृथक्पृथगवग्रहादीनामन्यतमेनापीति 'सव्वं आभिणिबोहियं संगहियं'ति समस्तं मतिज्ञानमाक्रोडितमित्यर्थः, कया ? चेत्, उच्यते-'गुणसंज्ञया' अन्वर्थसंज्ञया वचनव्युत्पत्त्येतियावत्, सा चेयम्-अवग्रहणमवग्रहः, तथाहि-सामान्यार्थावग्रहवचनेनेहापायधारणाः संगृहीताः, मतिचेष्टापायाविच्युतिरूपत्वात्, पङ्कजवचनेनेव नीलोत्पलोत्पलमृणालनालनालिककल्हारकमलादयः, सर्वत्रान्वर्थाविशेषात् ॥ ३९९ ॥ तथा चाह—'उग्गहण'मित्यादि, अयमत्र भावार्थः-अवग्रहणमवग्रह इतिकृत्वा यथाऽसौ सामान्यस्य तथेहादयोऽपि यस्य यावतश्चार्थस्य ततः अविसिट्ठं सर्वं सामान्येन 'तयं' ईहादि सव्वमवग्गहोत्ति स्थितं, एवं ईहा द्वितीयो मतिभेदो यत्-यस्मान्मतिचेष्टारूपो वर्त्तते, अतो मतिव्यापारः, तत्रावग्रहादि सर्वं वर्त्तते, सर्वं तदीहा वर्त्तत इत्यभिप्राय इति गाथार्थः ॥४००॥ तथा—'अवगमण'मित्यादि, अवगमनं अपायो येन वर्त्तते अतः अर्थावगमस्तत्सर्वमवग्रहेहाधारणादि वर्त्तते, तथा धरणं धारणेतिकृत्वा, चौ पूरणार्थौ, अतः तदवग्रहादि सर्वं

धारणा, कुतः ?–तेषु यतो 'धरणमत्थस्स अत्थि'त्ति वक्कसेसो, अतोऽभ्यधायि–सव्वं वाऽऽभिणिबोहियमिहोग्गहादिवयणे संगहियमन्वर्थसंज्ञाऽविशेषात्, केवलं–नवरं अत्थविसेसं पति–अर्थविशेषापेक्षया रूढिमङ्गीकृत्य एकद्रव्योपदेशनीं संज्ञामङ्गीकृत्येतियावत् भिन्नानिकृष्टमूर्त्तयः अवग्रहादयो भवन्ति, पङ्कजवदिति प्रथमगाथायाः पौर्वापर्यार्थः ॥४०१॥ यदुक्तं सूत्रकारेण–'तं समासओ चउव्विहं पण्णत्त'मित्येयमादि अर्थमाह–

तं पुण चउव्विहं नेयभेयओ तेण जं तदुवउत्तो । आदेसेणं सव्वं दव्वाइ चउव्विहं मुणइ ॥ ४०२ ॥
आएसोत्ति पगारो ओहादेसेण सव्वदव्वाइं । धम्मत्थिआइयाइं जाणइ न उ सव्वभेएणं ॥४०३॥
खेत्तं लोगालोगं कालं सव्वद्धमहव तिविहंति । पंचोदइयाईए भावे जं नेयमेवइयं ॥४०४॥
आएसोत्ति व सुत्तं सुओवलद्धेसु तस्स मइनाणं । पसरइ तब्भावणया विणावि सुत्ताणुसारेणं ॥४०५॥

'तं पुणे'त्यादि, तत् पुनराभिनिबोधिकज्ञानं 'चतुर्विधं' चतूरूपं, किं स्वरूपतो ?, नेत्याह–'ज्ञेयभेदतः' उपाधिभेदात्, किमित्यत आह–तेन यद्–यस्माद् 'उपयुक्तः' अर्पितान्तःकरणो मतिज्ञानी 'सर्वं' निरवशेषं द्रव्यादि, किंविशिष्टमित्याह–'चउव्विहं' चतुर्भेदं 'मुणति' जानीते, कथमित्याह–'आदेसेणं'ति गाथार्थः ॥४०२॥ कोऽयमादेशो नामेत्यत आह–'आदेस' इत्यादि, आदेश इति प्रकार उच्यते, स चौघादेशो विशेषादेशश्च, तत्र 'ओहादेसेण' सामान्यादेशेन सर्वद्रव्याणि धर्मास्तिकायादीनि 'जानाति' अवबुध्यते, यथैवमेवंविशिष्टो धर्मास्तिकाय इत्येवमादि, द्वितीयप्रतिषेधमाह–न पुनः सर्वभेदेन 'न उ सव्वपज्जवेहिं'ति वचनात्, केवलिगम्यत्वादिति गाथार्थः ॥ ४०३ ॥ एवम्–'खेत्त'मित्यादि, स्वधिया भावनीयं, किमित्येतावदेवेत्यत आह–'जं नेयं एवइयं'ति गाथार्थः ॥४०४॥

'आगमो' इत्यादि, अथवा आदेश इति सूत्रं तेन सूत्रादेशेन आभिणिबोहियनाणी सव्वदव्वाइं जाणइ, ण उ सव्वभेदेणं, आह-यदि सूत्रादेशेन कथमाभिनिबोधिकज्ञानेनेति, उच्यते, ननूक्तं प्राक्, किमुक्तमित्यत आह-'सुओवलद्धेसु तस्स मतिणाणं' क्रियाकलापादिषु प्रवर्तते, तद्भावनया विनापि सूत्रानुसारेणेति गाथार्थः ॥ ४०५ ॥ तदेवमिदं द्रव्यादिभिर्निरूप्येदानीं नवभिरनुयोगद्वारैरन्यथा निरूपयितुमाह—

संतपयपरूवणया दव्वपमाणं च खित्त फुसणा य । कालो य अंतरं भाग भाव अप्पाबहुं चेव ॥४०६॥ (नि. १३)

संतंति विज्जमाणं एयस्स पयस्स जा परूवणया । गइयाइएसु वत्थुसु संतपयपरूवणा सा उ ॥४०७॥

जीवस्स व जं संतं जम्हा तं तेहिं तेसु वा पयति । तो संतस्स पयाइं ताइं तेसुं परूवणया ॥ ४०८ ॥

गइ-इंदिए य काए जोए वेए कसाय-लेसासु । सम्मत्तनाणदंसणसंजयउवओगआहारे ॥४०९॥ (नि० १४)

भासगपरित्तपज्जत्तसुहुमसण्णी य भवियचरमे य । पुव्वपडिवन्नए वा पडिवज्जंते य मग्गणया ॥४१०॥(नि. १५)

एगिंदियजाईओ सम्मामिच्छो य जो य मज्झत्थू । अपरित्ता य अभव्वा अचरिमा य एए सया सुण्णा ॥४११॥

विगला अविसुद्धलेसा मणपज्जवणाणिणो अणाहारा । असण्णी अणगारोवओगिणो पुव्वपडिवन्ना ॥४१२॥

सेसा पुव्वपवण्णा नियमा पडिवज्जमाणया भइया । भयणा पुव्वपवण्णा अकसायावेयया होंति ॥४१३॥

'संतपये'त्यादि, तत्र प्रथमद्वारं 'संतपदपरूवणयत्ति,' सच्च तत्पदं च सत्पदं तस्य प्ररूपणा २ तद्द्वारः सत्पदप्ररूपणता,

साऽस्य कर्त्तव्या, केषु ?-गतिमाईएसु मतिद्वारेष्विति वक्ष्यति, यद्वा सद्विषयं पदमिति शेषं प्राग्वत्, खरविषाणपदप्ररूपणाऽप्यस्तीति न सद्ग्रहणम्। अथवा सन्ति च तानि पदानि च-गत्यादीनि सत्पदानि तेष्वस्य प्ररूपणतेति सत्पदप्ररूपणता, प्रथमं द्वारं, तथा मतिज्ञानिद्रव्यप्रमाणं चाख्येयं, कियन्त्यस्मिन् त्रैलोक्ये तानि ?, कियन्तो वैकसमये मतिज्ञानप्रतिपत्तार इति, चः समुच्चयार्थः, 'खित्त'मिति कियति क्षेत्रे इदं सम्भवति ? तत्र वक्ष्यति-"सत्तोवरिं अहे पञ्च", किमित्यधः पञ्च ? इति चेत् सम्यग्दृष्टेः सप्तमीतो गमनागमनप्रतिषेधात्। 'फुसणा य' कियत् क्षेत्रं मतिज्ञानिनः स्पृशन्ति ?, क्षेत्रस्पर्शनयोः कः प्रतिविशेष इति चेत्, उच्यते, एकसप्रदेशः, चः प्राग्वत्, कालश्च स्थित्यादि, तथा अन्तरं प्रतिपत्त्यादौ, तथा 'भागः' मतिज्ञानिनः शेषज्ञानिनां कतिभागे वर्तन्ते इति, तथा 'भावः' कस्मिन् भावे एते वर्त्तन्ते इति, तथाऽल्पबहुत्वं चाख्येयं मतिज्ञानिनां, भागद्वारादेवायमर्थो लब्ध इति चेत्, तन्न, इह स्वस्थान एव पूर्वप्रतिपन्नप्रतिपद्यमानापेक्षयाऽल्पबहुत्वचिन्ताधिकारादिति द्वारगाथार्थः ॥ ४०६ ॥ साम्प्रतमाद्यद्वारव्याचिख्यासये-दमाह—'संतंवी' त्यादि गतार्था ॥४०७॥ 'जीवस्स चे' त्यादि। अथवा 'जीवस्य' निर्दिष्टस्वरूपस्य यत्सत् आभिनिबोधिकं नामेत्य-भिप्रायः, तत् यस्मात्तैर्गत्यादिभिः करणभूतैस्तेषु वाऽधिकरणभूतेषु 'पदति'त्ति पद्यते गम्यतेऽनुगम्यत इतियावत्, ततः किमित्यत आह-'तो'त्ति तस्मात् 'संतस्य' सतः पदानि तानि सत्पदानि तेषु प्ररूपणता सत्पदप्ररूपणतेति ॥३०८॥ आह च—'गती' त्यादि। तत्राभिनिबोधिकमस्ति नास्तीति, उच्यते, अस्ति, यद्यस्ति क्वास्ति ?, 'गति'त्ति गतौ, सा चतुर्विधा नारकतिर्यग्नरामरभेदात्, एवस्याभिनिबोधिकस्य पूर्वप्रतिपन्ना विद्यन्ते, तैरस्या अशून्यत्वाभिधानात्, "आभिनिबोहियनाणी णं भंते! नेरइए" एवमादिवचनात्, प्रतिपद्यमानकांस्त्वङ्गीकृत्यानियमो विवक्षितकाले व्यभिचारादपि, कोऽनयोर्विशेषः ? इति चेत्, उच्यते, अत्र व्यवहारनिश्चयौ, तत्र

व्यवहारस्य प्रतिपद्यमानकोऽन्तर्मुहूर्त्तं, इतरस्य त्वेकं समयं, शेषसमयेषु पूर्वप्रतिपन्न एवेति, 'इंदिए य'त्ति इन्द्रियाण्यधिकृत्येदं मृग्यते, तान्येकादीनि पञ्चान्तानि, तत्रास्य पञ्चेन्द्रिया नियमतः पूर्वप्रतिपन्नाः सन्त्येव, इतरे तु भाज्या नारका इवेति भावना, चतुस्त्रिद्वीन्द्रियास्तु पूर्वप्रतिपन्नाः सम्भवन्ति, नतु प्रतिपद्यमानकाः, श्रवणाभावात्, एकेन्द्रियास्तूभयप्रतिषिद्धाः, एतेषां गत्यन्तर्भावेऽपि भेदेनोपन्यासः इन्द्रियविशेषोपाधिभेदाद्, एवं सर्वत्र भावनीयं। 'काय' इति पृथिवीकायो यावत् त्रसकायः, त्रसकाये पञ्चेन्द्रियेष्विव, शेषकायेष्वेकेन्द्रियेष्विवेति। योगा–मनोवाक्कायलक्षणाः, तत्र समुदितेषु पञ्चेन्द्रियेष्विव, केवलकाययोगे त्वेकेन्द्रिय इव अन्यत्र कार्मणात्। वेदाः–स्त्रीपुंनपुंसकाख्याः, समुदितेषु पञ्चेन्द्रिया इव। कषायाः क्रोधादयः, पुनरेकैकश्चतुर्धा–अनन्तानुबन्ध्यप्रत्याख्याननामधेयप्रत्याख्यानावरणसञ्ज्वलनभेदात्, आद्येष्वेकेन्द्रिया इव, संक्लिष्टपरिणामत्वात्, द्वादशसु पञ्चेन्द्रिया इव। 'लेस्सा य'त्ति षड् लेश्याः कृष्णाद्याः, तत्रोपरितनीषु पञ्चेन्द्रिया इव, आद्यासु विकलेन्द्रिया इव। 'सम्मत्त'त्ति सम्यग्दृष्टिः, किं पूर्वं प्रतिपन्नः प्रतिपद्यमानको वेति, अत्र व्यवहारनिश्चयौ, तत्र व्यवहारस्य सम्यग्दृष्टिः पूर्वप्रतिपन्नो, न प्रतिपद्यमानकः, सम्यक्त्वमतिश्रुतानां युगपल्लाभभावात् आभिनिबोधिकप्रतिपत्त्यनवस्थानाच्च, इतरस्य पूर्वप्रतिपन्नः प्रतिपद्यमानकश्च सम्यग्दृष्टिः, आभिनिबोधिकलाभस्य सम्यग्दर्शनसहचरितत्वात् सम्यक्त्वप्रतिपत्तिसमये च सम्यक्प्रतिपत्तेः, क्रियाकालनिष्ठाकालयोरभेदात्, भेदे च क्रियाभावाविशेषात् पूर्ववद्वस्तुतोऽनुत्पत्तिप्रसङ्गात्, न चेत्थं प्रतिपत्त्यनवस्थेत्यनन्तरं पूर्वप्रतिपन्नकत्वसद्भावात्। 'नाणे'त्ति नाणं पंचविहं मतिश्रुतावधिमनःपर्यायकेवलभेदात्, अत्राप्याह व्यवहारः–मतिश्रुतावधिमनःपर्यायज्ञानिनः पूर्वप्रतिपन्ना एव, नतु प्रतिपद्यमानकाः, मत्यादिलाभस्य सम्यग्दर्शनसहायत्वात्, केवली तूभयप्रतिषिद्धस्तस्य क्षायोपशमिकभावानाधारत्वात्, मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानवन्तस्तु विवक्षितकाले प्रतिपद्यमानका भवन्ति, त-

त्यविपन्नः, नत्वितरे, तेषामज्ञानित्वात्, निश्चयनयमतेन तु मतिश्रुतावधिज्ञानिनः पूर्वप्रतिपन्ना नियमतः सन्ति,प्रतिपद्यमाना अपि,सर्वत्राभिमुखे सति ज्ञानाभ्युपगमात् सम्यग्दर्शनसहचारित्वात् मत्यादिलाभस्य क्रियाकालनिष्ठाकालयोरभेदात्, मनःपर्यायज्ञानिनस्तु पूर्वप्रतिपन्ना एव,न प्रतिपद्यमानकाः,तस्य भावयतेरेवोत्पत्तेः,केवलिनां तूभयाभाव इति, मत्याद्यज्ञानवन्तस्तु न पूर्वप्रतिपन्ना नापि प्रतिपद्यमानकाः, प्रतिपत्तिक्रियाकाले मत्याद्यज्ञानाभावात् क्रियाकालनिष्ठाकालयोश्च भेदात् अज्ञानभावे च प्रतिपत्तिक्रियाऽभावादिति। 'दंसणं'त्ति,तच्चतुर्द्धा चक्षुरचक्षुरवधिकेवलभेदात्,तत्र ये चक्षुर्दर्शनितोऽचक्षुर्दर्शनिनश्च ते दर्शनलब्धिमङ्गीकृत्य पूर्वप्रतिपन्नाः सन्त्येव, इतरे तु भाज्या इत्यविरुद्धमेतत्, चक्षुर्दर्शनाचक्षुर्दर्शनोपयोगं त्वङ्गीकृत्य पूर्वप्रतिपन्ना एव सन्ति, नेतरे, विरुद्धत्वात्,विरुद्धत्वं चास्यानाकारोपयोगत्वाद् अनाकारोपयोगे च लब्ध्युत्पत्तिप्रतिषेधात्, उक्तं च–'सव्वाओ लद्धीओ सागारोवयोगोवउत्तस्स उप्पज्जंति' वक्ष्यते चोपयोगद्वार एतदिति,अवधिदर्शनिनस्तु प्राक्प्रतिपन्ना एव, केवलिनस्तु उभयविकलाः। 'संजय'त्ति संयतः प्राक्प्रतिपन्न एव। 'उवओग'त्ति, स साकारोऽनाकारश्च, साकारोपयोगिनः पूर्वप्रतिपन्ना नियमतः सन्त्येव, इतरे तु भाज्याः, अनाकारोपयोगिनस्तु प्राक् प्रतिपन्ना एव। 'आहार'त्ति आहारकाः पूर्वप्रतिपन्ना नियमतः सन्ति, इतरे भाज्याः, अनाहारकास्त्वपान्तरालगतौ पूर्वप्रतिपन्नाः सम्भवन्ति, न त्वितरे। 'भासग'त्ति भाषालब्धिमंतो भाषकास्ते भाषमाणा अभाषमाणा वा पूर्वप्रतिपन्ना नियमतः सन्ति, इतरे भाज्याः, तल्लब्धिशून्याश्चोभयविकलाः। 'परित्त'इति परीत्ताः–प्रत्येकशरीरिणस्ते प्राक् प्रतिपन्ना नियमतः सन्तीतरे तु भाज्याः,साधारणास्तूभयविकलाः। 'पज्जत्त'त्ति, ये षड्भिः पर्याप्तिभिः पर्याप्तास्ते नियमतः पूर्वप्रतिपन्नाः, इतरे तु भाज्याः, अपर्याप्तकास्तु षट्पर्याप्त्यपेक्षया पूर्वप्रतिपन्नाः सम्भवन्ति, नत्वितरे। 'सुहुम'त्ति, सूक्ष्मा उभयविकलाः, बादराः पूर्वप्रतिपन्नाः सन्ति नियमादितरे तु भाज्याः। 'सण्णि'त्ति, तत्रेह दीर्घका-

लिकोपदेशेन संज्ञिनोऽभिगृह्यन्ते, ते च बादरवत्, असंज्ञिनस्तु प्राक्प्रतिपन्नाः सम्भवन्ति सास्वादनाः, न त्वितरे । 'भव'त्ति भवसि-द्धिकाः सामान्या एते संज्ञिन इव, अभवसिद्धिका उभयशून्याः । 'चरमे'त्ति चरमो भवो भविष्यति येषां ते अभेदोपचाराच्चरमास्ते पूर्व-प्रतिपन्ना नियमतः, इतरे भाज्याः, अचरमा उभयविकलाः, उत्तरार्द्धं व्याख्यातमेवेति कृता सत्पदप्ररूपणेति, द्वारम् । अधुनाऽऽभिनि-बोधिकजीवद्रव्यप्रमाणं निरूप्यते–तत्र विवक्षितकाले प्रतिपत्तिमङ्गीकृत्य–सिय सन्ति सिय ण, जइ संति जहन्नेणं एक्को वा दो वा तिन्नि वा, उक्कोसेणं खेत्तपलिओवमासंखेज्जतिभागो, एवं पुव्वपडिवन्नाइं जहन्नेणं उक्कोसेणं सो चेव समहिओ, दारं । 'खेत्तं'ति नानाजीवानङ्गीकृत्य सर्व एव मतिज्ञानिनो लोकासंख्येयभागवृत्तयः, एकजीवस्त्वलिकागत्योर्ध्वमनुत्तरसुरेषु गच्छन् आगच्छन् वा सप्तच-तुर्दशभागवृत्तिः, अधस्तु षष्ठपृथिव्यामुत्पद्यमानः उद्वर्त्तमानो वा पञ्चसु सप्तभागेष्विति, सम्यग्दृष्टेरधः सप्तम्युपपातोद्वर्त्तनाऽयोगात्, परित्यक्तेनोत्पत्त्युद्वर्त्तनात्, 'फुसणा' यत्रावगाढस्तत् क्षेत्रं स्पर्शना तु बहिरपि परमाणोरिव । 'कालो य'त्ति तत्रोपयोगमङ्गीकृत्य एकस्यानेकेषां चान्तर्मुहूर्त्तं कालो भवति जघन्यत उत्कृष्टतश्चेति, लब्धिं त्वङ्गीकृत्यैकस्य जीवस्य जघन्येनान्तर्मुहूर्त्तं 'उक्कोसेणं छावट्ठि-सागरा विसेसाहिया दोवारे विजयाइसु गयस्सऽहवा तिन्निऽच्चुए' इत्येवमादि, तत ऊर्ध्वमप्रच्युतेनैवापवर्गः, नानाजीवांस्त्वङ्गीकृत्य सर्वका-लमेवास्ति आभिनिबोधिकायाराऽशून्यत्वाल्लोकस्य । 'अंतरं'ति एकजीवापेक्षयाऽन्तरं जघन्यतोऽन्तर्मुहूर्त्तं, लब्ध्वेदं संत्यज्य भूयोऽपि प्रापणात्, क्षयोपशमवैचित्र्यात्, उत्कृष्टस्तूपार्धपुद्गलपरावर्त्तः, कस्यचिदाशातनादिबहुलत्वात्, उक्तं च–"तित्थयरपवयणसुय"मित्यादि, नानापेक्षया त्वन्तरालाभाव इति । 'भाग'इति मतिज्ञानिनः शेषज्ञानिनामज्ञानिनां चानन्तभागे वर्त्तन्त इति । 'भाव'त्ति, इमे मति-ज्ञानिनः क्षायोपशमिके भावे । 'अप्पाबहुं चेव'त्ति, इह ह्याभिनिबोधिकज्ञानप्रतिपद्यमानपूर्वप्रतिपन्नकापेक्षयाऽल्पबहुत्वविभागोऽय-

मतौ सत्प-दादीनि
॥१५९॥

मित्यतः सद्भावे सति सर्वस्तोकाः प्रतिपद्यमानकाः, इतरे तु जघन्यपदिनस्तेभ्योऽसंख्येयगुणाः, उत्कृष्टपदिनस्तु विशेषाधिका इत्यव-
यवार्थः ॥४०९-१०॥ साम्प्रतं येषु स्थानेषु न सन्ति तान्युपोद्धरयन्नाह-'एगिंदिये'त्यादि, एकेन्द्रियः एकेन्द्रियजातीयः,कायद्वारे पृथि-
व्यादयः, तथा 'सम्मामिच्छो य जो य सव्वण्णु'त्ति, गतौ सिद्ध इन्द्रियद्वारेऽतीन्द्रियः कायादिद्वारेष्वकायः अयोगः अलेश्यः केवल-
ज्ञानी केवलदर्शनी नोसंयतो नोपरीत्तो नोपर्याप्तको नोसूक्ष्मो नोसंज्ञी नोभव्यो, यथापरीत्तोऽभव्योऽचरमश्चैते-एकेन्द्रियादयः 'सदा'
सर्वदा शून्या अनेनेति गाथार्थः ॥४११॥ 'वियला'इत्यादि, गतार्था ॥४१२॥ नवरमनाकारोपयोगिनो न प्रतिपद्यमानकाः, अस्य
लब्धित्वात्॥४१२॥ 'सेसा'इत्यादि,शेषाः-उक्तव्यतिरेकिणो नारकादयो गत्यादिष्विति सामर्थ्याद् गम्यते, पूर्वप्रतिपन्ना नियमतः सन्त्ये-
व,प्रतिपद्यमानकास्तु भाज्याः, 'भयणे'त्यादि पच्छद्धमस्यायमर्थः,अकषाया अवेदका ओघिकाः पूर्वप्रतिपन्नाः खल्वस्य भवन्ति,कथं?,
भजनया, एतदुक्तं भवति-उपशान्तक्षीणवीतरागौ प्राक्प्रतिपन्नौ न केवलीति भजनेति गाथार्थः ॥ ४१३ ॥ यदुक्तम्-'सम्मत्तनाण-
दंसणे'त्येवमादि, अत्र नयविचारः, तौ च द्वौ-व्यवहारनिश्चयौ, तत्र-

सम्मत्तनाणरहियस्स नाणमुप्पज्जइत्ति ववहारो। नेच्छइयनओ भासइ उप्पज्जइ तेहिं सहिअस्स ॥४१४॥
ववहारमयं जायं न जायए भावओ कयघडो व्व। अह चे कयंपि कज्जइ कज्जउ निच्चं न य समत्ती ॥४१५॥
किरियावेफल्लं चिय पुव्वमभूयं च दीसए होंतं। दीसइ दीहो य जओ किरियाकालो घडाईणं ॥४१६॥
नारंभे च्चिय दीसइ न सिवायद्धाए दीसइ तदंते। इय न सवणाइकाले नाणं जुत्तं तदंतम्मि ॥४१७॥
नेच्छइओ नाजायं जायअभावत्तओ खपुप्फं व। अह च अजायं जायइ जायउ तो खरविसाणंपि ॥४१८॥

निचकिरियाइदोसा नणु तुल्ला असइ कट्ठतरगा वा। पुव्वमभूयं च न ते दीसइ किं खरविसाणंपि ? ॥४१९॥
पइसमउप्पण्णाणं परोप्परविलक्खणाण सुबहूणं। दीहो किरियाकालो जइ दीसइ किं त्थ कुंभस्स ? ॥४२०॥
अण्णारंभे अण्णं कह दीसइ जह घडो पडारंभे ?। सिवकादओ न घडओ, किह दीसइ सो तदद्धाए ? ॥४२१॥
अन्ते चिय आरद्धो जइ दीसइ तम्मि चेव को दोसो ?। अकयं व संपइ गए किह कीरइ किह व एसम्मि ? ॥४२२॥
पइसमयकज्जकोडीनिरवेक्खो घडगयाहिलासोऽसि। पइसमयकज्जकालं थूलमइ ! घडम्मि लाएसि ॥४२३॥
को चरिमसमयनियमो ? पढमे चिय तो न कीरए कज्जं। नाकारणंति कज्जं तं चेवं तम्मि से समए ॥४२४॥
उप्पाएऽवि न नाणं जइ तो सो कस्स होइ उप्पाओ ?। तम्मि य जइ अण्णाणं तो नाणं कम्मि कालम्मि ? ॥४२५॥
को व सवणाइकालो ? उप्पाओ जम्मि होज्ज से नाणं। नाणं च तदुप्पाओ य दोऽवि चरिमम्मि समयम्मि ४२६

'सम्मत्ते'त्यादि, सम्यक्त्वं च ज्ञानं च सम्यक्त्वज्ञाने ताभ्यां रहितः-शून्य इति सम्यक्त्वज्ञानरहितो, मिथ्यादृष्टिरित्यर्थः, तस्य 'ज्ञानमुत्पद्यते' ज्ञानं प्रसूयते इति-एवं व्यवहारो नयः प्रतिपद्यते, असत्कार्यवादितया मिथ्यादृष्टिप्रतिपत्त्यभ्युपगमात् क्रियाकालनिष्ठाकालयोर्भेदात्, इतरं प्रति का वार्तेत्याह-नैश्चयिकनयो भाषते-'उत्पद्यते' प्रसूयते ज्ञानं, किंविशिष्टस्येत्यत आह-ताभ्यां सम्यक्त्वज्ञानाभ्यां 'सहितस्य' युक्तस्य, सम्यग्दृष्टेरित्यर्थः, सत्कार्यवादितया सम्यग्दृष्टिप्रतिपत्त्यभ्युपगमादिति समुदायार्थः ॥ ४१४ ॥ अधयवार्थमाह-'ववहारे'त्यादि, व्यवहारनयमतमिदं-यदुत 'जायं'ति, जातं-भूतं कृतमुत्पन्नं न जायते, नोत्पद्यत इत्यर्थः, एषा प्रतिज्ञा, हेतुमाह-'भावओ'त्ति विद्यमानत्वात्, दृष्टान्तमाह-कृतघटवत् १, व्यतिरेकेण त्वकृतघट उदाहरणं, विपक्षे बाधामाह-'अह चे'त्ति अथ

चेत्कृतमपि क्रियते–जातमपि जन्यते ततः 'कज्जउ निच्चं' जन्यतां सदाकालं, प्रयोगः–विवक्षितसमये तत्क्रियतां जातत्वात् पाश्चात्यसमयवत्, ततश्च नित्यक्रियाप्रसङ्गः २, अत एवाह–'ण य सम्मत्ती' नैव चैवं कार्यपरिसमाप्तिः,तस्य निष्पन्नाभ्युपगमात्,निष्पन्नस्य च भूयोऽपि क्रियमाणत्वात्, 'कयंपि कीरइ' इत्यभ्युपगमाद् ३, अतः सेयमाभिनिवोधिकप्रतिपत्त्यनवस्थेति गाथार्थः ॥ ४१५ ॥ अपिच–एवं चतुर्थश्चायं दोषः—'किरिये'त्यादि, यदि हि कृतमपि क्रियते ततो घटे उत्पाद्ये क्रियायाः–चक्रभ्रमणरूपायाः वैफल्यं स्यात्, पूर्वपूर्वव्यापारस्याकिञ्चित्करत्वात् ४, अपिच–एवमध्यक्षविरोधदोषश्च पञ्चमः, कुत इत्याह–यद्–यस्मात् पूर्वं–मृत्पिण्डावस्थायां 'अभूतं' अविद्यमानं 'दृश्यते' उपलभ्यते 'भवत्' उत्पद्यमानं, पश्चाद् घटादीति वाक्यशेषः, इतश्च सञ्जायत इति पक्षः क्षतिकृदित्याह–'दीसती'त्यादि 'दृश्यते' उपलभ्यते 'दीर्घो' द्राघीयान्, चो दूषणोद्भावनार्थः, यतः–यस्मात् क्रियाकालो–निर्वर्त्तनाकालो 'घटादीनां' घटपटादीनां त्वयाऽपीति शेष इति गाथार्थः ॥ ४१६ ॥ तथाहि—'नारंभे चिये'त्यादि, नारम्भ एव–मृत्खननादिपूर्वसेवालक्षणे दृश्यते–उपलभ्यते, विशिष्टावस्थायां द्रक्ष्यते इत्यत आह–'न सिवादद्धाए' न शिवकस्थासकोशकुशूलावस्थायामित्यर्थः, यद्येवं न द्रष्टव्योऽसाविति तन्न, यतो दृश्यते तदन्ते–कुशूलावस्थान्त इत्यभिप्रायः, प्रकृतं भावयन्नाह–'इय' एवं घटादिवस्तुवत् 'न श्रवणादिकाले' न प्रत्यहं साधुसमीपश्रवणकाले 'ज्ञानं युक्तं' सम्यक्त्वादि घटते, येन प्रतिपद्यमानकप्रतिपत्तिः साधीयसी स्यात्, उक्तदोषप्रसंगाद्, किं तर्हि ?, 'तदन्ते' श्रवणादिनिष्ठाकाले, ज्ञानं युक्तमिति वर्त्तते,प्रागभावात् पश्चाच्च भावात् क्रियाकालनिष्ठाकालयोर्भेदादिति व्यवहारः ॥४१७॥ एवमुक्ते—'नेच्छइओ' इत्यादि, निश्चये भवो नैश्चयिकः स आह–यथा 'जातं न जायते भावतो कयघडोव्व' इति ब्रूषे,एवमहमपि च–अजातमपि न जायते,अकृतस्याकरणात्,तथाहि–नाजातं जायत इति प्रतिज्ञा,अभावत्वात् खपुष्पवदिति,अयमपि

बाधामाह–अथचेदजातमपि जायते जायतां ततः खरविषाणमपीति, अतः किमुच्यते-जातं न जायत इति गाथार्थः ॥४१८॥ अपिच असत्कार्यवादिन्! 'निच्चे'त्यादि। ननु इत्यक्षान्तौ 'असइ'त्ति अविद्यमानस्योत्पत्तौ 'तुल्याः' समानाः, के? इत्यत आह–निच्यक्रियादिदोषाः, कुलालस्यासद्घटकरणे सुचिरेणापि कारकाणां स्वाभिधानताघटनायोगात्, किं तुल्या एव ?, नेत्याह—'कष्टतरा वा' दुष्परिहार्यतरा वा, अत्यन्ताभावरूपत्वात् खरविषाणवत्, विद्यमाने तु पर्यायविशेषार्पणात्—पर्यायविशेषविवक्षणात् स्यादपि क्रियाव्यपदेशः—आकाशं कुरु पार्दं पृष्ठं वा कुर्विति, नायं खरविषाणो न्यायः समस्तीति, यदि च प्रागभवत् सत्पश्चात् स्यात् ततः किं ते खरविषाणमपि पुव्वअभूयं सन्तमपि पश्चान्न भवद् दृश्यते? येनोच्यते–पुव्वमभूतं च दीसए हुंतं' तीति गाथार्थः ॥४१९॥ न च दीर्घक्रियाकालदर्शनमविद्यमानोत्पत्तिसाधनं, तस्यान्यविषयत्वात्, तथा च–'पती'त्यादि। समयं समयं प्रति उत्पन्ना प्रतिसमयोत्पन्नास्तेषां, केषामिति चेद्, मृत्खननसंहरणपिटकारासभपृष्ठारोपणावतारणाम्भःसेचनापरिमर्दनभ्रमचक्रमस्तकारोपणमृत्पिण्डशिवकस्थासकोशकुशूलादिकार्याणामिति गम्यते, किंविशिष्टानामित्याह–परस्परविलक्षणानां सुबहूनामित्युक्तवत् परिगणनाऽपेक्षयाऽपान्तरालभेदापेक्षया च, दीर्घः क्रियाकालोऽन्तर्मुहूर्तादिप्रमाणो यदि दृश्यते कुलाले व्याप्रियमाणे सति तन्ननु 'किंत्थ कुंभस्स'त्ति किमत्र घटस्यायातं येनोच्यते 'दीसति दीहो ये'त्येवमादि, तस्य विवक्षितक्रियाकालान्त्यक्षणमात्रोत्पत्तित्वादिति गाथार्थः ॥४२०॥ अतः–'अन्नारंभे' इत्यादि। अथवा यदुक्तं–'नारंभ' इति, अत्राह–अन्यारम्भेऽन्यद् घटलक्षणं वस्तु कथं दृश्यते?, नैव, किं कारणं?–तस्य ततोऽन्यत्वात्, पटारम्भे घटवत्, तथा च शिवकादयः, आदिशब्दात् मृत्संहरणस्यासकादयः परिगृह्यन्ते, न घटोऽभिधीयते, अतः कथं दृश्यतां 'सः' घटः 'तदद्धायां' शिवकाद्युत्पत्तिक्षणेष्विति गाथार्थः ॥४२१॥ एवं च कृत्वा, अथवा यदुक्तं 'दीसइ तदंते'त्ति तदङ्गीकृत्याह–'अंतिचिये'त्यादि। पूर्वा-

र्दमनयुद्धार्थे, यद्यदन्त आरभ्यते तत्तदन्त एवोपलभ्यते, यथा मृत्पिण्डाद्यन्ते कुशूलः, मृत्पिण्डाद्यन्ते चायमारभ्यते इति तदन्त एवोपलब्धिर्न्याय्येति, एवं च क्रियमाण एव कृतः क्रियमाणसमयस्य निरंशात्, अन्यथा 'अकयं वे' त्यादि, अकयं 'संपत्ति'त्ति यदि सम्प्रति समये न कृतं ततः 'गते' धृत्ते क्रियाकाले कथं क्रियतां ?, कथं वा एष्ये ?, तयोर्विनष्टानुत्पन्नत्वेनासत्त्वात्, तथाहि—वस्तु क्रियाविरामे वा क्रियेत तत्क्रियानुत्पत्तौ वा ?, क्रियानुत्पत्तौ चेन्न क्रियते कथं क्रियाविरामेऽपि क्रियेत ?, क्रियानुत्पत्तितद्विरामकालयोरर्थतोऽभिन्नत्वात्, अथवा क्रियाविरामे चेत् क्रियते स प्रागप्यासीदिति कस्मात्तदैव न कृतमिति गाथार्थः ॥४२२॥ तत्रैतत्स्यात्—सम्प्रतिसमयः–क्रियमाणकालोऽनन्तरस्तु कृतकालः, न च क्रियमाणमस्ति अवस्तुत्वात्, अतः खल्वकृतं क्रियत इति, अत्रेदमसि प्रष्टव्यः—तदन्ते हि कार्यं क्रियया वा क्रियेताक्रियया वा ?, क्रियया चेत् कथमसावन्यत्रान्यत्र च कृतं ?, नहि खदिरविषयस्य छेदनस्य पलाशे च्छिदुपजायते इति भावः, अपिच–एवं क्रियोपरमे कृतमिति कृत्वा क्रियाकालः कार्यस्य प्रत्युत विघ्नहेतुः स्यात्, ततश्च कारणमेवाकारणमिति विरोधः, अक्रियया चेत् सर्वकृतप्रसङ्गः, क्रियाविधानानर्थक्यात्, ततश्च तूष्णीमासीनस्य मोक्ष इति किं स्वाध्यायादिक्रियाभिरिति। अपिच–यदुक्तं–'नारंभेच्चिय दीसइ'त्ति,तत्र ननु यदारभ्यते तद् दृश्यत एव, यद्येवं किं न मयाऽपि दृश्यते ?, उच्यते, यतः—'पत्ती' त्यादि । प्रतिसमयभवनशीलाः कार्यकोटयः, कोटीग्रहणमसंख्येयोपलक्षणार्थं, तासु निरपेक्ष इति समासः, ननु घटे गतोऽभिलापो यस्य स घटगताभिलापो घटार्थीभूत इत्यभिप्रायः असि त्वं अतः प्रतिसमयभाविकार्यकालमसम्बद्धं स्थूरमतित्वात् घटे लगयसि, नायाप्युत्पद्यते इत्यभिप्रायात्, यदुत्पद्यते तस्यानवबोधात् ,अतो जातं जायत इति प्रक्रम इति गाथार्थः ॥४२३॥ अत्र व्यवहार आह—'को' इत्यादि । यदि सत् जायते ततः कश्चरमसमयनियमो येन प्रथमसमय एव न दृश्यते, विवक्षितकार्यमिति,

निश्चय आह- नाकारणं कार्यं प्रसूयते सदा सदसत्त्वप्रसङ्गात्, ततः किमित्यत आह–तच्चास्यान्त्य एव समये भवति, नाद्यादिष्वस्तीति गाथार्थः ॥ ४२४ ॥ अपिच–क्रियाकालनिष्ठाकालभेदवादिन् !—'उप्पायेऽवी'त्यादि, उत्पादेऽपि न ज्ञानं–मतिज्ञानं यदि ततोऽसौ कस्योत्पादो भवतु ?, किं खरविषाणस्य ?, ज्ञानोत्पादसमये वा यज्ज्ञानं, क्रियाकाल एव यदि वस्तु न निष्ठितमित्यर्थः, 'तो' ततः कस्मिन् समये ज्ञानमस्तु ?, अनुत्पादसमय इति चेत्, स प्रागप्यभूदित्युक्तं,अतः कृतं क्रियत इति गाथार्थः ॥ ४२५ ॥ यच्चाप्यथापि 'इय ण सवणादी'त्येवमादि, तदधिकृत्याह—'को चे'त्यादि, को वा श्रवणादिकाल उत्पादो विशिष्टो यस्मिन् भवेत् 'से' तस्य श्रोतुर्ज्ञानं मतिज्ञानं येनायमुपालम्भः स्यात् ?, 'इय' इत्येवमादि, यत्सूक्तं–युक्तं 'तदन्तंमि'त्ति तत्साध्वेव, यतो ज्ञानं च निष्ठा च–तदुत्पादश्च–क्रिया च एते द्वे अपि चरमसमये भवतो "भूतिर्येषां क्रिया सैवे"ति वचनात्, एतदुक्तं भवति–क्रियाकालनिष्ठाकालयोरभेदात् उत्पादकाल एव ज्ञानं, न श्रवणादिकाले,नापि तद्विरमे, इति केनोच्यते—'जातं न जायते भावतो कयघडोव्व',व्यवहारेण चेत् सोऽयं प्रतिपदं दूषित इति गाथार्थः ॥ ४२६ ॥ अथानुक्तं भाषकद्वारमाह—

भासासलद्धिओ लभइ भासमाणो अभासमाणो वा । पुव्वपडिवन्नओ वा उभयंपि अलद्धिए नत्थि ॥४२७॥

'भासा' इत्यादि, भाषालब्धिमान् लभते, भवत्यपि प्रतिपद्यमानक इत्यर्थः, कस्यामवस्थायामित्याह—भाषयन् अभाषयन् वा, तथा पूर्वप्रतिपन्नको वा भवेत् नियमेन, अलब्धिके तूभयमपि नास्ति, तस्य पृथिव्यादित्वादिति गाथार्थः ॥४२७॥ कृता भाष्यकृताऽपि सत्पदप्ररूपणतेति ॥ द्रव्यप्रमाणमिदानीम्—

किमिहाभिणिबोहियनाणिजीवदव्वप्पमाणमिगसमए। पडिवज्जेज्जंतु नवा पडिवज्ज जहन्नओ एगो ॥४२८॥

खेत्तपलिओवमासंखभाग उक्कोसओ पवज्जेज्जा । पुव्वपवन्ना दोसुवि पलियासंखेज्जईभागो ॥४२९॥
खेत्तं हवेज्ज चोदसभागा सत्तोवरिं अहे पंच । इलिआगईऍ विग्गहगयस्स गमणेऽहवाऽऽगमणे ॥४३०॥
आगमणंपि निसिद्धं चरिमाओ एइ जं तिरिक्खेसु । सुरनारगा य सम्मद्दिट्ठी जं यंति मणुएसु ॥४३१॥
अवगाहणाइरित्तंपि फुसइ याहिं जहाऽणुणोऽभिहियं। एगपएसं खेत्तं सत्तपएसा य से फुसणा ॥४३२॥
अहवा जत्थोगाढो तं खेत्तं विग्गहे मया फुसणा। खेत्तं च देहमेत्तं संचरओ होइ से फुसणा ॥४३३॥
होंति असंखेज्जगुणा नाणाजीवाण खेत्तफुसणाओ । एगस्स अणेगाण व उवओगंतोमुहुत्ताओ ॥४३४॥
लद्धीवि जहन्नेणं एगस्सेवं परा इमा होइ । अह सागरोवमाइं छावट्ठिं सातिरेगाइं ॥४३५॥
दो वारे विजयाईसु गयस्स तिन्नऽच्चुए अहव ताइं । अइरेगं नरभवियं नाणाजीवाण सव्वद्धं ॥४३६॥
एगस्स जहन्नेणं अन्तरमन्तोमुहुत्तमुक्कोसं । पोग्गलपरिअट्टद्धं देसूणं दोसबहुलस्स ॥४३७॥
जमसुन्नं तेहिं तओ नाणाजीवाणमन्तरं नत्थि । मइनाणी सेसाणं जीवाणमणंतभागम्मि ॥४३८॥
भावे खओवसमिए मइनाणं नत्थि सेसभावेसु। थोवा मइनाणविऊ सेसा जीवा अणंतगुणा ॥४३९॥
नेहऽत्थओ विसेसो भागऽप्पबहूण तेण तस्सेव। पडिवज्जमाणपडिवन्नगाणमप्पाबहुं जुत्तं ॥४४०॥
थोवा पवज्जमाणा असंखगुणिया पवन्नय जहण्णा । उक्कोसए पवन्ना होंति विसेसाहिया तत्तो ॥४४१॥
अहवा मइनाणीणं सेसयनाणीहिं नाणरहिएहिं। कज्जं सहोभएहि य अहवा गयाइभेएणं ॥४४२॥

'किमिहे' त्यादि, किमिहाभिनिबोधिकज्ञानपरिणामापन्नानामात्मद्रव्याणां परिमाणमेकैकस्मिन् समये ?, उच्यते–प्रतिपद्येरन्न वा, प्रतिपत्तौ तु जघन्येनैक इति गाथार्थः ॥ ४२८ ॥ उत्कृष्टत आह–'खेत्ते'त्यादि, पुव्वद्धं कण्ठयं, पूर्वप्रतिपन्नकानाह–पूर्वप्रतिपन्नकास्तु द्वयोरपि–जघन्योत्कृष्टपदयोः पल्योपमासंख्येयभाग इति गाथार्थः ॥ ४२९ ॥ दारं ॥ 'खेत्त'मित्यादि, मतिज्ञानं कियति क्षेत्रे भवेद् ?, ऊर्ध्वमिलिकागत्या गच्छतः सर्वार्थसिद्धिं,ततो वा प्रत्यागच्छतो मतिज्ञानिनः चतुर्दशभागाः सप्त, अधः पञ्च षष्ठ्यां गच्छतो वा प्रत्यागच्छत इति गाथार्थः ॥४३०॥ न चाधोऽपि सप्त सम्भवन्ति, यतः—'आगमण' मित्यादि, अपिशब्दाद् गमनमपि, शेषं स्पष्टम् । नवरं'मणुएसु न,तिरिएसु' इत्यभिप्रायः । दारं ॥४३१॥ 'अवगाहणे'त्यादि,अथवे'त्यादि, गाथाद्वयं स्पष्टं ॥ ४३२–४३३॥ नानाजीवानङ्गीकृत्याह—'होंती' त्यादि, पुव्वद्धं, दारं ॥ 'एगस्से' त्यादि, एकस्य मतिज्ञानिनोऽनेकेषां चोपयोगोऽविच्युत्याऽन्तर्मुहूर्त्तं एवेति गाथार्थः ॥ ४३४ ॥ लब्धिमङ्गीकृत्याह—लब्धिरपि जघन्येन एकस्येति–एकजीवापेक्षया एवमेवेत्यन्तर्मुहूर्त्तमेव, अथ परा त्वेकस्य जीवस्य लब्धिरियं 'अहे'त्यादि सोपार्द्धा गाथा स्पष्टा ॥ ४३६ ॥ दारं ॥ 'एगस्से' त्यादि, सकृन्मतिज्ञानमवाप्य त्यक्त्वा च पुनरन्तर्मुहूर्त्तादासादयेद्, उत्कृष्टतस्त्वन्तरमुपार्द्धपुद्गलपरावर्त्तो मनाग्न्यूनः, तथाशातनादिप्रचुरतयाऽपुण्यभाजः कस्यचिदिति गाथार्थः ॥ ४३७ ॥ एवमेकस्य, नानाजीवांस्त्वङ्गीकृत्याह—'ज'मित्यादि पूर्वार्द्धं स्पष्टम् । दारं ॥ 'मती'त्याद्यपि पश्चार्द्धम् । दारं ॥ ॥ ४३८ ॥ 'भावे' इत्यादि, पूर्वार्द्धं कंठं । दारं ॥ 'थोवा' इत्यादि, इह स्तोका मतिज्ञानिनः सकलजीवानामनन्तभागपठितत्वात्, आह च–सेसा जीवा तेभ्यः अनन्तगुणा इति गाथार्थः ॥ ४३९ ॥ एतच्च केषांचिन्मतमेव, यत आह—'नेह' इत्यादि, नेहार्थतो भेदो लक्ष्यते भागाल्पबहुत्वद्वारयोः, अतः स्थितपक्षमाह–तेनास्यैव–मतिज्ञानस्य अल्पबहुत्वं युक्तं अपौनरुक्त्यात्, केषामित्याह–

प्रतिपद्यमानकप्रतिपन्नापेक्षयेत्यर्थः । इति गाथार्थः ॥ ४४० ॥ तथाहि—'थोवा' इत्यादि, मतेः सम्प्रति समये प्रतिपद्यमानाः स्तोकाः 'जहन्नेणं एक्को वा दोण्णि वा तिण्णि वा उक्कोसेणं असंखेज्जाइं'ति सामर्थ्यगम्यं, पुनरेभ्यो जघन्यपदवर्त्तिनो ये पूर्वप्रतिपन्नास्तेऽसंख्येयगुणिताः बहुत्वात्, पुनरेभ्योऽपि च उक्कोसपदवत्तिणो पुव्वपडिवन्नया विसेसाहियत्ति गाथार्थः ॥ ४४१ ॥ 'अहवे'त्यादि, अथवेति स्थितपक्षान्तरप्रदर्शनार्थः, 'मइनाणीणं सेसयनाणीहिं सह कज्जं अप्पाबहुयं', किं ज्ञानसहितैः?, नेत्याह—'नाणरहिएहिं' तत्रापि स एवार्थ इति भावना, अथवा 'नाणरहिएहिं सह मइनाणीणं कज्जं अप्पाबहुयं' अथ 'उभयेहि य'त्ति समुच्चयविकल्पः, अथवेति—अथवा गत्यादिभेदेन यथासम्भवं, तत्र स्तोका मतिमन्तो नरा इत्येवमादि स्वधिया भावनीयमिति गाथार्थः ॥ ४४२ ॥ एवम्—

लक्खणविहाणविसयाणुओगदारेहिं वण्णिया बुद्धी । तयणंतरमुद्दिट्ठं सुयनाणमओ परूविस्सं ॥४४३॥

'लक्खणे'त्यादि, लक्षणं—अभिनिबुध्यत इत्येवमादि विधानं—अवग्रहादि विषयो—द्रव्यादि अनुयोगद्वाराणि—सत्पदादीनीति, शेषं स्पष्टमिति ॥ समाप्तं मतिज्ञानम् । एतदनन्तरमुद्दिष्टं श्रुतं तत्प्ररूपयिष्य इति गाथार्थः ॥ ४४३ ॥ तच्चानेकप्रकृतिस्वभावं, ताश्चैताः—

पत्तेयमक्खराइं अक्खरसंजोग जत्तिया लोए । एवइया सुयनाणे पयडीओ होंति नायव्वा ॥४४४॥ (नि० १७)

संजुत्तासंजुत्ताण ताणमेकक्खराइसंजोगा । होंति अणंता तत्थवि एक्केक्कोऽणंतपज्जाओ ॥४४५॥

संखिज्जक्खरजोगा होंति अणंता कहं ? जमभिधेयं । पंचत्थिकायगोयरमन्नोऽन्नविलक्खणमणंतं ॥४४६॥

अणुओ पएसवुड्ढीए भिन्नरूवाइं धुवमणंताइं । जं कमसो दव्वाइं (इह) हवंति भिन्नाभिहाणाइं ॥४४७॥

तेणाभिहाणमाणं अभिधेयाणंतपज्जवसमाणं । जं च सुयम्मिवि भणियं अणंतगमपज्जयं सुत्तं ॥४४८॥

'पत्तेय'मित्यादि, एकमेकं प्रति प्रत्येकं अक्षराणि-अकारादीन्यनेकभेदभाञ्जि, एतदुक्तं भवति-एकोऽकारोऽष्टादशविधस्तद्यथा-ह्रस्वो दीर्घः प्लुतः, एकैक उदात्तानुदात्तस्वरितभेदः,पुनरेकैकः सानुनासिकनिरनुनासिकभेदाद् द्वेधेति, त्रयः षट्का अष्टादश, एवमिकारादयोऽपि सम्भवतः, तथाऽक्षराणां संयोगाः २, संयोगा द्व्यादिसम्बन्धाः, 'यावन्तो' यावत्प्रमाणा लोके, बादमयवार्त्तायामित्यर्थः, एतावत्यः काः ?,'एतावत्यः' एतावत्प्रमाणाः 'प्रकृतयः' अंशाः 'श्रुतज्ञाने' श्रुतज्ञानविषया भवन्ति ज्ञातव्याः एतत्स्वरूपं बुभुत्सुभिरिति गाथोघार्थः ॥ ४४४ ॥ भाष्यकृदाह—'संजुत्ते'त्यादि, 'ताणं'ति अकारादीनामक्षराणां, किंविशिष्टानामित्याह-संयुक्तानां-अन्यसम्पृक्तानामसंयुक्तानां-अन्यासम्बद्धानां च,किमत आह-'भवन्ति' सम्पद्यन्ते 'अनन्ताः' अपर्यन्ताः,के ?, इत्याह-'एकाक्षरादिसंयोगाः' एकाक्षरसंयोग आदिर्येषां तेऽमी एकाक्षरादिसंयोगाः, तत्र संयुक्तैकाक्षरसंयोगाः प्यू (श्री) असंयुक्तैकाक्षरसंयोगस्तु घटः,द्विकसंयोगस्तु प्यू (भत्तं) घटकः इत्येवमादि, एतेषां चानन्त्यमभिधेयस्यानन्तत्वादिति गर्भार्थः, किं निष्पर्यायाः ?, नेत्याह-यतोऽप्येकैको द्विकादिसंयोगोऽनन्तपर्यायः-अनन्तधर्मस्वभावः, घटकारसंयोगस्यान्येनान्येन स्वभावेन परमाणुतद्रूनत्रैलोक्याभ्यां व्यतिरिच्यमानत्वात्, इत्थं चैतद्,अन्यथा तयोरैक्यापत्तिः स्याद्, एकैकेन स्वभावेन व्यावर्त्तमानत्वादेकात्मन इव, एवं संघाटाकारादिसंयोगा अपि वाच्या इति गाथार्थः ॥ ४४५ ॥ सामान्यश्रुतिमङ्गीकृत्याह—'संखेज्ज'इत्यादि, ननु च संख्येया अक्षरसंयोगा भवन्ति संख्येयत्वादक्षराणामतोऽनन्ताः कथम् ?, उच्यते, यद्-यस्मादभिधेयं-अक्षरसंयोगवाच्यं पञ्चास्तिकायगोचरं, पञ्चास्तिकायप्रमाणमित्युक्तं भवति, किंविशिष्टं तदित्याह-अन्योऽन्यविलक्षणं, किं संख्येयादिगुणोपेतं ?, नेत्याह-अनन्तं, एतदुक्तं भवति-संख्येयत्वे सत्यप्यक्षराणामभिधेयस्यादानन्त्यं लभ्यते, तेषां तथा तथा संयोगे तत्तद्भणनेन संयोगविच्छेदात्, वाच्यभेदाद् वचनभेदो, वचनं संयोगाः, नर्मदाचारिपूर इति

यथेति गाथार्थः ॥ ४४६ ॥ एतदेव भावयन्नाह—'अणिच'त्यादि, 'अणुतः' परमाणोरारभ्य 'प्रदेशवृद्ध्या' द्व्यादिलक्षणया 'भिन्नरूपाणि' भिन्नव्यक्तिकानि 'ध्रुवं' निश्चितं 'अनन्तानि' अपर्यन्तानि 'यद्' यस्मात् 'क्रमशः' परिपाट्या द्रव्याणि भवन्ति, किंविशिष्टानीत्याह–भिन्नाभिधानानि, परस्थानस्य स्थानापेक्षयेति शेषः, परस्थानमङ्गीकृत्य परमाणुद्व्यणुकादिव्यपदेशभाञ्जि भवन्ति, स्वस्थानं त्वङ्गीकृत्याणुः परमाणुः एकांशोऽभेदो निर्भेद इतियावत्, न चैतान्येकार्थिकान्येव, समभिरूढाभिप्रायेणापि वस्त्वभ्युपगमात् ॥४४७॥ येनैवं तेन किमित्यत आह—'तेने'त्यादि, तेनाकारादिसंयोगोपसंख्यानमभिधेयगतानन्तपरमाण्वादिपर्यायितुल्यं, यच्च सूत्रेऽप्युक्तमनन्तगमपर्यायं सूत्रं–'अणंता गमा अणंता पज्जवा' इति वचनात्, तस्मात् सुष्ठूच्यते–'संजुत्तासंजुत्ताण'मित्येवमादि ॥ ४४८ ॥ यत एवमेताः सामान्यप्रकृतयोऽनन्ता अतः—

कत्तो मे वण्णेउं सत्ती सुयनाणसव्वपयडीओ ? । चोद्दसविहनिक्खेवं सुयनाणे आवि वोच्छामि ॥४४९॥(नि.१८)

पयडित्ति जो तदंसो हेऊ वा तस्स तस्सभावो वा । ते याणंता सव्वे तओ न तीरंति वोत्तुं जे ॥४५०॥
जायंतो वयणपहा सुयाणुसारेण केइ लब्भंति । ते सव्वे सुयनाणं ते याणंता मइविसेसा ॥ ४५१ ॥
उक्कोससुयन्नाणीवि जाणमाणोऽवि तेऽभिलप्पेऽवि । न तरइ सव्वे वोत्तुं न पहुप्पइ जेण कालो से ॥४५२॥
नाणम्मि सुए चोद्दसविहं चसद्देण तह य अन्नाणे । अविसद्देणुभयम्मिवि किंचि जहासंभवं वोच्छं ॥४५३॥
अक्खर सण्णी सम्मं साइयं खलु सपज्जवसियं च । गमियं अंगपविट्ठं सत्तवि एए सपडिवक्खा ॥४५४॥(नि०१९)

'कत्तो मे'इत्यादि, कुतो मम वर्णयितुं शक्तिः श्रुतज्ञानस्य सर्वाः प्रकृतीः ?, तासां बहुत्वात्, उक्तं च–"जे अक्खराणुसारेण मतिविसेसा तयं सुयं सव्वं । तेऽवि य मतीविसेसे सुयणाणब्भंन्तरे जाण ॥१॥ उक्कोसयपुव्वधरोवि भणति णहु ते तु सोऽभिलप्पेऽवि । कमवत्तिणी य वाया कालो य पडुप्पएण य से ॥२॥" यतश्चैवमतः चतुर्दशविधनिक्षेपं 'श्रुतज्ञाने' श्रुतज्ञानविषयं, चशब्दात् श्रुताज्ञानविषयं च, अपिशब्दादुभयविषयं च, तत्र श्रुतज्ञाने–सम्यक्श्रुते, श्रुताज्ञाने–असंज्ञिमिथ्याश्रुते उभयश्रुते–दर्शनपरिग्रहविशेषादक्षरानक्षरश्रुते चेति 'वक्ष्ये' अभिधास्ये इति गाथार्थः ॥ ४४९ ॥ 'पयडि' गाहाव्याख्या–प्रकृतिरिति प्रत्रालापकः, किमुक्तं भवति ?–यः 'तदंशः' तदंशः सा प्रकृतिरुच्यते, अथवा तस्य–श्रुतस्य यो हेतुः–बाह्यः आलोकादिरान्तरो वा क्षयोपशमादिः सोऽयं 'तत्स्वभावो वा' श्रुतस्वभावो वा ध्वनितालक्षणः, सैषा, ते च तदंशाः अनन्ताः, अतः सर्वे न शक्यन्ते वक्तुं, परिमितत्वादायुष इत्येवमादीति गाथार्थः ॥ ४५० ॥ तथा च–'जावन्तो' इत्यादि, यावन्तो वचनपथाः श्रुतानुसारेण केचन लभ्यन्ते ते सर्वे श्रुतमित्येतदावेदितं माङ् मतिश्रुतभेद इति, ते च श्रुतमतिपर्यायाः ॥ ४५१ ॥ इत्यतः–'उक्कोस' इत्यादि, क्षुण्णार्थो ॥ ४५२ ॥ एवमवस्थिते व्याख्यानस्य प्रस्तुतत्वात् किञ्चिन्निक्षेपमाह–'नाणंमी'त्यादि, व्याख्यातार्थे ॥ ४५३–४५४ ॥ 'अक्खरे'त्यादि, द्वाराणि चतुर्दशेति आद्यद्वारं व्याचिख्यासुराह–

न क्खरइ अणुवओगेऽवि अक्खरं सो य चेयणाभावो । अविसुद्धनयाण मयं सुद्धनयाणऽक्खरं चेव ॥४५५॥
उवओगेऽवि य नाणं सुद्धा इच्छंति जं न तव्विरहे । उप्पायभंगुरा वा जं तेसिं सव्वपज्जाया ॥४५६॥
अभिलप्पावि य अत्था सव्वे दव्वट्ठियाए जं निचा । पज्जायेणानिचा तेणक्खर अक्खरा चेव ॥४५७॥

एवं सव्वं चिय नाणमक्खरं जमविसेसियं सुत्ते । अविसुद्धनयमएणं को सुयनाणे पइविसेसो ? ॥४५८॥
जइवि हु सव्वं चिय नाणमक्खरं तहवि रूढिओ वण्णो । भण्णइ अक्खरमिहरा न खरइ सव्वं सभावाओ ॥
वण्णिज्जइ जेणऽत्थो चित्तं वण्णेण वाऽहवा दव्वं । वण्णिज्जइ वाइज्जइ भण्णइ तेणऽक्खरं वण्णो ॥
अत्थस्सरणेण सरा वंजणमवि वंजणेण अत्थस्स । अत्थे य खरइ न य जेण खिज्जई अक्खरं तेण ॥४६१॥
सुद्धावि सरंति सयं सारेंति य वंजणाइं जं तेणं । होंति सरा न कयाइवि तेहिं विणा वंजणं सरइ ॥४६२॥
वंजिज्जइ जेणऽत्थो घडो व्व दीवेण वंजणं तो तं । अत्थं पायेण सरा वंजंति न केवला जेणं ॥४६३॥

'न क्खरती'त्यादि । 'क्षर सञ्चलने' क्षरतीति क्षरं तस्य नञा प्रतिषेधेऽक्षरं, अनुपयोगेऽपि न क्षरतीति भावार्थः, तस्य सततमवस्थितत्वात्, स च कः ? इत्यत आह—स चाक्षरपरिणामः, चेतनाभावः—चेतनासत्ता, केषां नयानां मतेनेत्याह—'अविशुद्धनयमतेन' नैगमसंग्रहव्यवहाराभिप्रायेण द्रव्यार्थिकमूलप्रकृतित्वात्, शुद्धनयानां तु—ऋजुसूत्रादीनां क्षरमेवेति गाथार्थः ॥४६५॥ कुत एतदित्याह—'उवओग'इत्यादि । यद्—यस्मात् शुद्धनया उपयोग एव सति ज्ञानमिच्छन्ति, नोपयोगविरहे, घटादेरपि तत्प्रसङ्गात्, 'वा' इत्यथवा येषां सर्वे एव भावा उत्पादभङ्गुरा वर्तन्त इति गाथार्थः॥४५६॥ एवं तावदभिलापहेतोर्विज्ञानस्याक्षरताऽनक्षरता चोक्ता, इदानीमभिलाप्यार्थानामप्येनामाह—'अभी'त्यादि । सम्बन्धोक्तार्था, नवरमपिशब्दादितरे चेति ॥४५७॥ इदानीमक्षरश्रुताधिकारादिह वर्णोऽप्यक्षरमभिधीयते अर्थविज्ञानवदिति ज्ञापनार्थं चोद्यं कारयति—'एव'मित्येवमादि । एवं 'अविसुद्धनयमएणं' इत्यत्र सम्बन्धः अत्र चान्यर्थसंज्ञाप्रधाननयमतेनेति द्रष्टव्यं, किं ?—सर्वमेव ज्ञानं मत्याद्यक्षरं वर्तते, इतश्च 'ज'मिति यद्—यस्माद्विशेषितं सूत्रे उक्तं

'सव्वजीवाणंपि य णं अक्खरस्स अणंतभागो निच्चुग्घाडियओ'त्ति, भावार्थं प्रकटयन्नाह, अतः-को सुयणाणे भावसुयलक्खणेऽर्थे वा विसेसो येनोच्यते-ण क्खरइ अणुवयोगेवि अक्खरं सो य चेयणाभावोत्ति, गाथार्थः ॥४५८॥ उच्यते-'जती'त्यादि। यद्यप्यविशुद्धनयमतेन सर्वमेव ज्ञानमक्षरमर्थश्च, तथापि रूढितः-एकद्रव्योपदेशिन्या संज्ञया वर्ण एवाक्षरं भण्यते, श्रुतरूपत्वात्, पङ्कजवत्, इतरथा त्वर्थमधिकृत्य सर्वं स्वतत्त्वान्न क्षरतीत्यक्षरमिति किमनेनेति गाथार्थः ॥४५९॥ अथास्य श्रुतरूपस्य वर्णस्य निर्भेदमाह-'वण्णी' त्यादि। 'वण्यते' प्रकाश्यते 'येन' करणभूतेनार्थः-अभिधेयः, केन किंवदित्याह-वर्णेनेव चित्रं-ऋषभस्वामिचरितादि राजपट्टकादिना स वर्णः 'अहवा' इत्यथवा 'द्रव्यं' गोद्रव्यादि यथा शुक्लादिना गुणेन वर्ण्यते-दृश्यते एवं येन गुणकल्पेन अर्थः गोद्रव्यादिकल्पो दृश्यते स वर्णः, अथवा दव्वं वण्णिज्जइ जेण तेण सो वन्नो भन्नइ, स चाक्षरमिति गाथार्थः ॥४६०॥ स चोक्तशब्दार्थो वर्णो द्वेधा-स्वरतो व्यञ्जनतश्चेति, अतः स्वरतस्तावदाह-'अक्खरे' त्यादि। इहाक्षरशब्देन व्यञ्जनान्याहुः, 'स्वृ शब्दोपतापयोः' ततश्चाक्षरस्वरणात् स्वराः, व्यञ्जनसंशब्दनादित्यर्थः, एतदुक्तं भवति-व्यञ्जनमौखर्यप्रयोजककर्तृत्वप्रतिपत्तेर्वर्णः स्वरोऽभिधीयते, वक्ष्यति चानन्तरगाथया, तथा व्यनक्तीति व्यञ्जनं, तद् व्यञ्जनमप्यभिधीयते 'व्यञ्जनेन' प्रकटीकरणेन, कस्येत्याह-'अर्थस्य' बाह्यस्य मोक्षादेः, एतदुक्तं भवति-अर्थव्यञ्जनाद्वर्णो व्यञ्जनमप्यभिधीयते, वक्ष्यते च द्वितीयगाथया। अथ सामान्याक्षरस्य निरुक्तमाह-अर्थान् क्षरत्यक्षरं स्वय च न क्षरतीत्यक्षरं ओघ इति गाथार्थः ॥४६१॥ 'सुद्धावी' त्याद्युक्तसम्बन्धा, 'ज'मिति येन कारणेन 'स्वयं' आत्मना साक्षात्कारेण शुद्धा अपि-केवला अव्यञ्जना अपीतियावत्, स्वरन्ति-शब्दयन्ति, बाह्यं वस्त्विति वाक्यशेषः, तद्यथा-'आ ई ऊ' इत्येवमादि 'क कि कु' तथा येन च कारणेन व्यञ्जनानि स्वरन्ति सन्ति स्वरध्वं स्वरध्वमिति भाणयन्ति तेन स्वरा भवन्ति,तथा च न कदाच-

नापि तैर्विना व्यञ्जनं 'स्वरति' शब्दयति, निरर्थकत्वात्,अथवा चैतन्याख्याक्षरस्वरणात् स्वराः, तथाहि–भणनादन्तर्विज्ञानाभिव्यक्तिरिति गाथार्थः ॥४६२॥ 'वंजिज्जती'त्यादि, व्यज्यते येनार्थो मोक्षादिः प्रदीपेनेव घट इति तेन तद् व्यञ्जनमुच्यते, अपिच 'अर्थं' विशिष्टं 'प्रायशो' बाहुल्यतः स्वराः केवला न व्यञ्जयन्ति येन, तथाहि–नापनीतव्यञ्जनमुपनीतस्वरं च वाक्यं विवक्षितार्थप्रत्यायनायालं इश्यते, तद्यथा–'सम्यग्दर्शनज्ञानचारित्राणी'ति अअअअअआअआइआइ, प्रायोग्रहणं स्वराणां केवलानां स्वात्ममात्राभिधानानुमतिप्रदर्शनार्थं, ततश्चाक्षरं वर्णः स्वरो व्यञ्जनमिति पर्यायाः इति गाथार्थः ॥४६३॥ साम्प्रतं भेदतो व्याख्यामाह–

तं सण्णावंजणलद्धिसण्णियं तिविहमक्खरं तत्थ । सुबहुलिविभेयनिययं सण्णऽक्खरमक्खरागारो ॥४६४॥
वंजिज्जइ जेणऽत्थो घडोव्व दीवेण वंजणं तो तं । भण्णइ भासिज्जंतं सव्वमकाराइ तक्कालं ॥४६५॥
जो अक्खरोवलंभो सा लद्धी तं च होइ विण्णाणं । इंदियमणोनिमित्तं जो यावरणक्खओवसमो ॥४६६॥
दव्वसुयं सण्णावंजणक्खरं भावसुत्तमियरं तु । मइसुयविसेसणम्मिवि मोत्तूणं दव्वसुत्तंति ॥४६७॥
दव्वसुयं सण्णक्खरमक्खरलंभोत्ति भावसुयमुत्तं । सोओवलद्धिवयणेण वंजणं भावसुत्तं च ॥ ४६८ ॥

'तं सन्ने'त्यादि । तद्–अक्षरं त्रिविधं–संज्ञाव्यञ्जनलब्धिभेदात्, तत्र संज्ञाक्षरं सुबहुभेदलिपिनियतत्वाच्चित्रं, स चाक्षराकारो यथा अर्द्धचन्द्राकृतिए(–)कार इत्येवमादीति गाथार्थः ॥४६४॥ दारं ॥ व्यञ्जनाक्षरं त्वकारादि हकारान्तं भाष्यमाणं सदुच्यत इत्याह 'वंजी' त्यादि गतार्था ॥४६५॥ दारं ॥ 'जो' इत्यादि । योऽक्षरलाभस्तल्लब्ध्यक्षरं, तच्चेन्द्रियमनोनिमित्तं विज्ञानं श्रुतग्रन्थानुसारि प्रवृत्तिशीलं, उपयोग इत्यर्थः, तथा यश्च तदावरणक्षयोपमशमो, लब्धिरित्यर्थः, तल्लब्ध्यक्षरमेवमेतत्त्रितयमिति गाथार्थः ॥४६६॥

दारं ॥ 'दव्व' मित्यादि । इह संज्ञाव्यञ्जनाक्षरे द्रव्यश्रुतं इतरत्तु लब्ध्यक्षररूपं भावश्रुतं, एवं च स्थिते पौर्वापर्यं घटयन्नाह—मति-श्रुतभेदेऽपि यदुक्तं 'मुक्त्वा द्रव्यश्रुत'मिति तत्र 'दव्वे'त्यादि,संज्ञाक्षरं द्रव्यश्रुतं कारणत्वात् ,अतः 'अक्खरलंभो य'त्ति यदुक्तं तद्भावश्रुतं विज्ञानमयत्वात्, श्रोत्रेन्द्रियोपलब्धिवचनेनोभयसमासभाजा, 'वंजण'त्ति व्यञ्जनाक्षरं भावश्रुतं चोक्तमिति गाथार्थः ॥ ४६७–६८॥ एतच्च कथं लभ्यते इति ?, उच्यते—

पच्चक्खमिंदियमणेहिं लब्भइ लिंगेण चऽक्खरं कोइ । लिंगमणुमाणमण्णे सारिक्खाई पभासंति ॥४६९॥

सारिक्ख-विवक्खो-भय-मुवमाऽऽगममेव सव्वमणुमाणं । किंचिम्मत्तविसेसेण वा न तं पंचहा ठाइ ॥४७०॥

भायअहिअस्सतरा गविआ दट्‌ठूण भायचिंति नउला । मायपिऊणं सरणं गवयस्स य सुत्तओ सग्गो (ताले)

इंदियमणोनिमित्तंपि नाणुमाणाहिँ भिज्जए किन्तु । नाविक्खइ लिंगंतरमिह पच्चक्खोवयारो त्थ ॥४७२॥

जइ ते अनिययमाणं अणुमाणं तिविहमणुवलद्धीए । अच्चंत१ सरिस२ विच्चुय३ खपुप्फ१ कणमास२ पम्हुट्ठे३(ताले)

नापुणरुत्ता न समत्तलिङ्गसंगाहिया न य गुणा य । नियमियपरिमाणाए किंच विसेसोवलद्धीए ? ॥४७४॥

नाहिगयाऽणुवलद्धी न वा विवक्खोत्ति वा तओ सव्वा । सक्खाइग्गहणेण वा न उ जुत्तो तिविहनियमो से ॥

जेणतिदूरसमीवाणुवलद्धी लक्खणस्स हीणत्ता । सुहुमाभिभवणवट्ठाणसमाणहारादणुवलद्धी ॥४७६॥ (ताले)

'पच्चक्ख'मित्यादि । तच्च लब्ध्यक्षरं कश्चित्प्रमाता प्रत्यक्षं लभते, एतदुक्तं भवति—तच्च कस्यचिदिन्द्रियमनोभ्यां प्रत्यक्षरूपतया चोत्पद्यते, 'लिंगेण च'त्ति अनुमानज्ञानतया चेत्यर्थः, लिंगं किमित्यत आह—'लिंगमणुमाणं'ति लिङ्गं ह्यनुमानमुच्यते,

धूमेऽ(मा)ग्निज्ञानोपचारात्,प्रत्यक्षहेतौ घटे प्रत्यक्षोपचारवत्,एषः सामान्यः स्थितपक्षः ॥४६९॥ परमतमाशिशङ्कयिषुराह–अन्ये सूरयः सादृश्यादि प्रभापन्ते इत्यनुमानम्, तद्यथा—'सारिक्खे' त्यादि । 'सारिक्खं'ति सादृश्यानुमानमप्रत्यक्षेऽपि भ्रातुर्ज्ञानं स्मृतिरूपत्वात्, विपक्षानुमानमहेर्नकुलज्ञानमेवमादि, उभय इत्यश्वतरात् खराश्वयोरित्येवमादि, उपमानं गोर्गवय इत्येवमादि, आगमात् स्वर्गादावित्युच्यते, एवं सर्वमेतदनुमानं नोपन्यस्तानुमानाद् व्यतिरिच्यते, सम्बन्धादन्यतः प्रतिपत्तेः, न चेत् सम्बन्धादन्यतः प्रतिपत्तिर्द्वितीयस्तर्हि दोष इति, किञ्चिद्भेदेनास्यास्माद् भिन्नत्वाददोष इति चेत्, आह–किञ्चिद्भेदेन च भिद्यमानं न तत् पञ्चधा स्थास्यतीति गाथार्थः ॥४७०–७१॥ अपिच–'इंदिए'त्यादि, इन्द्रियमनोनिमित्तमपि लब्ध्यक्षरं नानुमानाद् भिद्यते, आस्तां सादृश्यादीति, यद्येवं प्रत्यक्षव्यपदेशः कथमित्युपचाराद्, आह च—किंत्विन्द्रियमनसोरन्यल्लिङ्गान्तरं नापेक्षत इति प्रत्यक्षोपचारः केवलं, न तत् साक्षादुत्पत्तेरिति गाथार्थः ॥ ४७२–७३ ॥ अपिच–इयमनुमानस्य विशिष्टिशेषोपलब्धिः—'नापुण' इत्यादि । नापुनरुक्ता, सादृश्योपमानयोर्मिथोऽभेदात् सर्वत्र सादृश्याविशेषाच्च, तथा न समस्तलिङ्गविशेषोपसंग्राहिणी, न चेयं गुणाय, अतः किमनया नियमितपञ्चविधप्रमाणयेत्थं विशेषोपलब्ध्या परिकल्पितया ?, कस्यचिदर्थस्यासिद्धेरेकमेनास्तु तदिति गाथार्थः ॥४७४॥ या चेयं क्वचिद् त्रिविधानुपलब्धिः परिकल्प्यते, तद्यथा—अत्यन्तानुपलब्धिः खरविषाणादेरिव,तथा सामान्यानुपलब्धिः–महामापराशिप्रक्षिप्तमापकणादेरिव, तथा विस्मृत्यनुपलब्धिरयमसान्नित्यनुपस्थानमस्मरणतः, इयम्—'नाहिगते'त्यादि, इयमनुपलब्धिर्लब्ध्यक्षराधिकारे 'नाधिकृता' न प्रस्तुता, किं तर्हि ?—उक्तद्वयमेवाधिकृतं, अथ मनुषे विपक्ष इतिकृत्वा मता, उपलब्धेरन्या अनुपलब्धिरिति व्युत्पत्तेः, दूषणमाह—ततः सर्वानुपलब्धिर्वाच्या भवता, अतिसंनिकृष्टाविप्रकृष्टभेदभिन्नत्वात्तस्याः, यद्वा आदिग्रहणेन वाच्या, न पुनर्युक्त

एवं त्रिविधनियमः–त्रिपरिगणनमस्या अनुपलब्धेस्तस्मादेतदप्यचारु।

इत्यक्षरस्य तत्त्वभेदपर्यायैर्व्याख्या समाप्ता।

अक्खरलंभो सण्णीण होज्ज पुरिसाइवण्णविण्णाणं। कत्तो अस्सण्णीणं? भणियं च सुयम्मि तेसिंपि ॥४७७॥

जह चेयण्णमकित्तिममस्सण्णीणं तहोहनाणंपि। थोवत्ति नोवलब्भइ जीवत्तमिविंदियाईणं ॥ ४७८ ॥

जह वा सण्णीणमणक्खराण असइ नरवण्णविण्णाणे। लद्धक्खरंति भण्णइ किंपित्ति तहा असण्णीणं ॥४७९॥

साम्प्रतमक्षरश्रुताधिकारादेव यदुक्तम्–'अक्खरलद्धीयस्स लद्धिअक्खरं समुप्पज्जइ'त्ति तदधिकृत्य चोदकद्वारेणोपतिष्ठते–'अक्खर'इत्यादि, ननु चाक्षरलाभः संज्ञिनां पर्याप्तकानां भवेत्, काम, यः किंविशिष्टः? इत्याह–यः पुरुषादीनां वर्णविज्ञानोपयोग इत्यर्थः, आदिशब्दात् रूपादिग्रहणं, केषां तु न भवतीत्याह–कुतोऽसंज्ञिनां–एकेन्द्रियादीनां?, तेषाममनस्कत्वात्, परोपदेशजत्वाचास्य, ततः किमित्यत आह–भणितं च श्रुते तेषामप्यसंज्ञिनां लब्ध्यक्षराविर्भवनमिति गम्यते, 'फासिंदियक्खरं रसणिंदियक्खरं घाणिंदियक्खरं सोतिंदियक्खरं चे'ति वचनात्, कथं तदिति गाथार्थः ॥ ४७७ ॥ अत्र दृष्टान्तद्वारेणोत्तरमाह––'जहे'त्यादि, यथैकेन्द्रियाद्यसंज्ञिनां 'चैतन्यं' चिच्छक्तिः 'अकृत्रिमं' सांसिद्धिकमविशिष्टं श्रद्धीयते 'तह'त्ति तथाऽसंज्ञिनामूहाज्ञानमप्यविशिष्टतरं लब्ध्यक्षररूपं कस्मात् सदपि न श्रद्धीयते इति?, यद्येवं कस्मान्नोपलभ्यते? इत्यत आह–'थोवं'ति अणीय इतिकृत्वा, विशिष्टेन रूपेणेति शेषः, किंवदित्याह–जीवत्वमिव, केषामित्याह–'इंदियादीणं' एकेन्द्रियादीनां, आदिपदलोपादिति गाथार्थः ॥ ४७८ ॥ दृष्टान्तान्तरमाह––'जह वे'त्यादि, यथा वा संज्ञिनामेवाक्षरानभिज्ञानां गोपालादीनां असति नरवर्णविषये विज्ञाने लब्ध्यक्षरमिति भण्यते,कुतः?,

एकेन्द्रियादीनां लब्ध्यक्षरासिद्धिः ॥१७७॥

तद्वर्णश्रवणतस्तद्दर्शनतो वा गौरप्याकारिता सती स्वनाम जानीते सबलाऽहं बहुला चेयमित्यभिप्रायः, दार्ष्टान्तिकमाह–'किंपि'त्ति किंचिच्च यावच्च 'तथा' तेन प्रकारेण 'असंज्ञिनां' एकेन्द्रियादीनां पृथिव्यादीनां लब्ध्यक्षरमस्तीति बोद्धव्यं, संज्ञाव्यञ्जनाक्षरयोस्त्विहाप्रस्तावः परोपदेशजत्वादिति, लब्ध्यक्षरं त्वस्ति अस्येन्द्रियक्षयोपशमरूपत्वादस्य च सकलसंसारिप्राणिसाधारणत्वाद् अल्पबहुत्वे विचारात्, तदेवं सर्वेषां लब्धिरस्तीति गाथार्थः ॥ ४७९ ॥ तदेतदपि परिशोध्येदानीमेकैकमक्षरमनुग्रहार्थं यथावत्कथयन्नाह––

एक्केक्कमक्खरं पुण सपरपज्जायभेयओ भिन्नं । तं सव्वदव्वपज्जायरासिमाणं मुणेयव्वं ॥ ४८० ॥
जे लभइ केवलो से सवन्नसहिओ व पज्जवेऽयारो । ते तस्स सपज्जाया सेसा परपज्जया सव्वे ॥ ४८१॥
जइ ते परपज्जाया न तस्स, अह तस्स न परपज्जाया । जं तम्मि असंबद्धा तो परपज्जायववएसो ॥४८२॥
चायसपज्जायविसेसणाइणा तस्स जमुवउज्जंति । सधणमिवासंबद्धं भवन्ति तो पज्जवा तस्स ॥४८३॥
सधणमसंबद्धंपि हु चेयण्णंपिव नरे जहा तस्स । उवउज्जइत्ति सधणं भण्णइ तह तस्स पज्जाया ॥४८४॥
जह दंसणनाणचरित्तगोयरा सव्वदव्वपज्जाया । सद्धेयनेयकिरियाफलोवओगित्ति भिन्नावि ॥४८५॥
जइणो सपज्जया इव सकज्जनिप्फायगत्ति सधणं व । आयाणचायफला तह सव्वेसिंपि वण्णाणं ॥४८६॥
एगं जाणं सव्वं जाणइ सव्वं च जाणमेगंति । इय सव्वमजाणंतो नागारं सव्वहा मुणइ ॥ ४८७ ॥
जेसु अनाएसु तओ न नज्जए नज्जए य नाएसु । किह तस्स ते न धम्मा ? घडस्स रूवाइधम्मव्व ? ॥४८८॥
नहि नवरमक्खरं सव्वदव्वपज्जायमाणमण्णंपि । जं वत्थुमत्थि लोए तं सव्वं सव्वपज्जायं ॥ ४८९ ॥

स्वपरपर्यायाः

इहऽक्खराहिगारो पण्णवणिज्जा य जेण तव्विसओ । ते चिंतिज्जंतेवं कइभागो सव्वभावाण ? ॥४९०॥
पण्णवणिज्जा भावा वण्णाण सपज्जया तओ थोवा । सेसा परपज्जाया तोऽणन्तगुणा निरभिलप्पा ॥४९१॥
णणु सव्वागासपएसपज्जाया वण्णमाणमाइट्ठं । इह सव्वदव्वपज्जायमाणगहणं किमत्थंति ? ॥ ४९२ ॥
थोवंति न निद्दिट्ठा इहरा धम्मत्थियाइपज्जाया । के सपरपज्जयाणं हवंतु किं होतु वाऽभावो ? ॥४९३॥
किमणंतगुणा भणिया ? जमगुरुलहुपज्जया पएसम्मि । एक्केक्कंमि अणंता पण्णत्ता वीयरागेहिं ॥४९४॥
तत्थाविसेसियं नाणमक्खरं इह सुयक्खरं पगयं । तं किह केवलपज्जायमाणतुल्लं हविज्जाहि ? ॥ ४९५ ॥
सयपज्जवेहिं तं केवलेण तुल्लं न होज्ज न परेहिं । सपरपज्जाएहिं उ तुल्लं तं केवलेणेव ॥ ४९६ ॥
अविसेसकेवलं पुण सयपज्जाएहिं चेव तत्तुल्लं । जं नेयं पइ तं सव्वभावव्वावारविणिउत्तं ॥ ४९७ ॥

'एक्केक्के' त्यादि, इह पुनस्तदेकैकमक्षरमकारादि संज्ञाभिलाप्यविज्ञानात्मकमिति भावना,स्वपर्यायभेदभिन्नं परपर्यायभेदभिन्नं च सत् किंप्रमाणं ज्ञातव्यमित्यत आह—सर्वाणि यानि द्रव्याणि–धर्मास्तिकायादीनि तत्पर्यायतुल्यत्वेन सर्वात्मकमिति गाथार्थः ॥ ४८० ॥ के पुनस्ते ? इत्यत आह—'जे लभती'त्यादि, 'यान्' सानुनासिकादीन् सम्बद्धान् 'लभते' प्राप्नोति 'केवलः' असंयुक्तः 'अकारः' अकाराख्यो वर्णः, तथा शेषवर्णसहितो वा–अन्यवर्णसंयोगद्वारेण ते सम्बद्धास्तस्याकारस्य स्वपर्याया उच्यन्ते, अस्तित्वसम्बन्धात् ,ते चानन्ताः, कथं ?, अभिलाप्यबाह्यनिमित्तभेदात् तस्य च परमाणुद्व्यणुकादिभेदेनानन्तत्वात्,ध्वनेश्च तथा तथाऽभिधायकत्वपरिणामे सति तदर्थप्रतिपादकत्वात्, संकेतस्य च शब्दार्थानादिमत्सम्बन्धतो युज्यमानत्वादिति, 'सेसा' इति शेषास्त्व-

॥१७९॥

कारादिसम्बन्धिनो घटादिसम्बन्धिनो वा सर्वे परपर्यायाः नास्तित्वसम्बन्धाद्, एते चैतेभ्योऽसत्त्वादनन्तगुणा इति भावनीयम्, एवमाकारादयोऽपि भावनीया इति गाथार्थः ॥ ४८१ ॥ एवमुक्ते सत्याह— 'जती' त्यादि, यदि ते घटइकारादिधर्म्माः परपर्यायाः ततः परभूतत्वान्न तस्य ते, तत्स्वामिपर्यायिवत्, 'अह तस्स'त्ति अथ ते तस्य न तर्हि परपर्यायाः आत्मभूतत्वात् स्वपर्यायकलापवत्, ततश्च विरोधः?, तन्न, अभिप्रायापरिज्ञानात्, तथाहि—यत्—यस्मात्तस्मिन् अकारे असम्बद्धा—व्यावृत्तेन रूपेण वृत्तास्ते घटादिस्वपर्यायास्ततः कारणात् परपर्यायव्यपदेशस्तेषामिति, निमित्तभेदेन तदतद्व्यपदेशः, अन्यथैकत्वं स्यात्, तथाहि—द्विविधाः पर्यायिणः पर्यायाश्रिन्त्यन्ते—सम्बद्धाश्चासम्बद्धाश्च, तत्र तावदकारे घटादिपर्यायास्तदस्तित्वपर्यायेणासम्बद्धाः नास्तित्वपर्यायेण तु सम्बद्धाः, एवं घटादावप्यकारपर्यायाः, इह चाकारे घटस्वपर्यायाणामस्तित्वपर्यायेणासम्बन्धाङ्गीकरणात् परपर्यायव्यपदेशः, अन्यथा ह्यकारपर्याया एव घटादिपर्याया इति, तत्रैतस्यात्—यत एवाकारे तेऽस्तित्वेनासम्बद्धाः नास्तित्वेन तु सम्बद्धाः अत एव ते तस्य न भवन्तीत्यभिदध्महे, 'जइ ते परपज्जाया ण तस्स'त्ति, अत्रोच्यते—यत एव तस्य ते न सन्तीति विशेष्य ब्रूमो, न तु सर्वथैव न सन्ति, तथात्वे खरविषाणप्रख्यत्वप्रसङ्गात्, अत एव ते तस्य परपर्याया एव स्युः, नचैतदेवमकारघटयोरेकत्वप्रसङ्गात्, अथवा यथैव हि ते तस्य न सन्तीति विशेष्य ब्रूमो—न सर्वथैव न सन्ति, स्वपक्षक्षतिप्रसङ्गात्, तथैव ह्यस्तित्वसम्बन्धमात्रं घटगतमङ्गीकृत्य तेऽस्य परपर्यायास्तस्येतिकृत्वा, नास्तित्वमात्रं त्वेतद्गतमङ्गीकृत्य स्वपर्याया एव तेऽस्येतिकृत्वा, अथवा यत एव तेऽस्येत्येत्वं षष्ठ्या ब्रूमो अत एव तेऽकारस्य पर्यायाः, विशेषणविशेष्यसम्बन्धात्, घटरूपादिवत्, एवमुक्ते पर आह—वयमपि विशेष्य ब्रूमो यथेह घटस्य रूपादयः षष्ठ्या प्रतीयन्ते तथा नैवमेते घटपर्यायाः, किं तर्हि ?, तेऽस्य न सन्तीत्येतावन्मात्रकं ब्रूमः, तथा च भवताऽपि नास्तित्वपर्यायोऽङ्गीकृत एव

अभावरूपाधीनत्वादपि वस्तुसत्तायाः, ततश्च नास्तित्वेन घटपर्यायसम्बन्धिना सहाकारस्य कः सम्बन्धः ?,तस्याभावत्वात् खरविषाणवदिति दृष्टान्तदार्ष्टान्तिकयोर्वैधुर्यम्, अत्रेदमेकमुत्तरं–यद्यकारस्य तदभावादसम्बन्धो न,यद्यकारस्य परभावाभावः पर्यायो न, हन्त ! तर्हि प्रतिषेधाभावे विधिप्राप्तितो भावसम्बन्धप्राप्त्या अकारघटयोरेकत्वप्रसंगः प्राप्तः, अथवा द्वितीयमुत्तरं–न वैधुर्यं प्रतिषेधस्य सद्विषयत्वात्, तथाहि–तेऽस्य न सन्तीति,किमुक्तं भवति ?,त एते स्वपर्यायत्वेन न सन्ति, तथा तेऽस्य सन्तीति,किमुक्तं भवति ?,तस्य घटस्य पर्यायत्वेन सन्ति, एवं घटस्यापि स्वपर्यायतया सन्ति परपर्यायतया न सन्तीति, किं चेह कस्य सर्वात्मना भवेत् ? नहि घटस्य रूपादयः सतत्त्वेनैव भवन्ति, पारिमाण्डल्यस्य गुणित्वात्, तेषां च गुणत्वात्, गुणगुणिनोश्च पृथग्व्यपदेशात्, अपिच–नास्तित्वपर्यायोऽपि न सर्वथैवाभावः, पर्यायान्तरेण व्यपदेशात् प्रागभाववत्, तथाहि–मृत्पिण्डशिवकस्थासकोशकुशूलादि मृत्पर्यायो भावः सन् घटाकारभावमात्रविशेषणात्, प्रागुत्पत्त्यभावो भण्यते, घटाकारोपरमविशेषणाद्वा कपालादिपर्यायः प्रध्वंसाभावः, एतदुक्तं भवति—पर्यायान्तरापन्नास्ते न सन्ति, न तु सर्वथैवाभावः, तस्यानभिलाप्यत्वात्, खरविषाणादयः खल्वभावत्वे सति कस्मादभिलप्यन्ते ? इति चेत्, उच्यते, तेऽपि च कृतसंकेतैर्विवक्षुभिरभिलाप्यार्थाभावप्रत्यायनार्थमपदिश्यन्ते, न तु तेषां सर्वथैवाभावः खरविषाणमिति शब्दमात्रसाक्षात्करणात्,अत एतावन्तमर्थं हृदि व्यवस्थाप्याह–'जं तम्मी'त्यादि गाथार्थः ॥४८२॥ प्रमाणमाह—'चाये'त्यादि, पुव्वद्धं, अस्याक्षरघटना–तस्स–अकारस्स जं–जम्हा ते 'उवउज्जंति' सरूपं पोषयन्ति, कथं ?, 'चायेण' तृतीयायाः प्रत्येकाभिसम्बन्धात्, तथा 'सपज्जायविसेसणेण य' आदिशब्दः स्वभेदप्रख्यापकः, प्रमाणद्वयं चैवं–परपर्याया अप्यकारस्य पर्यायाः, त्यागेन पुष्टिजननादात्मनो नेत्रादिरोगवत्, तदत्यागोपयोगे च स इति व्यपदेशायोगात्, तथा तेऽस्य परपर्याया अपि सन्तः सामान्यतः पर्यायाः,

स्वपर्यायविशेषणोपयोगात्,घटस्य रूपादय इव परस्परविशेषकाः,यथा हि घटस्य रूपाणूनां रसाद्यणुकलापः स्वत्वभावरूपतया विशेषकः पर्यायाश्च त ओघतः, एवमकारस्य स्वपर्यायाणां सकलत्रैलोक्यपर्यायराशय इति, एवमाकारानाकाराक्षरानक्षरश्रुतादिष्वपि वाच्यं इति गाथायाः प्रागर्द्धार्थः । यद्येवमसम्बद्धाः किमस्यामी भण्यन्ते ? इति, उच्यते, असंबद्धा अप्यस्यैते पर्याया इति प्रतिज्ञा, उपयुज्यमानत्वादिति हेतुः, साक्षाद् दृष्टान्तमाह—'सघणमिवासंबद्धं'ति प्रकटार्थं, अतो–'भवन्ती'त्यादि निगमनमिति गाथार्थः ॥ ४८३ ॥ अमुमेव भावयन्नाह—'सघण'मित्यादि, गतार्था, नवरं चैतन्यं व्यतिरेकेण वक्तव्यं, 'तह तस्स ते पज्जाया भवन्ति, उवउज्जंतित्ति काउं' इति ॥ ४८४ ॥ दृष्टान्तान्तरमेवाह—'जहे'त्यादि, 'जइणो'इत्यादि, यथेति प्रकारार्थः, यतेः–साधोर्व्यपदिश्यन्त इति वाक्यशेषः, के ? इत्याह—'सर्वद्रव्यपर्यायाः' सकलपदार्थस्वभावाः, कीदृक्षाः ? इत्यत आह—'भिन्नावि'त्ति अनात्मभूता अपि, किमित्यत आह—'दंसणनाणचरित्तगोयर'त्तिकाउं दर्शनादेर्गोचरीभवन्तो–विषयभावं लभन्त इति गाथार्थः ॥ ४८५ ॥ कस्मादिमेऽमीषां गोचरीभवन्तीत्यत आह—'सद्धेय'त्ति यस्मात् केचित्तत्र श्रद्धेयफलोपयोगिनो वर्त्तन्ते, यथा सन्ति पञ्चास्तिकाया विगतदोषेण भगवतोक्तत्वात्,तथा केचिज्ज्ञेयफलोपयोगिनो यथैकैकोऽसंख्येयप्रदेशात्मकः सम्भवतः,तथा केचित् क्रियाफलोपयोगिनो यथा 'वट्टं समचउरंस'मित्येवमादि, कुत इत्यत आह—'स्वकार्यनिष्पादकत्वात्' मोक्षप्रसाधकत्वात्, किंवदित्याह—'सपज्जया इव'त्ति ज्ञानादिपर्याया इव, अयमत्र सारः–श्रद्धेयादिपरपर्यायानन्तरेण श्रद्धानाद्यभावः, विषयाभावाद्विषयिणोऽप्यभावः, परपर्यायानन्तरेण स्वपर्यायाभाव इत्युक्तं भवति, स्वधनमिवेति च भिन्नो दृष्टान्तः, दार्ष्टान्तिकमाह—'आदाणे'त्यादि, सुगममिति गाथार्थः ॥ ४८६ ॥ न चेयं स्वमनीषिका, आर्षोक्तत्वात्, अत आह—'एक्क'मित्यादि, एकं वस्तु जानन् स्वपरपर्यायानुवेधेन सर्वं वस्तु जा-

नाति, सर्वपरिज्ञानभावभावित्वादेकज्ञानस्य, सर्वं च जानन्नेकं, एकपरिज्ञाननान्तरीयकत्वात् सर्वज्ञानस्येति, एवं सर्वमजानन् नाकारं
सर्वथा 'मुणइ' जानातीति गाथार्थः ॥ ४८७ ॥ तथा चाह—'जेसु' इत्यादि, येषु परपर्यायेष्वज्ञातेष्वकारो न ज्ञायते, अतादृशत्वा-
त्, कथं ते-परपर्याया न तस्य-अकारस्य धर्माः ?, किन्तु धर्मा एव, स्वस्थीभूयाक्षिणी निमील्य चिन्तयैतत् किमेवमुत नेति,
प्रयोगश्च-अकारस्य सकलं त्रैलोक्यं पर्यायः, तज्ज्ञाने तज्ज्ञानात्तदज्ञाने चाज्ञानात्, सर्वरूपाद्यात्मघटवत्, तथा चाह—'घडस्स
रूयादिधम्मव्व'त्ति गाथार्थः ॥ ४८८ ॥ अक्षरमेव ह्येवंविधमित्याशङ्कायामिदमाह—'ण ही'त्यादि, न केवलमक्षरमेव सकलध-
र्म्माधर्म्माकाशजीवपुद्गलास्तिकायपर्यायराशिप्रमाणं, किन्तु ? यत्सत्, तदेवं-'जो एगं जाणती'त्यस्य सूत्रस्य सामान्यप्रवृत्तेरिति गा-
थार्थः ॥ ४८९ ॥ यद्येवं किमक्षरमेवाङ्गीकृत्यायं प्रयास इत्याह—'इहे'त्यादि, 'इह' प्रक्रमेऽक्षराधिकारो यतः तथा 'प्रज्ञापनीया एव'
अभिलाप्या एव पर्यायाः येन 'तद्विषयः' अक्षरस्य सामान्यवर्णस्य विषयो वाच्यः, अतः 'ते' प्रज्ञापनीयाः पर्यायाः 'चिन्त्यन्ते'
मृग्यन्ते, एवं अकाराक्षरस्य सर्वपर्यायपरिमाणज्ञापनेन पृच्छति-यद्येवं कतिभागः 'सर्वभावानां' सर्वपर्यायाणां, अभिलाप्या इति शेषः
॥४९०॥ उच्यते—'पन्न'इत्यादि, 'वर्णानाम्' अक्षराणां 'प्रज्ञापनीया भावा' अभिलाप्या धर्माः 'स्वपर्याया' खल्वात्मपर्यायाः
यतस्ततः 'स्तोकाः' स्वल्पाः, यतश्च शेषाः परपर्यायास्ततोऽनन्तगुणाः, एतेभ्यो वर्णानामनभिलाप्याः पर्याया इति, एतदुक्तं भवति—
सर्वस्य सतो वस्तुनः स्वपर्यायाः स्तोकाः,परपर्यायास्त्वनन्ताः, अन्यत्राकाशात् ,तस्य हि सर्वतोऽनन्तत्वाद्विपर्यय इति गाथार्थः ॥४९१॥
एवं चर्चिते सत्याह परः—'णणु'इत्यादि, 'नन्वि'त्यसूयायां 'वन्नमाणमाइट्ठं'ति 'वर्णप्रमाणं' वर्णपर्यायप्रमाणमावेदितं, सूत्र इति
सामर्थ्याद् गम्यते, किं तदित्याह—'सर्वाकाशप्रदेशपर्यायाः' सकललोकालोकगताकाशप्रदेशपर्यायराशिप्रमाणमित्यर्थः, उक्तं च—

सव्वागासपएसग्गं सव्वागासपदेसेहीं'त्येवमादि, अत एवं स्थिते 'इह' श्रुताधिकारे 'सव्वदव्वपज्जायमाणग्गहणं' किमर्थं, वर्णस्येति ग-म्यते, येनोच्यते न हि नवरमक्षरं सव्वदव्वेत्येवमादि, एतदुक्तं भवति-न सूत्रे एवं पठ्यते "सव्वदव्वपएसग्ग"मिति गाथार्थः ॥ ४९२ ॥ अत्रोत्तरमाह—'थोव'मित्यादि, इह सूत्रे चतुरस्तिकायपर्यायाः स्तोका इति 'न निर्दिष्टाः' न पठिताः साक्षात्, अर्थ-तस्तु निर्दिष्टा एव, "जे एगं जाणती"त्येवमादि, अत एव सूत्रप्रामाण्याद् इत्थं चैतदङ्गीकर्त्तव्यं, यदुत ते गृहीता इत्याह,इह चान्यथा-तदसंग्रहे धर्मास्तिकायादिस्वपर्यायाः स्वपरपर्यायाणां वर्णसम्बन्धिनां के भवन्तु ?, व्यतिरिक्ताः सन्त इति वाक्यशेषः, तथाहि—किं स्वपर्यायाः सन्तु वचनगोचरा इव, आहोस्वित्परपर्यायाः सन्त्वाकाशस्वपर्याया इव, वर्णपरपर्यायाः, पूर्वत्र श्रुतास्तिकायचतुष्टययोरेक-त्वप्रसंगः, इतरत्र तु स्पष्टं परपर्यायत्वं, एवमुक्ते आचार्ये एवाशिशङ्कयिषुराह—'किं होंतु वाऽभावो'त्ति किमभावमापद्यतां ?, पर आह—कामं, तत्र, तेषां सत्पर्यायत्वात्, तस्मात्परपर्यायकोटयामेवैतेषामवरोध इति गाथार्थः ॥ ४९३ ॥ अन्येन प्रकारेणाह— 'किमे'त्यादि, ननु च किमित्याकाशप्रदेशा अनन्तगुणिता भणिताः 'सव्वागासपदेसग्गं सव्वागासपदेसेहिं अणंतगुणियं'ति, उच्यते 'ज'मित्यादि प्रकटार्थम् ॥४९४॥ पुनरप्यपरया भङ्ग्या माह—'तत्थे'त्यादि, 'तत्रे'त्यधिकरणसप्तमी, ततश्च 'तत्थे'ति 'सव्वागासपदेसग्गं सव्वागासपदेसेहिं अणंतगुणियं पज्जवक्खरं निप्फज्जई'त्यस्मिन् सूत्रे 'नाणमक्खरं'ति ज्ञानमक्षरं प्रतिपादितं, किंविशिष्टमित्याह—'अ-विशेषितं' सामान्येन,अविशेषितत्वात्,तत् (०णाभिधानाच्चेदं)केवलाक्षरमिति गम्यते,ततः किमित्यत आह—'इह' द्वारे सुतक्खरं 'प्रकृतं' अ-धिकृतं ततोऽपि किमित्यत आह—'तं' सुयक्खरं 'कथं' केन प्रकारेण केवलाक्षरपर्यायतुल्यं भवेत् ?,उच्यते,नन्वत्रापि 'सव्वागास'मित्यादि-सूत्रे अपर्यवसितश्रुताधिकारादकारादेव गम्यत इति स्थितपक्षः । अथ सूत्रे 'सव्वजीवाणंपि य णं अक्खरस्स अणंतभागो निच्चुग्घाडि-

यओ" इत्यत्र सूत्रान्तरे सर्वजीवग्रहणात् तत् न श्रुताक्षरं, चतुर्दशपूर्वविदां सम्पूर्णत्वात्, तस्मात्केवलाक्षरमेतदिति, यद्येवं केवलस्यापि न सर्वजीवानामनन्तभागस्तिष्ठति सर्वज्ञसद्भावाद्, अतो न तत्केवलाक्षरमपीति कस्यासावनन्तभागोऽस्तु ?, अथ मनुषे अविशेषेण सर्वजीवग्रहणे सत्यपि प्रकरणादपिशब्दाद्वा केवलिनो विहायान्येषामनन्तभागो गम्यते, उच्यते, अत एव किन्न श्रुतात्मकमक्षरमङ्गीकृत्य समस्तद्वादशांगविदोऽपि विहायान्येषामसमद्विधानामनन्तभाग इति गम्यते ?, तस्मात्स्वपरपर्यायभेदादुभयमप्यविरुद्धमिति वक्ष्याम इति गाथार्थः ॥४९५॥ तदेवमर्थतः परिहृत्य कण्ठतः परिहरन्नाह—'सय' इत्यादि, 'तद्' वर्णाक्षरं 'स्वपर्यायैः' स्वपर्यायानङ्गीकृत्य केवलेन तुल्यं न भवेत्, काममेतत्, एतत्पर्यायाणां सर्वपर्यायरा(श्य)नन्तभागत्वात्, केवलस्य च सर्वद्रव्यपर्यायप्रमाणत्वात्, तथा 'न परैः' न परपर्यायराशिनेत्यर्थः तत् केवलेन तुल्यं भवेत्, तस्य सर्वपर्यायानन्तभागोनत्वात्, उभयमंगीकृत्याह—उभयथा तु तत्तुल्यं केवलज्ञानेनैव विशिष्टेनेति शेषः, विशिष्टं ह्युच्यते स्वपरपर्यायभेदोपकल्पितमिति गाथार्थः ॥४९६॥ एवं स्थिते सत्याह—'अंची' त्यादि। 'अविशेषकेवलं पुनः' अविशेषेण सर्वोपलब्धिकेवलं पुनः—अविवक्षितस्वपरपर्यायविकल्पं केवलं पुनः स्वपर्यायैरेव तत्तुल्यं 'सव्वागासपदेसग्ग'लक्षणाक्षरप्रमाणं वर्त्तते, अयमत्र भावार्थः—इह यद्येन ज्ञानेन ज्ञायते तत्तस्य पर्यायो भण्यते विषयविषयिणोरभेदोपचाराज्जीवदेहवत्, भेदविवक्षायां तु परपर्याया एव, तेनामुना प्रकारेणाद्यस्य ज्ञानचतुष्टयस्य स्वपर्यायाः सन्ति स्तोकाश्च, परपर्यायाः सन्ति भूयांसश्च, केवलं त्वविकल्पकं सर्वज्ञत्वात्, स्वपर्याया एवाविशिष्टस्येत्यर्थः। तथा चाह—यद्—यस्मात्पञ्चास्तिकायानंगीकृत्य 'तद्' अविशेषकेवलं 'सव्वभाव'त्ति सर्वात्मना 'व्यापारविनियुक्तं' व्यापारं व्यापृतमनुसमयमिति शेषः, न चैवं श्रुताक्षरमिति गाथार्थः ॥४९७॥ अन्यथा हि—

वत्थुसहावं पइ तंपि सपरपज्जायभेयओ भिन्नं । तं जेण जीवभावो भिन्ना य तओ घडाईया ॥४९८॥
अविसेसियंपि सुत्ते अक्खरपज्जायमाणमाइट्ठं । सुयकेवलक्खराणं एवं दोण्हंपि न विरुद्धं ॥४९९॥
तस्स उ अणंतभागो निच्चुग्घाडो य सव्वजीवाणं । भणियो सुयम्मि केवलिवज्जाणं तिविहभेओऽवि ॥५००॥
सो पुण सव्वजहन्नो चेयण्णं नावरिज्जइ कयाई । उक्कोसावरणम्मिवि जलयच्छन्नक्कभासो व्व ॥५०१॥
थीणद्धिसहियनाणावरणोदयओ स पत्थिवाईणं । बेइंदियाइयाणं परिवड्ढइ कमविसोहीए ॥५०२॥
उक्कोसो उक्कोसयसुयणाणविओ तओऽवसेसाणं । होइ विमज्झो मज्झे छट्ठाणगयाण पाएणं ॥५०३॥

'वत्थु'इत्यादि,अथवाऽधुना विशेषकेवलमङ्गीकृत्य विषयविभागमाह-वस्तुस्वभावं प्रति-आलम्ब्य पिण्डमाश्रित्य तदपि केवलं स्वपरपर्यायभेदाभ्यां भिन्नं वर्त्तते जीवस्वभावत्वात् वर्णवत् ,ते चास्य परपर्यायास्तुल्या इति जिनभटाचार्यपूज्याः, तथा चाह-तद्येन केवलं जीवस्वभावस्ततश्च तत्परिच्छेदाः स्वपर्यायास्तथा भिन्नाश्च ततः घटधर्माधर्माकाशादयस्ते च परपर्यायाः,अन्यथा सङ्करस्तदेकत्वं वा स्यादिति गाथार्थः ॥४९८॥ यदुक्तं वक्ष्याम इति तदभिधीयते—'अविसेसियंपी'त्यादि, एवं पदविशेषितं 'सूत्रे' 'सव्वागास'मित्यादौ यदक्षरपरिमाणमादिष्टं तद्विशिष्टकेवलश्रुताक्षरयोरविरुद्धं इति गाथार्थः ॥४९९॥ 'तस्स उ' इत्यादि, 'तस्ये'ति सामान्यस्य 'तिविहभेओऽवि'त्ति जघन्यमध्यमोत्कृष्ट इति गाथार्थः ॥५००॥ 'स' इत्यादि, स पुनः अक्षरलाभः सर्वस्तोकः 'चैतन्यं' जीवत्वनिबन्धनं नाव्रियते कदाचित् कस्यचिदिति गाथार्थः ॥५०१॥ स कस्य भवतीत्याह—'थी'त्यादि, स्त्यानर्द्धिवेदनीयोदयसहिताज्ञानदर्शनावरणोदयादुत्कृष्टात् पृथिव्यादीनां स भवति, ततोऽसौ 'वेइंदिये'त्यादि स्पष्टं ॥५०२॥ साम्प्रतमुत्कृष्टमाह—'उक्कोस'इत्यादि, उक्कोसो अक्खर-

लाभो समस्तचतुर्दशपूर्वविदः, विमध्यमसाह–'तओऽवसेसाणं मज्झे विमज्झो होइ' किंविशिष्टानामित्याह–'छट्ठाणगयाण' षट्स्थानपतितानां, तच्चेदम्–'अणंतभागहीणे वा असंखेज्जभागहीणे वा संखेज्जभागहीणे वा संखेज्जगुणहीणे वा असंखेज्जगुणहीणे वा अणंतगुणहीणे वा' 'प्रायेण' बाहुल्यमङ्गीकृत्य, विवक्षयाऽन्येषामपि तदुत्कृष्टसद्भावादित्युक्तमक्षरश्रुतम् ॥५०३॥ अनक्षरश्रुताभिधित्सया प्राह—

रूढीय तं सुयं सुव्वइत्ति चेट्ठा न सुव्वइ कयाइ। अहिगमया वण्णा इव जमणुस्साराइओ तेणं ॥५०४॥

ऊससियं नीससियं निच्छूढं खासिअं च छीयं च। निस्सिंघियमणुसारं अणक्खरं छेलियाई य॥५०५॥(नि०२०)

ऊससियाई दव्वसुयमेत्तमहवा सुओवउत्तस्स। सव्वो च्चिय वावारो सुयमिह तो किं न चेट्ठावि ? ॥५०६॥

'ऊसे'त्यादि,प्रतीतार्थैव॥५०४॥ भाष्यकृदाह–उच्छ्वसितादि द्रव्यश्रुतमात्रं कारणत्वाद्, अथ चैतत् श्रुतमेव,यतः श्रुतोपयुक्तस्य सर्व एव व्यापारः श्रुतमितीह पठितः,पर आह–यद्येवं 'तो किं न करादिचेट्ठावि' श्रुतं,श्रुतोपयोगाविशेषात् ? ॥५०५॥ उच्यते–'रूढी'त्यादि, रूढ्या 'तद्' उच्छ्वसितादि श्रुतमुच्यते, चेष्टा पुनर्न कदाचित् श्रूयते, दृश्यत्वेनाश्रव्यत्वात्, अनुस्वारादयस्तर्हि कस्मात् श्रुतमित्यत आह—वर्णा इवार्थाधिगमकत्वादनुस्वारादयोऽपि श्रुतं॥ उक्तमनक्षरश्रुतमिति गाथार्थः ॥५०६॥ संज्ञिश्रुताभिधित्सया व्युत्पत्तिं तावदाह—

सण्णिस्स सुयं जं तं सण्णिसुयं सो य जस्स सा सण्णा। होइ तिहा कालियहेउदिट्ठिवाओवएसेणं ॥५०७॥

जइ सण्णासंबंधेण सण्णिणो तेण सण्णिणो सव्वे। एगिंदियाइयाणवि जं सण्णा दसविहा भणिया ॥५०८॥

थोवा न सोहणाऽविय जं सा तो नादिकीरए इहइं । करिसावणेण धणवं न रूववं मुत्तिमेत्तेणं ||५०९||
जह बहुदव्वो धणवं पसत्थरूवो य रूववं होइ । महईए सोहणाए य तह सण्णी नाणसण्णाए ||५१०||
इह दीहकालिगी कालिगित्तिसण्णा जया सुदीहंपि । संभरइ भूयमिस्सं चिंतेइ य कह णु कायव्वं ? ||५११||
कालियसण्णित्ति तओ जस्स तई सो य जो मणोजोग्गे। खंधेऽणंते घेत्तुं मन्नइ तल्लद्धिसंपण्णो ||५१२||
रूवे जहोवलद्धी चक्खुमओ दंसिए पयासेणं । तह छव्विहोवओगो मणदव्वपयासिए अत्थे ||५१३||
अविसुद्धचक्खुणो जह नाइपयासम्मि रूवविण्णाणं। असण्णिणो तहऽत्थे थोवमणोदव्वलद्धिमओ ||५१४||
जह मुच्छियाइयाणं अव्वत्तं सव्वविसयविण्णाणं । एगिंदियाण एवं सुद्धयरं बेंदियाईणं ||५१५||
तुल्ले छेयगभावे जं सामत्थं तु चक्करयणस्स । तं तु जहक्कमहीणं न होइ सरपत्तमाईणं ||५१६||
इय मणोविसईणं जा पडुया होइ उग्गहाईसु । तुल्ले चेयणभावे अस्सण्णीणं न सा होइ ||५१७||
जे पुण संचिंतेउं इट्ठाणिट्ठेसु विसयवत्थूसुं । वट्टंति नियट्टंति य सदेहपरिपालणाहेउं ||५१८||
पाएण संपए च्चिय कालम्मि न याइदीहकालण्णा । ते हेउवायसण्णी निचेट्ठा होंति अस्सण्णी ||५१९||
सम्मद्दिट्ठी सण्णी संते नाणे खओवसमियम्मि । अस्सण्णी मिच्छत्तम्मि दिट्ठिवाओवएसेण ||५२०||
खयनाणी किं सण्णी न होइ होइ व खओवसमनाणी ?। सण्णा सरणमणागयचिंता य न सा जिणे जम्हा ।५२१।
मिच्छो हियाहियविभागनाणसण्णासमण्णिओ कोई । दीसइ सो किमसण्णी ? सण्णा जमसोहणा तस्स||५२२||

जह दुव्वयणमवयणं कुच्छियसीलं असीलमसईए। भण्णइ तह नाणंपिहु मिच्छद्दिट्ठिस्स अण्णाणं ॥५२३॥
सदसदविसेसणाओ भवहेउजदिच्छिओवलंभाओ। नाणफलाभावाओ मिच्छद्दिट्ठिस्स अण्णाणं ॥५२४॥
ओहो न हेउएँ हेउओ न कालम्मि भण्णई सण्णी। जह कुच्छियत्तणाओ तह कालो दिट्ठिवायम्मि ॥५२५॥
पंचण्हमूहसण्णा हेऊसण्णा विइंदियाईणं। सुरनारयगब्भुब्भवजीवाणं कालिगीसण्णा ॥५२६॥
छउमत्थाणं सण्णा सम्मदिट्ठीए होइ सुयनाणं। मइवावारविमुक्का सण्णाईआ उ केवलिणो ॥५२७॥
मोत्तूण हेउकालियसम्मत्तकमं जहुत्तरविसुद्धं। किं कालिओवएसो कीरइ आइएँ सुत्तम्मि ? ॥५२८॥
सण्णित्ति असण्णित्ति य सव्वसुए कालिओवएसेणं। पायं संववहारो कीरइ तेणाइए स कओ ॥५२९॥

'सण्णिस्से'त्यादि, संज्ञिनः श्रुतमिति संज्ञिश्रुतं,स च संज्ञी यस्यासौ संज्ञा भवति,सा च त्रिविधा–दीर्घशब्दलोपाद्दीर्घकालिक्यु-पदेशेन हेतुवादोपदेशेन दृष्टिवादोपदेशेन चेति समुदायगाथार्थः ॥५०७॥ अस्यां व्युत्पत्तावतिप्रसंगचोद्यमाह—'जती'त्यादि, यदि संज्ञासम्बन्धेन संज्ञिनो भवन्तीति ब्रूषे तेन सर्वे प्राणिनः संज्ञिन एव प्राप्ताः, एकेन्द्रियाणामपि प्रज्ञापनायां दशविधसंज्ञाभिधानाद्, 'आहारादि ४ क्रोधादि ४ ओहसन्ना लोगसण्णा' अतः किमुच्यते तेनैवार्यश्यामेन–"असण्णी णं भंते ! असण्णित्ति कालओ केवचिरं होइ ?"त्ति गाथार्थः ॥५०८॥ उच्यते—'थोवा'इत्यादि, 'इहे'त्यस्यां व्युत्पत्तौ, शेषं स्पष्टं, नहि कार्षापणमात्रधनवांस्तद्वानुच्यते, मूर्तिमान् वा रूपवानिति, अप्रसिद्धेः ॥५०९॥ किन्तु–'जहे'त्यादि, यथेह बहुद्रव्यो धनवानित्युच्यते,प्रशस्तमूर्त्तिसम्बन्धाच्च रूपवानिति,एवमिह महती शोभना च संज्ञाऽधिक्रियते संज्ञानं संज्ञा–मनोविज्ञानमित्यर्थः, तत्सम्बन्धात् संज्ञिन इति गाथार्थः ॥५१०॥ सा च कि-

विशिष्टेहाधिक्रियते ? इत्यत आह–'इह' गाहा ॥ इहादिपदलोपाद्दीर्घकालिकी कालिकीत्युच्यते,कालिकी चासौ संज्ञा च पुंवद्भावात् कालि-
कसंज्ञेति, यया सुदीर्घमपि कालमनुस्मरति भूतमेष्यन्तं चानुचिन्तयति कथं नु तत् कर्त्तव्यमिति गाथार्थः ॥५११॥ बहुव्रीहिणा मीलय-
न्नाह–'कालिये'त्यादि, स्पष्टार्था, नवरं 'तल्लद्धिसंपण्णो'त्ति मनोविज्ञानावरणक्षयोपशमादिसमेत इति ॥५१२॥ अस्य च–
'रूवे जहे'त्यादि, स्पष्टार्थैव ॥५१३॥ विपर्ययमधिकृत्याह 'अविसुद्धे'त्यादि, यथा काचकामलाद्युपहतलोचनस्य नातिप्रकाशे रूप-
विज्ञानमस्पष्टं भवति, एवमसंज्ञिनः पञ्चेन्द्रियसम्मूर्च्छनजस्यार्थविज्ञानं स्यात्, निकृष्टतरक्षयोपशमतयाऽत्यल्पमनोद्रव्यग्रहणशक्तित्वा-
दिति गाथार्थः ॥५१४॥ एकेन्द्रियादिसम्मूर्च्छनजानामाह–'जहे'त्यादि,यथेह मत्तसुप्तमूर्च्छितादीनां पुंसामव्यक्तं सकलशब्दादिविषय-
विज्ञानमनुभूयते एवमेकेन्द्रियाणां प्रकृष्टावरणोदयाद्, एवदेव द्वीन्द्रियादीनां, यदि नाम विशुद्धतरमिन्द्रियवृद्धिभाक्त्वात्, इदमत्र पौ-
र्वापर्य–एकेन्द्रियविकलेन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियाणां क्रमशुद्धमिति । तत्रैतत् स्याद्–चैतन्यतुल्यतायां कोऽयमुपलब्धिविशेष इति ?,
॥५१५॥ अत्रोच्यते–सामर्थ्यभेदाद्, स च क्षयोपशमानन्त्यात्, तथाहि–'सुद्ध'इत्यादि, स्पष्टार्था ॥५१६॥ 'इय' इत्यादि, दार्ष्टा-
न्तिकः प्रतीतार्थ एव ॥५१७॥ नवरं मनोविषयिणः–पट्पर्याप्तिभाजिनः । तदेवं कालिकोपदेशेन संज्ञिनं प्रपञ्च्य हेतुवादोपदेशेनाह–
'जं पुणे'त्यादि, ॥ 'पायेणे'त्यादि, "इट्ठानिट्ठाणि विसयवत्थुणि–छायातवादीणि । निच्चेट्ठा होंति असण्णी" एतदपेक्षया स्थावरा
इति गाथाद्वयार्थः ॥५१८–१९॥ 'सम्म'गाहा ॥ दृष्टिर्दर्शनं वदनं वादः, दर्शनवादमङ्गीकृत्य सम्यग्दृष्टिः,क इत्यत आह–संज्ञी, क्व
सतीत्याह–सति ज्ञाने–मतिश्रुतलक्षणे क्षायोपशमिके, एतद्विपर्ययमाह–'असण्णी'त्यादि, स्पष्टम् ॥५२०॥ एवमुक्ते प्रदेशान्तरोक्तं
स्मृत्वा आह–'खय'इत्यादि, पुव्वद्धं कण्ठ्यं, उत्तरमाह–संज्ञा हि नाम स्मरणमनागतादिचिन्तोच्यते सा 'जिने' भगवति केवलिनि

नास्तीति कथं तद्योगादसौ तद्वान् भवेदिति गाथार्थः ॥५२१॥ पुनरप्याह–'मिच्छो'इत्यादि, ननु च मिथ्यादृष्टिरपि कश्चिद्, हिताहितविभागविषयविज्ञानोपेतत्वात् कश्चित्संज्ञीति दृश्यते, स किमसंज्ञी ?, येनोच्यते 'सम्मद्दिट्ठी सण्णी' पादत्रयं, उच्यते, संज्ञा यत्तस्याशोभनेति गाथार्थः ॥५२२॥ अशोभनं चावस्त्वित्यत आह—'जहे'त्यादि, सुबोधार्था ॥५२३॥ अपिच—'सदसदे'त्यादि, प्राग्वत् ॥५२४॥ कथं चान्यस्थानमागन्यव्यपदेशार्हः स्यात् ?, कथमित्याह 'ऊहे'त्यादि, 'ऊह' इत्योघसंज्ञानानेकेन्द्रियः 'न हेतुते'त्ति न हेतुवादोपदेशेन, तथा 'हेउउ'त्ति हेतुरूपोपदेशसंज्ञ्यपि 'न कालंमि'त्ति न दीर्घकालिकोपदेशेन भण्यते संज्ञी–उच्यते संज्ञी 'यथा'येन प्रकारेणागम्यलक्षणेन, किं कारणमित्याह–'कुत्सितत्वाद्' अयोग्यत्वात्, तथा किमित्यत आह–'तथा' तेन प्रकारेण 'कालो'त्ति दीर्घकालिकोपदेशेन संज्ञी 'दिट्ठिवायम्मि'त्ति न दृष्टिवादोपदेशेन संज्ञीत्युच्यते, अतोऽसावज्ञानीति प्रक्रम इति गाथार्थः ॥५२५॥ केषां का संज्ञेति विशेषेणाह–'पञ्चण्हे'त्यादि, पञ्चानां–पृथिव्यादीनामोघसंज्ञा–अव्यक्तसंज्ञाऽव्यक्तचतुरिन्द्रियत्वात्, हेतुसंज्ञा तु द्वीन्द्रियादीनामासंमूर्च्छनजपञ्चेन्द्रियेभ्योऽमनस्कत्वात्, सुरादीनां तु कालिकी समनस्कत्वादिति गाथार्थः ॥५२६॥ इह च 'छउ'इत्यादि, सम्यग्दृष्टीनां छद्मस्थानां या संज्ञा दृष्टिवादोपदेशेनेत्यभिप्रायः सा तेषां श्रुतज्ञानं भवति, मतिव्यापारालिङ्गितत्वात्, केवलिनस्तु मतिव्यापारविरहात् संज्ञाऽतीता इति गाथार्थः ॥५२७॥ एवमुक्ते सत्याह—'मोत्तूणे'त्यादि, मुक्त्वा हेतुकालिकदृष्टिवादक्रमं यथोत्तरविशुद्धं 'किं' कस्मात् कालिकोपदेशः सूत्रे आदौ क्रियते ?, येन कारणेनोक्तं तदनुवृत्त्या 'होति तिहा कालियहेतुदिट्ठिवादोवदेसेणं ?' ति गाथार्थः ॥५२८॥ उच्यते–प्रयोजनवशात्, तथाहि—'सण्णी'त्यादि, सर्वत्र श्रुते संज्ञासंज्ञिवेलायां प्रायः कालिकोपदेशेन संव्यवहारः क्रियते, येन कारणेन तेन विशुद्धिक्रमं बाधित्वाऽपि स कालिकोपदेशेन संज्ञी कृतो धुरीति गाथार्थः ॥५२९॥ तदेवं सप्रतिपक्षमा-

यद्वारद्वयमभिधाय तृतीयमभिदधदाह—

अंगाणंगपविट्ठं सम्मसुयं लोइयं तु मिच्छसुयं । आसज्ज उ सामित्तं लोइयलोउत्तरे भयणा ॥५३०॥

सम्मत्तपरिग्गहियं सम्मसुयं, तं च पंचहा सम्मं । उवसमियं सासाणं खयसमजं वेययं खइयं ॥५३१॥

उवसामगसेढीगयस्स होइ उवसामियं तु सम्मत्तं । जो वा अकयतिपुंजो अखवियमिच्छो लहइ सम्मं ॥५३२॥

खीणम्मि उइण्णम्मि य अणुदिज्जंते य सेसमिच्छत्ते । अंतोमुहुत्तमेत्तं उवसमसम्मं लहइ जीवो ॥५३३॥

उवसमसम्मत्ताओ चयओ मिच्छं अपावमाणस्स । सासायणसम्मत्तं तयंतरालम्मि छावलियं ॥५३४॥

मिच्छत्तं जमुइण्णं तं खीणं अणुइयं च उवसंतं । मीसीभावपरिणयं वेइज्जंतं खओवसमं ॥५३५॥

वेययसम्मत्तं पुण सव्वोइयचरमपोग्गलावत्थं खीणे दंसणमोहे तिविहम्मिवि खाइयं होइ ॥ ५३६ ॥

चोद्दस दस य अभिन्ने नियमा सम्मत्त सेसए भयणा। मइओहिविवज्जासेऽवि होइ मिच्छं न उण सेसे ॥५३७॥

तत्तावगमसहावे सइ सम्मसुयाण को पइविसेसो ? । जह नाणदंसणाणं भेओ तुल्लेऽवबोहम्मि ॥५३८॥

नाणमवायधिईओ दंसणमिट्ठं जहोग्गहेहाओ । तह तत्तरुई सम्मं रोइज्जइ जेण तं नाणं ॥५३९॥

'अंगे' त्यादि । अङ्गानङ्गप्रविष्टं—आचारावश्यकादि सम्यक् श्रुतं,प्रकृत्येति वाक्यशेषः। प्रतिपक्षद्वारमाह—लौकिकं पुनर्भारतादि मिथ्याश्रुतं,प्रकृत्यैवेति शेषः,स्वाम्यपेक्षया तु प्राह—आश्रित्य तु 'स्वामित्वं' आधारलक्षणं लौकिके लोकोत्तरे च भजना—लौकिकं मिथ्याश्रुतं भवेदितरद्वा,एवं लोकोत्तरमपि,मिथ्यादृष्टिपरिग्रहात् मिथ्याश्रुतमित्येवमादि,परस्थानविनियोगाद् ॥५३०॥ आह च–'सम्मत्त'-

मित्यादि। इह भारताद्यपि सम्यक्त्वपरिगृहीतं सम्यक् श्रुतं भवति, इतरदपि मिथ्याश्रुतं मिथ्यात्वपरिग्रहादित्यनुक्तमपि सामर्थ्याद् गम्यते, तच्च सम्यक्त्वं पञ्चधा भणितं भगवद्भिस्तद्यथा—उपशमनमुपशमस्ततस्तेन वा निर्वृत्तमौपशमिकं १, तथा 'सासाणं'ति 'सासायणसंमत्तं' तत्र तत्त्वश्रद्धानरसास्वादनात् आस्वादनं मिथ्यादर्शनाभिमुख्यादाशातयतीति वेत्याशातनं, सह तेन साशातनस्तस्य सम्यक्त्वं साशातनसम्यक्त्वं, ईषत्तत्त्वरसास्वादनं वा आस्वादनं सह तेन सास्वादनं, आशातयतीति वेत्याशातनस्तेन सह यत्तत्साशातनं, सुमर्थसायां शोभनास्वादनः स्वास्वादनः, स्वाय(स्य)शातनः—स्वा(य)शातनस्तस्येति २ तथा क्षयश्चोपशमश्च क्षयोपशमौ ताभ्यां निर्वृत्तं क्षायोपशमिकं ३ तथा वेद्यत इति वेदकं ४ क्षयेण निर्वृत्तं क्षायिकं ५ ॥५३१॥ अयं तावत्पिण्डार्थः, अथावयवार्थं प्रतन्वन्नाह—'उवसामगे'त्यादि। उपशमयतीत्युपशमकस्तस्य श्रेणिः—अष्टाविंशतिविधमोहनीयराशियकलानामनुक्रमशमनं तां गतस्तस्य 'भवति' सम्पद्यते औपशमिकमेव सम्यक्त्वं दर्शनसप्तकोपशमात्, किमस्यैव?, नेत्याह—यो वा प्रतिपत्ता अकृतत्रिपुञ्जः—अनङ्गीकृतमिथ्यात्वेतरोभयत्रयविभागः सन् 'लभते' प्राप्नोति 'सम्मं' ति सम्यक्त्वं, तत्रैवं क्षायिकमपि लभते? इत्यत आह—'अक्षपितमिथ्यात्वः' अक्षपितमिथ्यादर्शनो यः, कथं पुनरसौ पुञ्जत्रयं करोतीति चेत्, उच्यते—इह कश्चित्प्रवाहतोऽनादिमिथ्यादृष्टिस्तथाविधधर्माचार्यसामग्रीसमवधाने सत्यपूर्वकरणेनाभिमुखीभवन् ततो मिथ्यात्वपुञ्जकान् मिश्रपुञ्जकं करोति, मदनकोद्रवपुञ्जकादिवार्धविशुद्धतरपुञ्जकं, ततोऽपि च सम्यक्त्वपुञ्जकमर्द्धविशुद्धकोद्रवपुञ्जकादिव सर्वोपधाविशुद्धतत्पुञ्जकं, ततस्तृतीयं सम्यक्त्वपुञ्जकं विशिष्टविपाकतो वेदयन् जन्तुः सम्यग्दर्शनी भण्यते, अयमत्र भावार्थः—'यथेह प्रदीपस्य, स्वच्छाभ्रपटलैर्गृहम्। न करोत्यावृतिं काञ्चिदेवमेतद् रवेरपि ॥१॥ एकपुञ्जी द्विपुंजी च, त्रिपुञ्जी वाऽननुक्रमात्। दर्शन्युभयवांश्चैव, मिथ्यादृष्टिश्च कीर्तितः ॥२॥ वेदयन् पुद्गलान् शुद्धान्, क्षयं नयति दर्शनी। तत्क्षये वेदकत्वेन, मिथ्या-

त्स्यैव वेदकः ॥२॥ यस्त्रिपुञ्जी स सम्यक्त्वमेव भुङ्क्ते विपाकतः। द्विपुञ्ज्यपि च मिथ्यात्वं, एकपुञ्ज्यपि चेतरत् ॥३॥" ॥५३२॥ प्रदेशानुभवस्तु अन्तर्मुहूर्तकालानुभवसाधारणः, अमुमेवार्थं स्पष्टयन्नाह—'खीणम्मी' त्यादि। इह 'उदीर्णे' उदयं प्राप्ते मिथ्यात्वे क्षीणे सति—आत्मप्रदेशविपाकवेदनया निरूपाख्यतामानीत एव सति, किं ?, उपशमसम्यक्त्वं लभते जीव इति क्रिया, किमेतावन्मात्रकेणैव गुणेन ?, नेत्याह—'अणुदिज्जंते य सेसमिच्छत्ते'त्ति तत्र उपयुक्तादन्यच्छेषमिति न्यायः, ततश्च शेषमिथ्यात्वे च मन्दपरिणामतया 'अनुदीर्यमाने' अनुदयभाजि सति विष्टम्भितोदय इतियावत्, कियन्तं कालं यावदित्याह—अन्तर्मुहूर्तमात्रं, अन्तर्मुहूर्त्तमेवान्तर्मुहूर्त्तमात्रं, तत ऊर्ध्वं भ्रश्यत्येव, यतश्चायमकृतत्रिपुञ्जी लभते अत इदं न पुद्गलानुभवरूपं, अध्यवसायमात्रमित्यर्थः, अत्र चोषरदेशदावानलदृष्टान्तो भावनीय इति गाथार्थः ॥५३३॥ सास्वादनमाह—'उवसमे' इत्यादि। अस्मादेव च्यवतो मिथ्यात्वं चाद्याप्यप्राप्नुवतोऽपान्तराले प्रोद्गतानन्तानुबन्धितः षडावलिकं कालं सास्वादनं, तदनेनैतत्कथयति—न तत्सत्तामात्रानुबन्धिनी मिथ्यात्वप्राप्तिरिति, एतदुक्तं भवति—अस्मादेव भ्रश्यन्तो द्वीन्द्रियादिषूत्पद्यन्ते, नान्यस्माद्, अन्यतो झटिति मिथ्यात्वप्राप्त्या षडावलिकाकालाभावात् इति गाथार्थः ॥५३४॥ क्षायोपशमिकमाह—'मिच्छत्त' मित्यादि। मिथ्यात्वं नाम मिथ्यात्वमोहनीयं कर्म तत् 'यदुदीर्णं' यदुद्भूतशक्तिकं, उदयावलिकायां व्यवस्थितमित्यर्थः 'तत्क्षीणं' तत्प्रलयमुपगतं, 'अनुदितं च' अनुदीर्णं च उपशान्तं, उपशान्तं नाम विष्टम्भितोदयमपनीतमिथ्यात्वस्वभावं, विष्टम्भितोदयं शेषमिथ्यात्वमपनीतमिथ्यात्वस्वभावं मदनकोद्रवोदाहरणत्रिपुञ्जन्यायशोधितं सम्यक्त्वमेव, आह—इह विष्टम्भितोदयस्य मिथ्यात्वस्यानुदीर्णता युक्ता, न पुनः सम्यक्त्वस्य, विपाकेन वेदनात्, उच्यते, सत्यमेवमेतत्, किन्तु अपनीतमिथ्यात्वस्वभावत्वात् स्वरूपेणानुदयात्तस्याप्यनुदीर्णोपचार इति, यद्वाऽनुदीर्णत्वं मिथ्यात्वस्यैव योज्यते, नतु सम्यक्त्वस्य, कथं मि-

थ्यात्वं ?, यदुदीर्णं तत्क्षीणं, शेषकं तु अनुदीर्णं उपशान्तं चेति चशब्दस्य व्यवहितः प्रयोगः, ततश्चानुदीर्णं मिथ्यात्वं उपशान्तं च सम्यक्त्वं, गृह्यते, भावार्थः प्राग्वत्, तदेवं 'मिश्रीभावपरिणतं' क्षयोपशमस्वभावमापन्नं 'वेद्यमानं' अनुभूयमानं मिथ्यात्वं प्रदेशानुभवेन सम्यक्त्वं विपाकेन, क्षयोपशमाभ्यां निर्वृत्तमितिकृत्वा क्षायोपशमिकं सम्यक्त्वमुच्यते । आह-इदं सम्यक्त्वमौदयिको भावो मोहनीयोदयभेदत्वादतोऽस्य न युक्तं क्षायोपशमिकत्वमिति, न, अभिप्रायापरिज्ञानात्, सम्यक्त्वं हि सांसिद्धिकमात्मपरिणामरूपं ज्ञानवत् नतु क्रोधादिवत्कर्माणुसम्पर्कजं, तथाहि-तावति मिथ्यात्वघनपटले क्षीणे तथाऽनुभवतोऽपि स्वच्छाभ्रकल्पान् सम्यक्त्वाणूँस्तथाविधसवितृप्रकाशवत् सहज एवासौ तत्परिणाम इति, क्षयोपशमनिष्पन्नश्चायं, तमन्तरेणाभावात्, न ह्युदीर्णक्षयानुदीर्णोपशमव्यतिरेकेणास्य भावः, क्रोधादिभावः पुनरुपधानसामर्थ्यापादितस्फटिकमणिकृष्णतावद् सहज इति, आह-यदि परिणामः सम्यक्त्वं ततो मिश्रीभावपरिणतं वेद्यमानं क्षायोपशमिकमित्येतद्विरुध्यते, मोहनीयभेदयोरेव मिश्रीभावपरिणतयोर्वेद्यमानत्वात् न विरुध्यते, तथाविधपरिणामहेतुत्वेन तयोरेव सम्यक्त्वोपचारात्, अपरस्त्वाह-औपशमिकादस्य किंकृतो विशेष इति, उच्यते, वेदनाऽवेदनाकृतः, तथाहि-अस्मिन् प्राक्शमितमनुसमयमुदेति, प्रदेशानुभवलक्षणं स्थितिकालमङ्गीकृत्य तथा वेद्यते, क्षीयते च स्थगितमपि कोद्रववदशान्तात्, न त्वयमौपशमिके प्रकारोऽस्त्युदयविष्टम्भणामात्रत्वाद्, विष्टब्धाहारवदिति गाथार्थः ॥५३५॥ चतुर्थमाह-'वेयये' त्यादि । तत्र वेदयतीति वेदकः-अनुभविता तस्यानर्थान्तरत्वाद्वेदकं समञ्चयतीति सम्यक् तद्भावः सम्यक्त्वं वेदकसम्यक्त्वं, अथवा 'कृत्यल्युटो बहुल' मिति वचनात् वेद्यत इति वेदकः इति भवत्याहारकवत्, कुतः ?—'कृत्कृत्यलुडि' त्विप्रश्लेषात्तद्वेदकसम्यक्त्वं, पुनःशब्दस्य विशेषणार्थत्वात् क्षायिकश्रेणीमभिप्रपन्नस्य भवतीति शेषः, किंविशिष्टमिति ?, अत्रोच्यते—'अणमिच्छमीसेसु खविएसु'सम्यक्त्वद-

र्शनमोहनीयमनुगमयमुदीर्योदीर्यानुभवतः क्षपयतश्च निष्ठितोदीरणीयस्य च 'सर्वोदितिचरमपोग्गलानत्थं'ति चरमाशेषोदीरितपुद्गलानुभूतिमात्रवत इति गाथार्थः । आह–क्षायोपशमिकवेदकयोर्न विशेषः, अनुभवस्याविशेषात्, उच्यते, अस्ति उदितानुदितविषयत्वादर्धभोक्तुरियान्यसाचरमावशेषकवलोपभोक्तुरिति, तथाहि–पूर्वं सम्यक्त्वं योग्यतया वर्धिकवत् न्यत्रस्थापितम्, अत्र तु चरमग्रासमात्र, अथयोदितानुदितविषयमिति, तथा मिश्रतायास्तत्र विवक्षितत्वात्, अत्र तूदयमात्रत्वादिति भेदः, तथाऽपीदं क्षायोपशमिकविशेष एव औपशमिकादित्रयात्मकसम्यक्त्वाभिधानात्, अन्यथौदयिकमपि स्यात्, तस्मादपेतमिथ्यास्वभावत्वादत्रोपशमः, प्रतिसमयानुभूतेश्च क्षयोपशम इति कृत्वेदं क्षायोपशमिकविशेष एवेति, एवं 'खीणे' त्यादि पञ्चमं स्पष्टार्थमिति गाथार्थः ॥५३६॥ इदानीं श्रुतेऽस्य नियममाह–'चोद्दसे' त्यादि । इह चतुर्दश पूर्वाणि दश चाभिन्नान्यधीयानो 'नियमात्' नियमेन 'सम्मत्त'त्ति सम्यग्दृष्टिरेव, चतुर्दशभ्यः पूर्वेभ्यः प्रारभ्यादशभ्यः सम्पूर्णेभ्यो नियमात्सम्यक्त्वपरिग्रह इत्यभिप्रायः, शेषके श्रुते–एतदारत आसामायिकाद् भजना, सम्यक्त्वपरिग्रहो वा स्यादितरो वेत्यर्थः, प्रासङ्गिकमाह–मत्यवध्योर्विपर्यासेऽपि क्वचिद् भवति मिथ्यात्वपरिग्रहो, न पुनः शेषे विज्ञानद्वये–मनःपर्यायकेवललक्षण इति गाथार्थः ॥५३७॥ आचार्य एव वक्तव्यताशेषमधिकृत्य चोदयन्नाह–'तत्ते' त्यादि । तत्त्वावगमस्वभावे तुल्ये सति सम्यक्त्वश्रुतयोः कः प्रतिविशेषो येन सम्यक्त्वविशेषणं श्रुतमुच्यते 'सम्यक्त्वपरिग्रहाच्छ्रुत'मिति, उच्यते, दृष्टान्तसिद्धमेतत्, तथाहि–यथा ज्ञानदर्शनयोर्भेदो दृष्टस्तुल्येऽवबोधसामान्ये ॥५३८॥ कथं तदाह–'नाणे'त्यादि । अपायधृती ज्ञानं वचनपर्यायत्वेन विशेषावबोधात्, तथाऽवग्रहेहे तु दर्शनमिष्टं, अर्थपर्यायत्वेन सामान्यावबोधात्, तथा किमित्यत आह–तथा 'तत्त्वरुचिः' भगवदर्हत्प्रणीतपदार्थाभिगमः सम्यगभिधीयते, येन येन 'रोच्यते' आपाद्यते तत्तु ज्ञानं, श्रुतमित्यर्थः, अत्र च रुचिज्ञानयोरेककालं क्षयोपशमाविर्भा-

वेऽपि प्रवन्धत उपकार्योपकारकभावः त्रिकाष्ठिकाया इवाविरुद्धः, न चेत्थमितरेतराश्रयो दोषः, एवं गुरुत्वेन दृष्टत्वादिति गाथार्थः ॥ ॥ ५३९ ॥ साम्प्रतं चतुर्थपञ्चमद्वारे सप्रतिपक्षे युगपदभिदधदाह—

अच्छित्तिनयस्सेयं अणाइपज्जंतमत्थिकाय व्व । इयरस्स साइसंतं गइपज्जाएहिं जीवो व्व ॥५४०॥
दव्वाइणा व साइयमणाइयं संतमंतरहियं वा । दव्वम्मि एगपुरिसं पडुच साइं सनिहणं च ॥५४१॥
चोद्दसपुव्वी मणुओ देवत्ते तं न संभरइ सव्वं । देसम्मि होइ भयणा सट्ठाणभवेऽवि भयणा उ ॥५४२॥
मिच्छभवंतरकेवलगेलन्नपमायमाइणा नासो । आह किमत्थं नासइ ? किं जीवाओ तयं भिण्णं ? ॥५४३॥
जइ भिन्नं तव्भावेऽवि तो तओ तस्सभावरहिओत्ति । अण्णाणिच्चिय निच्चं अंधव्व समं पईवेण ॥५४४॥
तं ता नियमा जीवो जीवो न तदेव केवलं जम्हा । तं च तदण्णाणं वा केवलनाणं व सो होज्जा ॥५४५॥
तं जइ जीवो नासे तण्णासो होउ सव्वसो नत्थि । जं सो उप्पायव्वयधुवधम्माऽणंतपज्जाओ ॥५४६॥
सव्वं च्चिय पइसमयं उप्पज्जइ नासए य निच्चं च । एवं चेव य सुहदुक्खबंधमोक्खाइसब्भावो ॥५४७॥
अहवा सुत्तं निव्वाणभाविणोऽणाइयं सपज्जंतं । जीवत्तं पिव नियमं सेसाणमणाइपज्जंतं ॥५४८॥
खेत्ते भरहेरवया काले उ समाउ दोण्णि तत्थेव । भावे पुण पण्णवगं पण्णवणिज्जे व आसज्ज ॥५४९॥
उवओगसरपयत्ता थाणविसेसा य होंति पण्णवए । गइठाणभेयसंघायवण्णसद्दाइभावेसु ॥५५०॥
दव्वे नाणापुरिसे खेत्ति विदेहाई कालि जो तेसु । खयउवसमभावम्मि य सुयनाणं वट्टए सययं ॥५५१॥

श्रुते साद्यन्तादिभेदाः

'अच्छित्ती' त्यादि। इह च श्रुतज्ञानं नयाभ्यां परीक्ष्यते, तौ च द्रव्यपर्यायास्तिकौ, तत्र तावद्व्यवच्छित्तिनयस्येदं श्रुतमनाद्यपर्यवसितं अक्षयादिधर्मत्वात् पञ्चास्तिकाया इव, 'इतरस्य तु' व्यवच्छित्तिनयस्य सादिसान्तं, सादिसपर्यवसानमित्यर्थः, प्रतिसमयोत्पत्तिमत्त्वात् गतिपर्यायैर्जीववत् इति गाथार्थः ॥५४०॥ अथवेदं द्वारचतुष्टयं द्रव्यादिद्वारेणाह—'दव्वादी'त्यादि। अथवा द्रव्यक्षेत्रकालभावैः साद्यनादि चिन्त्यते—'सान्तं' सपर्यवसितं 'अंतरहितं वा' अपर्यवसितं वा सादिसप० इदमुद्देशमात्रं, साम्प्रतं द्रव्यमधिकृत्याह—'द्रव्य' इति द्वारपरामर्शः, एकं पुरुषद्रव्यमधिकृत्य सादि 'सनिधनं च' सपर्यवसितं चेति गाथार्थः ॥५४१॥ कथमित्यत आह—'चोद्दसे' त्यादि। चोद्दसपुव्वी मणुओ देवत्ते उववण्णो तं सुयं न संभरइ, किं सर्वथा ?, नेत्याह—'सव्वं' कृत्स्नमखण्डमशेषमितियावत्, तथा चाह—'देसम्मि' देशे—सूत्रार्धे सूत्रमात्रादौ 'भवति' संपद्यते 'भजना' विकल्पना, स्मरत्यपीतिकृत्वा, किमस्य स्वर्गमेवाङ्गीकृत्य भजनेति ?, नेत्याह—स्वस्थानभवेऽपि भजनैव इति गाथार्थः ॥५४२॥ कथमित्यत आह—'मिच्छभवे' त्यादि। इहैव जन्मनि मिथ्यात्वगमे सादिसपर्यवसितं स्यात्, तथा भवान्तरे, न च स्वस्थानभवचिन्ताबाधेन चोदनमाधेयं, सामान्येनास्याभिधानात्, तथा केवलोत्पत्तौ ग्लानत्वे प्रमादादिना च 'भ्रंशो' नाशः अस्य स्यात् ॥५४३॥ आह—किमर्थं तदनुवृत्तिभाजः पुरुषस्य नश्यति ? किं जीवात्तदन्यत् ? 'जती' त्यादि। 'यदि भिन्नं' यद्यर्थान्तरं 'तो तओ'त्ति तो सो जीवो 'तब्भावेवि' सुयभावेपि 'तस्स भावरहिओ' सुयपगासभावरहिओत्तिकाउं अण्णाणिच्चिय णिच्चं,दृष्टान्तमाह—प्रदीपहस्तान्धवत्,अनन्यत्वे ज्ञत्वं युक्तं, प्रकाशकत्वे सति बाह्यानुग्रहाच्चक्षुष्मतः प्रदीपप्रकाशोपलब्धिवत् ॥५४४॥ गुरुरुत्तरमाह—'तं ते' त्यादि। तत्तावत् श्रुतं नियमाज्जीव एव, अजीवो न भवति,'जीवस्तु न तदेव केवलं' जीवो न श्रुतमात्रं केवलं, कस्मादित्याह—यस्मादसौ भवेत् 'तद्वा' श्रुतं, वा उत्तरापेक्षः,

तथा 'मदज्ञानं वा' श्रुताज्ञानं वा, वाशब्दादवधिर्वा, तथा केवलज्ञानं वा, वाशब्दान्मनःपर्यायज्ञानं चेति गाथार्थः ॥५४५॥ तस्मात्तत्पर्यजीव एवेत्युक्ते सत्याह—'तं जई' त्यादि । 'तं सुयं जति जीवो' तो 'तन्नासे' सुतणासे होउ जीवस्स, अनर्थान्तरभूतत्वात्, उच्यते, 'होउ' त्ति द्विरावर्त्यते, भवतु कथञ्चित्तत्पर्यायविशिष्टस्य नाशः, किन्तु 'सव्वसो नत्थि' सर्वेण-सर्वात्मना नास्ति, तन्नाशेऽस्य नाश इति प्रकृतं, यदसावुत्पादव्ययध्रुवधर्मा वर्त्तते, तथाहि—यस्मिन्नेव समये विनश्यति तस्मिन्नेव 'समये' उत्पद्यते, नापि च नश्यति, त्रिस्वभावत्वादङ्गुलिद्रव्यवत्, तथाऽनन्तपर्यायश्च, यदसौ क्वचिज्ज्ञानी क्वचिदज्ञानी च, ज्ञानाज्ञानयोश्चानन्तपर्यायता तत्पदस्थानकस्योक्तत्वात्, किमात्मैवैवं ?, नेत्याह—'सव्वं चिये'त्यादि । सर्वमेव प्रतिसमयं पर्यायत उत्पद्यते नश्यति चेति नित्यं च द्रव्यतः, कथेत्थं गुण इत्याह—एवमेव सुखादिसद्भावः, तथाहि—नैकान्तनित्ये सुखादिसद्भावः, तस्य सहकारिकारणजन्यत्वात्, तत्कृतोपकारापेक्षानपेक्षत्वे चानित्यत्ववैयर्थ्यादिदोषकोटीकोटिप्रसङ्गात्, एवं स्वधिया दुःखादावप्यायोजनीयमिति, नाप्येकान्तानित्ये अविकारित्वाज्जन्मानन्तरमृतवत्, स्थितास्थितविकल्पद्वयाद्वेति, अस्मत्पक्षे तु सकलजनप्रकटोऽयमिति प्रथमो भङ्ग इति गाथार्थः ॥५४६–७॥ द्वितीयभङ्गस्य शून्यत्वात् तृतीयमाह—'अहवे'त्यादि । अहवा सुत्तं-मिच्छासुयं निव्वाणभाविणो जीवस्स अणादीयं भव्यत्ववत्, सपर्यवसानं तु सम्यक्त्वप्राप्तेः, चतुर्थमाह—जीवत्वमिव नियतं 'सेसाणं' अनिर्वाणभाविनां-अभव्यानामनाद्यपर्यवसानं चेति द्रव्यतश्चतुर्भङ्गीति गाथार्थः ॥५४८॥ 'खेत्त' इत्यादि । क्षेत्रे विचार्यमाणे भरतैरावतान्यङ्गीकृत्येदं सादिसपर्यवसितं, काले तु भक्ते च 'भरहेरवतेसु दो समाउ पडुच ओसप्पिणीउस्सप्पिणीउ सादिसपज्जवसियं' भावे पुनर्विचार्ये 'पन्नवगं'त्ति प्रज्ञापकोपयोगमाश्रित्य प्रनीयान् वा भावानाश्रित्य सादिसपर्यवसितम् ॥५४९॥ कथमित्याह—'उवओगे'त्यादि, 'उपयोग' इत्युपयोगात्मकत्वात् श्रुतस्य ज्ञाप

'अच्छित्ती' त्यादि । इह च श्रुतज्ञानं नयाभ्यां परीक्ष्यते, तौ च द्रव्यपर्यायास्तिकौ, तत्र तावद्व्यवच्छित्तिनयस्येदं श्रुतमनाद्यपर्यवसितं अक्षयादिधर्मत्वात् पञ्चास्तिकाया इव, 'इतरस्य तु' व्यवच्छित्तिनयस्य सादिसान्तं, सादिसपर्यवसानमित्यर्थः, प्रतिसमयोत्पत्तिमत्त्वात् गतिपर्यायैर्जीववत् इति गाथार्थः ॥५४०॥ अथवेदं द्वारचतुष्टयं द्रव्यादिद्वारेणाह–'दव्वादी'त्यादि । अथवा द्रव्यक्षेत्रकालभावैः साद्यनादि चिन्त्यते–'सान्तं' सपर्यवसितं 'अंतररहितं वा' अपर्यवसितं वा सादिसप० इदमुद्देशमात्रं, साम्प्रतं द्रव्यमधिकृत्याह–'द्रव्य' इति द्वारपरामर्शः, एकं पुरुषद्रव्यमधिकृत्य सादि 'सनिधनं च' सपर्यवसितं चेति गाथार्थः ॥५४१॥ कथमित्यत आह—'चोद्दसे' त्यादि । चोद्दसपुव्वी मणुओ देवत्ते उववण्णो तं सुयं न संभरइ, किं सर्वथा ?, नेत्याह—'सर्वं' कृत्स्नमखण्डमशेषमितियावत्, तथा चाह–'देसम्मि' देशे–सूत्रार्धे सूत्रमात्रादौ 'भवति' संपद्यते 'भजना' विकल्पना, स्मरत्यपीतिकृत्वा, किमस्य स्वर्गमेवाङ्गीकृत्य भजनेति ?, नेत्याह–स्वस्थानभवेऽपि भजनैव इति गाथार्थः ॥५४२॥ कथमित्यत आह—'मिच्छभवे' त्यादि । इहैव जन्मनि मिथ्यात्वावाप्तौ सादिसपर्यवसितं स्यात्, तथा भवान्तरे, न च स्वस्थानभवचिन्ताबाधेन चोदनमाधेयं, सामान्येनास्याभिधानात्, तथा केवलोत्पत्तौ ग्लानत्वे प्रमादादिना च 'भ्रंशो' नाशः अस्य स्यात् ॥५४३॥ आह—किमर्थं तदनुवृत्तिभाजः पुरुषस्य नश्यति ? किं जीवात्तदन्यत् ? 'जती' त्यादि । 'यदि भिन्नं' यद्यर्थान्तरं 'तो तओ'त्ति तो सो जीवो 'तब्भावेवि' सुयभावेवि 'तस्सभावरहिओ' सुयपगासभावरहिओत्तिकाउं अण्णाणिच्चिय णिचं,दृष्टान्तमाह–प्रदीपहस्तान्धवत्,अनन्यत्वे इत्वं युक्तं, प्रकाशकत्वे सति बाह्यानुग्रहाच्चक्षुष्मतः प्रदीपप्रकाशोपलब्धिवत् ॥५४४॥ गुरुरुत्तरमाह—'तं ते' त्यादि। तत्तावत् श्रुतं नियमाज्जीव एव, अजीवो न भवति,'जीवस्तु न तदेव केवलं' जीवो न श्रुतमात्रं केवलं, कस्मादित्याह–यस्मादसौ भवेत् 'तद्वा' श्रुतं, वा उत्तरापेक्षः,

तथा 'तदज्ञानं वा' श्रुताज्ञानं वा, वाशब्दादवधिर्वा, तथा केवलज्ञानं वा, वाशब्दान्मनःपर्यायज्ञानं चेति गाथार्थः ॥५४५॥ तस्मात्तावज्जीव एवेत्युक्ते सत्याह—'तं जई' त्यादि । 'तं सुयं जति जीवो' तो 'तन्नासे' सुतणासे होउ जीवस्स, अनर्थान्तरभूतत्वात्, उच्यते, 'होउ' त्ति ह्रियावर्त्यते, भवतु कथञ्चित्तत्पर्यायविशिष्टस्य नाशः, किन्तु 'सव्वसो नत्थि' सर्वेण—सर्वात्मना नास्ति, तन्नाशेऽस्य नाश इति शक्तं, यदसावुत्पादव्ययध्रुवधर्म्मा वर्त्तते, तथाहि—यस्मिन्नेव समये विनश्यति तस्मिन्नेव 'समये' उत्पद्यते, नापि च नश्यति, त्रिस्वभावत्वादङ्गुलिद्रव्यवत्, तथाऽनन्तपर्यायश्च, यदसौ क्वचिज्ज्ञानी क्वचिदज्ञानी च, ज्ञानाज्ञानयोश्चानन्तपर्यायता तत्पदस्थानकस्योक्तत्वात्, किमात्मैवैवं ?, नेत्याह—'सव्वं चिये'त्यादि । सर्वमेव प्रतिसमयं पर्यायत उत्पद्यते नश्यति चेति नित्यं च द्रव्यतः, कथेत्थं गुण इत्याह—एवमेव सुखादिसद्भावः, तथाहि—नैकान्तनित्ये सुखादिसद्भावः, तस्य सहकारिकारणजन्यत्वात्, तत्कृतोपकारापेक्षानपेक्षत्वे चानित्यत्वतद्वैयर्थ्यादिदोषकोटीकोटिप्रसङ्गात्, एवं स्वधिया दुःखादावप्यायोजनीयमिति, नाप्येकान्तानित्ये अविकारित्वाज्जन्मानन्तरमृतवत्, स्थितास्थितविकल्पद्वयाद्वेति, अस्मत्पक्षे तु सकलजनप्रकटोऽयमिति प्रथमो भङ्ग इति गाथार्थः ॥५४६—७॥ द्वितीयभङ्गस्य शून्यत्वात् तृतीयमाह—'अहवे'त्यादि । अहवा सुत्तं—मिच्छासुयं निव्वाणभाविणो जीवस्स अणादीयं भव्यत्ववत्, सपर्यवसानं तु सम्यक्त्वप्राप्तेः, चतुर्थमाह—जीवत्वमिव नियतं 'सेसाणं' अनिर्वाणभाविनां—अभव्यानामनाद्यपर्यवसानं चेति द्रव्यतश्चतुर्भङ्गीति गाथार्थः ॥५४८॥ 'खेत्त' इत्यादि । क्षेत्रे विचार्यमाणे भरतैरावतान्यङ्गीकृत्येदं सादिसपर्यवसितं, काले तु भक्ते च 'भरहेरवतेसु दो समाउ पडुच्च ओसप्पिणीउस्साप्पिणीउ सादिसपज्जवसियं' भावे पुनर्विचार्ये 'पन्नवगं'ति प्रज्ञापकोपयोगमाश्रित्य प्रज्ञापनीयान् वा भावानाश्रित्य सादिसपर्यवसितम् ॥५४९॥ कथमित्याह—'उवओगे'त्यादि, 'उपयोग' इत्युपयोगात्मकत्वात् श्रुतस्य ज्ञाप

च क्षणिकत्वात् सादिसपर्यवसितं, स्वरो–ध्वनिः प्रयत्नः–ताल्वादिव्यापारः स्थानविशेषास्त्वष्टौ उरआदयः भवन्त्यन्ते प्रज्ञापकेऽनित्यत्वपर्यायाः, अभिधेयगतानाह—गतेः अणोरनित्यतामङ्गीकृत्य सादिसपर्यवसितं श्रुतं ठाणे तस्यैव स्थितिः भेदोऽन्येन संघातोऽन्येनैव वर्णः–कृष्णादिः शब्दो–मधुरमन्दादिः आदिशब्दाद्रसादिग्रहः, 'भवेसु'त्ति गति(प्रभृति) पर्यायेष्वित्यर्थः, प्रत्येकाभिसम्बन्धाल्लिङ्गादि(परिग्रहः) । साम्प्रतं द्रव्यादिद्वारेणैवानाद्यपर्यवसितमाह—'दव्वे' इत्यादि । द्रव्येऽधिकृते नानापुरुषानङ्गीकृत्य अनाद्यपर्यवसितं तदवियोगं च क्षेत्रे विदेहानङ्गीकृत्य कालो यः तत्र स एव अनुत्सर्प्पिण्यवसर्प्पिणीसंज्ञकः क्षायोपशमिकं भावमङ्गीकृत्य अभिधेयं सततं–अनाद्यपर्यवसितमिति गाथार्थः ॥५५०-१॥ साम्प्रतं षष्ठं द्वारं सप्रतिपक्षमाह—

भंगगणियाइं गमियं जं सरिसगमं च कारणवसेणं । गाहाइ अगमियं खलु कालियसुय दिट्ठिवाए य ॥५५२॥

'भङ्गे'त्यादि । भङ्गकगणितादिसंकुलं गमिकं,गमबहुलं गमिकमेक(गम)मित्यर्थः, ( यत् श्रुतं सदृशगमं च कारणवशेन सदृशेन विध्यादिना कारणेन तद् गमिकमित्यर्थः) एतच्च प्रायो दृष्टिवादे, तथा गाथाश्लोकादिप्रतिबद्धमगमिकं, खलु अलङ्कारार्थः, एतच्च प्रायः कालिकश्रुतं, यत आह–'दृष्टिवादे' च, किञ्चिद्गाथाद्यसमानग्रन्थमिति गाथार्थः ॥ ५५२ ॥ साम्प्रतं सप्तमं सप्रतिपक्षं द्वारमाह—

गणहरथेरकयं वा आएसा मुक्कवागरणओ वा । धुवचलविसेसओ वा अंगाणंगेसु नाणत्तं ॥५५३॥
जइवि य भूतावाए सव्वस्स वओगयस्स ओयारो । निज्जूहणा तहावि हु दुम्मेहे पप्प इत्थी य ॥५५४॥
तुच्छा गारवबहुला चलिंदिया दुब्बला धिईए य । इय अइसेसज्झयणा भूयावाओ य नो त्थीणं ॥५५५॥

उवउत्तो सुयनाणी सव्वदव्वाइं जाणइ जहत्थं । पासइ य केइ सो पुण तमचक्खुदंसणेणंति ॥५५६॥
तेसिमचक्खुदंसणसामण्णाओ कहं न मइनाणी । पासइ? पासइ च कहं सुयनाणी? किंकओ भेओ? ॥५५७॥
मइभेयमचक्खुदंसणं च वज्जित्तु पासणा भणिया । पण्णवणाए उ फुडा तेण सुए पासणा जुत्ता ॥५५८॥
जह नवहा मइनाणं संतपयपरूवणाइणा गमियं । तह नेयं सुयनाणं जं तेण समाणसामित्तं ॥५५९॥

'गणहरे'त्यादि, गणधराः-भगवन्तो गौतमस्वाम्यादयः तत्कृतमङ्गप्रविष्टमभिधीयते, आचाराद्यादृष्टिवादात्, स्थविरास्तु भद्रबाहुस्वाम्यादयश्चतुर्दशपूर्वविदः तद्दृब्धं तु अनङ्गप्रविष्टमावश्यकादि, इदमनयोर्नानात्वम्, अथवा यदादेशाद्-आदेशेन त्रिपृच्छोत्थं तदङ्गप्रविष्टं, स्थविरकृतं अङ्गबाह्यं, उत्सृष्टव्याकरणमात्रोपसंहृतं वा, अथवा ध्रुवचलविशेषात्, तथाहि-सर्वतीर्थेषु नियतमङ्गप्रविष्टं, अनियतमितरदिति ॥५५३॥ एवं विभक्ते सत्याह—ननु दृष्टिवाद एवैकादशाङ्गाङ्गबाह्यार्थपरिसमाप्तेः पूर्वं कृतानि पूर्वाणि चेत्यन्वर्थतस्तेष्वेव समस्तवाङ्मयावतारात्तैकादशाङ्गादिनिर्व्यूहेण कश्चिदनुग्रहः सत्त्वेषु गणभृदादीनामुपलभ्यते, उच्यते-'जइवि' त्यादि गतार्था ॥५५४॥ किं पुनः कारणं स्त्रीभ्यो न दृष्टिवादो दीयते? इत्यत आह—'तुच्छा' इत्यादि । इह स्वभावेनैव स्त्री तुच्छा भवति,न्यूनभाजनत्वात्'अहो अहं दृष्टिवादमपि पठामि'इत्यहङ्कारतः पुरुषपरिभवनशीलतयाऽपचीयमानत्वात् मानितया तथा च दुर्गतिपतनाद्, अनुग्रहार्थं च भगवत्प्रवृत्तेः, अत एवाह-गारवबहुला स्तोकेनैव माद्यतीतिकृत्वा, चलेन्द्रिया न स्त्री तपस्विनी स्यात्, चलेन्द्रियथास्यायोग्यो भगवद्भिः व्यवस्थापितः, धृत्या च दुर्बला भवति, क्लीबत्वात्, 'इय' एवं कृत्वाऽतिशयाध्ययनानि-उत्थानसमुत्थानश्रुतादीनि दृष्टिवादश्च न स्त्रीभ्यो दीयते इति । यतश्चानुग्रहार्थं ताभ्योऽपि किञ्चिद् देय अत एकादशाङ्गादिपृथक्कर-

णं सफलमिति गाथार्थः ॥५५५॥ यदुक्तं सूत्रकारेण–'तं समासतो चउव्विह पण्णत्तं, तंजहा–दव्वओ खित्तओ कालओ भावओ, दव्वओ णं सुयणाणी उवउत्ते सव्वदव्वाइं जाणइ, न पासती'त्येवं क्षेत्रादावपीति, एतदधुना आह–'उव' इत्यादि। इह 'उपयुक्तः' सर्वतः संक्रोडितावधानः 'श्रुतज्ञानी' साधुः सर्वं द्रव्यादि ज्ञेयं, द्रव्यतः पञ्चास्तिकायान् क्षेत्रं लोकालोकं कालं सर्वाद्धं भावानौदयिकादीन् गुरुलघ्वादीन् वा 'जानाति' अवबुध्यते 'यथार्थं' यावत् एवं चैवं चेदं वर्तत इति। न तु पश्यत्यसम्भवात्, मनःपर्यायज्ञानिवत्। इह च शब्दार्थज्ञानोद्भूतिवेलायां यतो विशेष एव परिच्छिद्यते अतो जानात्येव, न पश्यति, श्रुतमनःपर्याययोः पश्यत्ताया अनभिधानात्, पाठान्तरं वा 'पासइ'त्ति, तदेव पूर्वपक्षीकुर्वन्नाह–केचन अभिदधति यथा जानात्येवं पश्यत्यपीति, केनाभिप्रायेण ते एवमाहुरित्यत आह—'सो पुण सुयनाणी तं पासति अचक्खुदंसणेणं'ति, अयमभिप्रायः–इह मतिज्ञानी श्रुतज्ञानी भवत्येव, मतिज्ञानिनश्चक्षुर्दर्शनं अचक्षुदर्शनं चोक्तमेव, दर्शनज्ञानरूपत्वात्(तस्य) 'दंसणमिहं तहोग्गहेहाउ'त्ति वचनात्, ततश्च मतिज्ञानी चक्षुर्दर्शनेन पश्यति श्रुतज्ञानी त्वचक्षुर्दर्शनेन पश्यति, कस्तेषां दोषः? इत्याह—'तेसिं' मित्यादि। तेषामेवं पठतां मतिज्ञानिश्रुतज्ञानिनोः परस्पराभिन्नत्वेन 'अचक्खुदंसणसामन्नाओ' त्ति अचक्षुर्दर्शनस्य सामान्यात्–श्रोत्रेन्द्रियोपलब्धेः साधारणत्वात् 'कथं?' केन प्रकारेण कया युक्त्या न मतिज्ञानी पश्यति?, अचक्षुर्दर्शनेनापीति वाक्यशेषः, तथा पश्यति वा कथं श्रुतज्ञानी?, अचक्षुर्दर्शनेनेति वाक्यशेषः, निर्भर्त्सयन्नाह–ननु 'किंकृतो भेदः' किंकृतोऽयं विशेषः? येनायमनेन पश्यत्ययं त्वनेन नेति, तदेतदुक्तं भवति–'जइ सुयनाणी अचक्खुदंसणेण पस्सति कहं मइनाणीवि तेण न पासति?, जइ य न मइनाणी तेण पासति तओ किं सुयनाणी तेण पासइत्ति वुच्चइ' तस्मात् 'जाणइ न पासइ'त्ति स्थितं, स्थापना 'मइ' गाहा कण्ठ्या। तदेवमिदं प्ररूप्य प्रकारान्तरेणा-

पि प्ररूपयन्नाह—'जहे' त्यादि प्राग्वत् ॥ ५५६–५९ ॥ उत्तरगाथासम्बन्धमाह—

सव्वाइसयनिहाणं तं पाएणं जओ पराहीणं । तेण विणेयहियत्थं गहणोवाओ इमो तस्स ॥५६०॥

आगमसत्थग्गहणं जं बुद्धिगुणेहिं अट्ठहिं दिट्ठं । बेंति सुयनाणलंभं तं पुव्वविसारया धीरा ( नि० २१ )

सासिज्जइ जेण तयं सत्थं तं चाविसेसियं नाणं । आगम एव य सत्थं आगमसत्थं तु सुयनाणं ॥५६२॥

तस्सायाणं गहणं दिट्ठं जं मइगुणेहिं सत्थम्मि । बेंति तयं सुयलाभं गुणा य सुस्सूसणाईया ॥५६३॥

सुस्सूसइ पडिपुच्छइ सुणेइ गिण्हइ य ईहए वावि । तत्तो अपोहए वा धारेइ करेइ वा सम्मं (नि०२२)

सुस्सूसई उ सोउं सुयमिच्छइ सविणओ गुरुमुहाओ। पडिपुच्छइ तं गहियं पुणोऽवि नीसंकियं कुणइ ॥५६५॥

सुणइ तदत्थमहीउं गहणेहाऽवायधारणा तस्स । सम्मं कुणइ सुयाणं अन्नंपि तओ सुयं लहइ ॥५६६॥

सुस्सूसइ वा जं जं गुरवो जंपंति पुव्वभणिओ य । कुणइ पडिपुच्छिऊणं सुणेइ सुत्तं तदत्थं वा ॥५६७॥

मूयं हुंकारं वा बाढक्कार पडिपुच्छ वीमंसा । तत्तो पसंगपारायणं च परिणिट्ठ सत्तमए ॥५६८॥ (नि०२३)

सुत्तत्थो खलु पढमो बीओ निज्जुत्तिमीसओ भणिओ । तइओ य निरवसेसो एस विही होइ अणुओगे (नि.२४)

भणियं परोक्खमहुणा पच्चक्खं तं च तिविहमोहाई। पुव्वोइयसंबंधं तत्थावहिमाइओ वोच्छं ॥५७०॥

'सव्वे'त्यादि,स्पष्टार्था ॥५६०॥ 'आगम'गाहा । आगमनं–आगमः, आङोऽभिविधिमर्यादार्थत्वात् अभिविधिना मर्यादया वा

गमः—परिच्छेद इत्यागमः,स च केवलमत्यवधि(मनःपर्यय)लक्षणोऽपि भवति अत आह—शास्यतेऽनेनेति शास्त्रं—श्रुतं,आगमग्रहणं तु षष्टितन्त्रादिव्यवच्छेदार्थं तेषामनागमत्वात्, सम्यक्परिच्छेदात्मकत्वायोगात् शास्त्रतया च रूढत्वात्, ततश्च आगमश्चासौ शास्त्रं च आगमशास्त्रं तस्य ग्रहणमिति समासः,गृहीतिर्ग्रहणं, यद् बुद्धिगुणैः—वक्ष्यमाणलक्षणैः करणभूतैरष्टाभिर्दृष्टं ब्रुवते श्रुतज्ञानस्य लाभः श्रुतज्ञानलाभस्तं तदेव ग्रहणं ब्रुवते, के?, पूर्वेषु 'विशारदाः' विपश्चितो 'धीराः' व्रतानुपालनस्थिरा इत्यर्थः, इति गाथार्थः ॥५६१॥ 'सासिज्जती'त्यादि, गाथाद्वयं प्रायो भावितार्थं ॥५६२–५६३॥ ते चामी बुद्धिगुणाः—'सुस्सूसती'त्यादि। विनयप्रणतः सन् गुरुमुखाच्छ्रोतुमिच्छतीति शुश्रूषति १ पुनः पृच्छति श्रुतं निःशंकार्थमिति प्रतिपृच्छति २ पुनः कथितं सच्छृणोति ३ गृह्णाति—आदत्ते ४ आदाय चेहते—किमेवमुत एवमिति ५ अपिशब्दात्पर्यालोचयन् किञ्चित्स्वबुद्ध्याऽप्युत्प्रेक्षते,ततः—तदनन्तरमपोहते,एवमेवैतद्यथाऽऽहुर्गुरवः६पुनस्तमर्थमागृहीतं धारयति७करोति सम्यक् तदुक्तमनुष्ठानमिति८तदुक्तानुष्ठानमपि च श्रुतप्राप्तिहेतुर्भवत्येव,तदावरणक्षयोपशमादिनिमित्तत्वात् तस्येति। अथवा यद्यदाज्ञापयन्ति गुरवस्तत्सम्यगनुग्रहं मन्यमानः श्रोतुमिच्छति शुश्रूषति, पूर्वसन्दिष्टश्च सर्वकार्याणि कुर्वन् पुनः पृच्छति प्रतिपृच्छति, पुनरादिष्टः सम्यक् शृणोति, शेषं प्राग्वदिति गाथार्थः॥ ५६४ ॥ 'सुस्सूसती'त्यादि, 'सुणती'त्यादि, गतार्थ, नवरं 'सुणई'ति श्रुतज्ञानम् ॥५६५–५६६॥ द्वितीयं व्याख्यापक्षमधिकृत्याह—'सुस्सूसती' त्यादि गतार्था ॥ ५६७ ॥ बुद्धिगुणानभिधाय साम्प्रतं श्रवणविधिमभिधित्सुराह—'मूअं' मित्यादि । मूकमिति प्रथमं मूकं शृणुयात्, प्राथमिकत्वेनाविज्ञातपरमार्थत्वात्, द्वितीयश्रवणे हुंकारं च दद्यात्, क्षेत्रीभूतत्वात्, तृतीये बाढकारं कुर्यात्, उपरितनस्यापि श्रवणेन तुष्टत्वात्, चतुर्थे व्युत्पन्नतरत्वेन सर्वथा वा निष्ठितत्वात् 'प्रतिपृच्छां' पूर्वापरविरोधलक्षणां कुर्यात्, पञ्चमे मीमांसां कुर्यात्, प्रमाणैरिति गम्यते, ततः षष्ठे तदुत्तरोत्तरगुणप्रसङ्ग-

पारगमनं चास्य स्यात्, सप्तमके तु परिनिष्ठा, गुरुवदनुभाषणादिति गाथार्थः ॥५६८॥ साम्प्रतं व्याख्याकरणविधिमाह— 'सुत्तत्थो' इत्यादि । सूत्रस्यार्थः सूत्रार्थः, सूत्रार्थ एव केवलो व्याख्यायते यत्रानुयोगे स सूत्रार्थः—सूत्रार्थमात्रप्रतिपादनपरः सूत्रार्थः, खल्वित्यवधारणे, एवंभूत एवाद्योऽनुयोगः कर्त्तव्य इति, द्वितीयस्तु निर्युक्तिमिश्रकः कर्त्तव्य इति भणितोऽर्हदादिभिः, तृतीयस्तु निरवशेषोऽयथाशक्त्या नैगमादिनयजालप्रपञ्चतः कार्यो,व्युत्पन्नत्वात् शिष्याणां, एष च त्रिधा शक्तनसप्तकाविरोधेनेति ॥५६९॥ समाप्तं श्रुतज्ञानम् । अथ प्रत्यक्षे आद्यं प्रत्यक्षमभिधित्सुराह—'भणिय' मित्यादि । उक्तं परोक्षम्, अथ प्रत्यक्षं, तच्च त्रिधा अवध्यादि, तत्र प्रागुक्तप्रस्तावमादितोऽवधिं वक्ष्ये इति गाथार्थः ॥५७०॥ तत्र —

संखाईयाओ खलु ओहीनाणस्स सव्वपयडीओ। काई भवपच्चइया खओवसमियाओ काओऽवि ॥५७१॥
कत्तो मे वण्णेउं सत्ती ओहिस्स सव्वपयडीओ ? । चउद्दसविहनिक्खेवं इड्ढीपत्ते य वोच्छामि (नि.२४-२५)

तस्स जहुक्कोसयखेत्तकालसमयप्पएसपरिमाणं । तण्णेयपरिच्छिन्नं तं चिय से पयडिपरिमाणं ॥५७३॥
संखाईयमणंतं च तेणमणंतपयडिपरिमाणं । पेच्छइ पोग्गलकायं जमणंतपएसपज्जायं ॥५७४॥
भवपच्चइया नारयसुराण पक्खीण वा नभोगमणं । गुणपरिणामनिमित्ता सेसाण खओवसमियाओ ॥५७५॥
ओही खओवसमिए भावे भणिओ भवो तहोदइए। तो किह भवपच्चइओ वोत्तुं जुत्तोऽवही दोण्हं ? ॥५७६॥
सोऽविहु खओवसमओ किंतु स एव क्खओवसमलाभो। तम्मि सइ होअवस्सं भण्णइ भवपच्चओ तो सो ॥५७७॥

गमः–परिच्छेद इत्यागमः, स च केवलमत्यवधि(मनःपर्यय)लक्षणोऽपि भवति अत आह–शास्यतेऽनेनेति शास्त्रं–श्रुतं, आगमग्रहणं तु पष्टितन्त्रादिव्यवच्छेदार्थं तेषामनागमत्वात्, सम्यक्परिच्छेदात्मकत्वायोगात् शास्त्रतया च रूढत्वात्, ततश्च आगमश्चासौ शास्त्रं च आगमशास्त्रं तस्य ग्रहणमिति समासः, गृहीतिर्ग्रहणं, यद् बुद्धिगुणैः—वक्ष्यमाणलक्षणैः करणभूतैरष्टाभिर्दृष्टं ब्रुवते श्रुतज्ञानस्य लाभः श्रुतज्ञानलाभस्तं तदेव ग्रहणं ब्रुवते, के?, पूर्वेषु 'विशारदाः' विपश्चितो 'धीराः' व्रतानुपालनस्थिरा इत्यर्थः, इति गाथार्थः ॥५६१॥ 'सासिज्जती'-त्यादि, गाथाद्वयं प्रायो भावितार्थं ॥५६२–५६३॥ ते चामी बुद्धिगुणाः–'सुस्सूसती'त्यादि। विनयप्रणतः सन् गुरुमुखाच्छ्रोतुमिच्छतीति शुश्रूषति १ पुनः पृच्छति श्रुतं निःशंकार्थमिति प्रतिपृच्छति २ पुनः कथितं सच्छृणोति ३ गृह्णाति–आदत्ते ४ आदाय चेहते–किमेवमुत एवमिति ५ अपिशब्दात्पर्यालोचयन् किञ्चित्स्वबुद्ध्याऽप्युत्प्रेक्षते, ततः–तदनन्तरमपोहते, एवमेवैतद्यथाऽऽह गुरुरिति ६ पुनस्तमर्थमागृहीतं धारयति ७ करोति सम्यक् तदुक्तमनुष्ठानमिति ८ तदुक्तानुष्ठानमपि च श्रुतप्राप्तिहेतुर्भवत्येव, तदावरणक्षयोपशमादिनिमित्तत्वात् तस्येति। अथवा यद्यदाज्ञापयन्ति गुरवस्तत्तत्सम्यगनुग्रहं मन्यमानः श्रोतुमिच्छति शुश्रूषति, पूर्वसन्दिष्टश्च सर्वकार्याणि कुर्वन् पुनः पृच्छति प्रतिपृच्छति, पुनरादिष्टः सम्यक् शृणोति, शेषं प्राग्वदिति गाथार्थः ॥ ५६४ ॥ 'सुस्सूसती'त्यादि, 'सुणती'त्यादि, गतार्थं, नवरं 'सुणई'-ति श्रुतज्ञानम् ॥५६५–५६६॥ द्वितीयं व्याख्यापक्षमधिकृत्याह—'सुस्सूसती' त्यादि गतार्था ॥ ५६७ ॥ बुद्धिगुणानभिधाय साम्प्रतं श्रवणविधिमभिधित्सुराह—'मूअं' मित्यादि। मूकमिति प्रथमं मूकं शृणुयात्, प्राथमिकत्वेनाविज्ञातपरमार्थत्वात्, द्वितीयश्रवणे हुंकारं च दद्यात्, क्षेत्रीभूतत्वात्, तृतीये वाढकारं कुर्यात्, उपरितनस्यापि श्रवणेन तुष्टत्वात्, चतुर्थे व्युत्पन्नतरत्वेन सर्वथा वा निष्ठितत्वात् 'प्रतिपृच्छां' पूर्वापरविरोधलक्षणां कुर्यात्, पञ्चमे मीमांसां कुर्यात्, प्रमाणैरिति गम्यते, ततः षष्ठे तदुत्तरोत्तरगुणप्रसङ्ग-

बुद्धिगुणाः एकं अनुयोगभेदाः ॥२०४॥

भवे सति भवत्यवश्यं भण्यते भवप्रत्ययस्ततोऽसौ नारकदेवावधिः, व्यवहितकारणेऽव्यवहितकारणोपचारात् ॥५७७॥ तथा 'उदये'त्यादि, प्रसिद्धार्था अतो यद्यवध्यावरणक्षयोपशमो भवमासाद्य (भवतीति तन्निमित्तकावधेरपि भवप्रत्ययत्वं) स्यात् को दोषः ? ॥५७८॥ द्वितीयम् लगाथाभाष्यम्–'इय' इत्यादि, सुबोध्या ॥५७९॥ सोऽयं चतुर्दशविधो निक्षेप इत्यादि—

ओही [1]खेत्तपरिमाणे, [2]संठाणे [3]आणुगामिएँ । अवट्ठिएँ [4]चले तिव्व–मंदपडिवाउप्पयाइयं ॥५८०॥
नोणदंसणविब्भंगे, [11]देसे खित्ते गेई इयँ । इड्ढीपत्ताणुओगे य, एमेया पडिवत्तिओ ॥५८१॥

गइपज्जंता चोद्दस रिद्धी चसमुच्चियत्ति पंचदसी । ओहिपयंपि व मोत्तुं सेयरमणुगामियं काउं ॥५८२॥
केई चोद्दसभेयं भणंति ओहित्ति न पयडी जम्हा । पयडीण य निक्खेवो जं भणिओ चोद्दसविहोत्ति ॥५८३॥

'ओही' त्यादि 'नाणे' त्यादि द्वारगाथाद्वयं, तत्रावधिरित्यवधेर्नामादिभेदस्य स्वरूपमभिधातव्यं, तथाऽवधिशब्दो द्विरावर्त्यत इति व्याख्यातव्यं, तथा (खेत्तपरिमाणविष)योऽवधिर्वक्तव्यः, संस्थानविषयश्च, अथवा 'अर्थाद्विभक्तिपरिणाम' इति द्वितीयैवेयं, तत्तश्चावधेर्जघन्यमध्यमोत्कृष्टभेदभिन्नं क्षेत्रपरिमाणं वक्तव्यं, तथा संस्थानं, अनुगमनशीलोऽनुगामुकः सप्रतिपक्षो वाच्यः, एकारान्तः प्रथमान्त इतिकृत्वा, यथा 'कतरे आगच्छइ'त्ति, तथाऽवस्थितोऽवधिर्वाच्यः, द्रव्यादिषु कियन्तं कालमप्रतिपतितः सन् लब्धित उपयोगतश्चास्त इति, चलो वक्तव्यः,चलः–अनवस्थितः, स च वर्द्धमानः क्षीयमाणो वेति द्वेधा,'तीव्रमन्द' इति तीव्रो मन्दो मध्यमश्चावधिर्वक्तव्यः, तत्र तीव्रो–विशुद्धः मन्दश्च अविशुद्धः,इतरस्तूभयप्रकृतिः,'प्रतिपादोत्पादा' विति एककाले द्रव्याद्यपेक्षयाऽवधेर्वक्तव्यौ, त-

उदय-क्खय-क्खओवसमो-वसमा जं च कम्मुणो भणिया। दव्वं खित्तं कालं भवं च भावं च संपप्प ॥५७८॥
इय सव्वपयडिमाणं कह कमवसवण्णवत्तिणी वाया । वोच्छिति सव्वं सव्वाउणावि संखिज्जकालेणं ? ॥५७९॥

'संखे'त्यादि, संख्यानं संख्या तामतीताः संख्यातीताः, असंख्येया इत्यर्थः, कथं?, यस्माल्लोकासंख्येयभागादारभ्य प्रदेशपरिवृद्ध्या असंख्येयलोकप्रदेशपरिमाणं क्षेत्रं पश्यति, कालतः आवलिकाऽसंख्येयभागादारभ्य समयप्रवृद्ध्या असंख्येयोत्सर्पिण्यवसर्पिणीसमयपरिमाणं कालमालोकयति, अतोऽभ्यधायि-ज्ञेयोपाधिवशात् संख्यातीताः, ताश्चानन्ता अपि स्युरित्यत आह-'खलि'ति, खलुशब्दस्य विशेषणार्थत्वात् क्षेत्रकालविवक्षयैवासंख्येयाः, द्रव्यभावविवक्षया त्वनन्ताः, तथाहि-तैजसभाषाद्रव्यापान्तरालवर्त्त्यनन्तप्रदेशिकात् स्कन्धादारभ्य विचित्रवृद्ध्या सर्वपुद्गलास्तिकायविषयं वक्ष्यति, तथा प्रतिवस्तुगतासंख्येयविप(पर्या)यमानं च वक्ष्यति, भावतोऽनन्ता अपि, ज्ञेयभेदात्, कस्य?, अवधिज्ञानस्य-प्राग्निरूपितशब्दार्थस्य, काः?, सर्वाश्च ताः प्रकृतयश्चेति २, प्रकृतयो भेदाः स्वभावा अंशा इति पर्यायाः, आसां मध्ये काश्चन प्रकृतयो भवप्रत्ययाः क्षायोपशमिक्यः काश्चन इति गाथार्थः॥५७१॥ अथासां यथावत्प्रतिपादनसामर्थ्यमात्मनोऽपश्यन् इदमाह-'कत्तो मे' इत्यादि, कुतो मम वर्णयितुं शक्तिरवधेः सर्वाः प्रकृतीः? तथापि प्रारब्धत्वात् तथाप्यस्य चतुर्दशविधं निक्षेपमवध्यादिकं वक्ष्ये प्राग्ऋद्धींश्च ॥५७२॥ प्रथमनिर्युक्तिगाथार्थमाह—'तस्से'त्यादि, तस्यावधेः तेयाभासादव्वाणमंतरालाओ जहुक्कोसयखेत्तप्पएसपरिमाणं कालसमयपरिमाणं च, शेषं प्राग्वदनुसर्त्तव्यम्, 'संख्याती'त्यादि, उक्तार्था, पश्चार्धं व्याचिख्यासुराह-'भवे'त्यादि, गतार्था ॥५७३-५॥ एतत्पूर्वार्द्धमङ्गीकृत्य चोद्यम्-'ओही'त्यादि, स्पष्टार्था ॥५७६॥ उच्यते-'सोऽवी'त्यादि, असावपि नारकादिक्षयोपशमादेव प्रसूयते, यद्येवं 'दोण्हं भवपच्चइओ देवाण य णेरइयाण य'चीदं कथम्?, एतदाशंक्याह-किन्तु स एव क्षयोपशमलाभस्तेषां तस्मिन्-

भवे सति भवत्यवश्यं भण्यते भवप्रत्ययस्ततोऽसौ नारकदेवावधिः, व्यवहितकारणेऽव्यवहितकारणोपचारात् ॥५७७॥ तथा 'उदये'त्यादि, प्रसिद्धार्थां अतो यद्यवध्यावरणक्षयोपशमो भवमासाद्य (भवतीति तन्निमित्तकावधेरपि भवप्रत्ययत्वं) स्यात् को दोषः ? ॥५७८॥ द्वितीयम् लगाथाभाष्यम्-'इय' इत्यादि, सुबोध्या ॥५७९॥ सोऽयं चतुर्दशविधो निक्षेप इत्यादि—

ओही खेत्तपरिमाणे, संठाणे आणुगामिएँ । अवट्ठिएँ चले तिव्व-मंदपडिवाउप्पयाईयं ॥५८०॥
नाणदंसणविब्भंगे, देसे खित्ते गई इयं । इड्ढीपत्ताणुओगे य, एमेया पडिवत्तिओ ॥५८१॥

गइपज्जंता चोद्दस रिद्धी चसमुच्चियत्ति पंचदसी । ओहिपयंपि व मोत्तुं सेयरमणुगामियं काउं ॥५८२॥
केई चोद्दसभेयं भणंति ओहित्ति न पयडी जम्हा । पयडीण य निक्खेवो जं भणिओ चोद्दसविहोत्ति ॥५८३॥

'ओही' त्यादि 'नाणे' त्यादि द्वारगाथाद्वयं, तत्रावधिरित्यवधेर्नामादिभेदस्य स्वरूपमभिधातव्यं, तथाऽवधिशब्दो द्विरावर्त्यत इति व्याख्यातव्यं, तथा (खेत्तपरिमाणविष)योऽवधिर्वक्तव्यः, संस्थानविषयश्च, अथवा 'अर्थाद्विभक्तिपरिणाम' इति द्वितीयैवेयं, तत्तथावधेर्जघन्यमध्यमोत्कृष्टभेदभिन्नं क्षेत्रपरिमाणं वक्तव्यं, तथा संस्थानं, अनुगमनशीलोऽनुगामुकः सप्रतिपक्षो वाच्यः, एकारान्तः प्रथमान्त इतिकृत्वा, यथा 'कतरे आगच्छइ'त्ति, तथाऽवस्थितोऽवधिर्वाच्यः, द्रव्यादिषु कियन्तं कालमप्रतिपतितः सन् लब्धित उपयोगतश्चास्त इति, चलो वक्तव्यः,चलः-अनवस्थितः, स च वर्द्धमानः क्षीयमाणो वेति द्वेधा,'तीव्रमन्द' इति तीव्रो मन्दो मध्यमश्चावधिर्वक्तव्यः, तत्र तीव्रो-विशुद्धः मन्दश्च अविशुद्धः, इतरस्तूभयप्रकृतिः,'प्रतिपादोत्पादा' विति एककाले द्रव्याद्यपेक्षयाऽवधेर्वक्तव्यौ, त-

श्चा ज्ञानदर्शनविभङ्गा वाच्याः—किमत्र ज्ञानं ? किं वा दर्शनं ? को वा विभङ्गः ? इति, परस्परतश्चामीषामपि अल्पबहुत्वं चिन्त्यमिति, 'देसे'त्ति कस्य देशविषयः सर्वविषयो वेति, 'खेत्त' इति क्षेत्रविषयोऽवधिर्वक्तव्यः, सम्बन्धासम्बन्धसंख्येयासंख्येयापान्तरालक्षेत्रद्वारेणेत्यर्थः, 'गनी इय'त्ति अत्रेतिशब्दः आद्यर्थे, ततश्च गत्यादिद्वारमालाऽवधौ वक्तव्येति, तथा प्राप्तद्धर्यनुयोगश्च कर्त्तव्यः, एवमनेन प्रकारेणैताः—अनन्तरोक्ताः 'प्रतिपत्तयः'परिच्छित्तय इत्यर्थः, ततश्चावधिप्रकृतय एव प्रतिपत्तिहेतुत्वात् प्रतिपत्तय इत्युच्यन्ते, इतिद्वारगाथाद्वयपिण्डार्थः ॥५८०–५८१॥ कथं पुनरस्यायं निक्षेपश्चतुर्दशधेत्याह भाष्यकारः—'गती'त्यादि । अवध्याद्या गतिपर्यन्ताश्चतुर्दश निक्षेपाः, (ऋ)द्धिश्च च समुच्चितत्वात् पञ्चदशी, अथवाऽवधिरिति पदं विहायानुगामुकं च सप्रतिपक्षमर्थतः कृत्वा ॥५८२॥ किमित्यत आह—'केई'त्यादि, केचन एवं चतुर्दशविधं निक्षेपं पूरयन्ति, यस्मान्नावधिः प्रकृतिः प्रकृतिमत्त्वात्, प्रकृतीनामेव च निक्षेपो यस्माच्चतुर्दशविध उक्तो मूलगाथायामृद्धिस्तु चसमुच्चितैवेति, अविरुद्धं चैतदपीति गाथार्थः ॥५८३॥ तत्र यदुक्तं—'गतिपज्जन्ता चोद्दस'त्ति तत्राद्यद्वारव्याचिख्यासयाऽऽह निर्युक्तिकारः—

**नामं ठवणदविए खेत्ते काले भवे य भावे य । एसो खलु ओहिस्सा निक्खेवो होइ सत्तविहो ॥५८४॥**

अवहित्ति जस्स नामं जह मज्जायाऽवहित्ति लोयम्मि । ठवणाऽवहिनिक्खेवो होइ जहऽक्खाइविन्नासो ॥५८५॥
अहवा नामं तस्सेव जमभिहाणं सपज्जओ तस्स । ठवणाऽऽगारविसेसो तद्दव्वक्खेत्तसामीणं ॥५८६॥
दव्वोही उप्पज्जइ जत्थ तओ जं च पासए तेणं । जं चोवगारि दव्वं देहाई तब्भवे होइ ॥५८७॥

खेत्ते जत्थुप्पज्जइ कहिज्जए पेच्छए व दव्वाइं । एव चेव य काले न उ पेच्छइ खित्तकाले सो ॥५८८॥

जम्मि भवे उप्पज्जइ वट्टइ पेच्छइ व जं भवोही सो । एमेव य भावोही वट्टइ य तओ खओवसमे ॥५८९॥

'नाम'मित्यादि, अत्राप्याद्यद्वारव्याचिख्यासयाऽऽह भाष्यकारः—'अवधी' त्यादि । यस्य जीवादेर्वस्तुनोऽवधिरिति नाम क्रियते, यथा मर्यादायाः, तद्वस्तु लोकेऽवधिरिति नामावधिः, स्थापनावधिः भवत्यवधेर्निक्षेपो यथाऽक्षादेर्विन्यास इति गाथार्थः ॥५८५॥ 'अहवे' त्यादि यद्वा तस्यैव नामावधेः यदभिधानं-वचनपर्यायरूपं स नामावधिस्तस्य स्वपर्यायत्वात्, स्थापनाऽवधिस्त्वाकारविशेषः, केषामित्यत आह–तद्द्रव्यक्षेत्रस्वामिनां, द्रव्यतः पनकादिः, क्षेत्रतो जम्बूद्वीपादि, स्वामिनः कूर्म्मस्तुतादेरिति गाथार्थः ॥५८६॥ द्रव्यावधिमाह– 'दव्वोही' त्यादि । द्रव्यावधिरुच्यते– यत्रासौ द्रव्ये उत्पद्यते यद्वा तेन पश्यति यद्वाऽस्योत्पत्तौर्देहाद्युपष्टम्भकं स द्रव्यावधिरिति गाथार्थः ॥ ५८७ ॥ क्षेत्रावधिमाह—'खेत्त' इत्यादि । क्षेत्रे यत्रोत्पद्यते भरतादौ कथ्यते पश्यति वा द्रव्याणि स क्षेत्रावधिः, एवं यत्र काले दुष्षमसुषमादौ उत्पद्यते कथ्यते पश्यति वा सोऽयं, किमयमिमौ पश्यति ?, नेत्याह, नतु पश्यति क्षेत्रकालावसौ अमूर्तत्वात्, वर्त्तनादिरूपं कालं पश्येत्, पुद्गलाश्रितत्वात् तस्येति गाथार्थः ॥ ५८८ ॥ 'ज'मित्यादि । यत्र नारकादावौदयिके भव उत्पद्यते उत्पन्नो वाऽर्थान्तरतया वर्त्तते पश्यति वा यं भवं स भवावधिः; 'एमेव य भावोहि' त्ति एवं भावावधिरपि यत्र भाव उत्पद्यते पश्यति वा यं भावं, वर्त्तते वाऽसौ स्वरूपतः क्षयोपशम इति ॥ ५८९ ॥ ओहित्ति दारं गयं ॥

द्वितीयद्वारसम्बन्धमाह—

ओहिस्स खेत्तमाणं जहण्णमुक्कोस्स मज्झिमं तत्थ । पाएण तदाईए जं तेण जहन्नयं वोच्छं ॥ ५९० ॥

जावइया तिसमयाहारगस्स सुहुमस्स पणगजीवस्स । ओगाहणा जहण्णा ओहीखेत्तं जहण्णं तु ॥ ५९१ ॥
जो जोयणसाहस्सो मच्छो नियए सरीरदेसम्मि । उववज्जंतो पढमे समए संखिवइ आयामं ॥ ५९२ ॥
पयरमसंखिज्जंगुलभागतणुं मच्छदेहविच्छिण्णं । बीए, तइए सूइं संखिविउं होइ तो पणओ ॥ ५९३ ॥
उववायाओ तइए समए जं देहमाणमेयस्स । जण्णेयदव्वभायणमोहिक्खित्तं जहन्नं तं ॥ ५९४ ॥
किं मच्छोऽतिमहल्लो? किं तिसमयओ च? कीस वा सुहुमो? । गहिओ कीस व पणओ? किंव जहण्णावगाहणओ? ॥
मच्छो महल्लकाओ संखित्तो जो य तीहिं समएहिं । सो किर पयत्तविसेसेण सण्हमोगाहणं कुणइ ॥५९६
सण्हयरा सण्हयरो सुहुमो पणओ जहण्णदेहो य । सुबहुविसेसविसिट्ठो सण्हयरो सव्वदेहेसु ॥ ५९७ ॥
पढमबिइएऽतिसण्हो जमइत्थूलो चउत्थयाईसु । तइयसमयम्मि जोग्गो गहिओ तो तिसमयाहारो ॥५९८॥
केई दो इससमया तइओ पणगत्तणोववायम्मि । अह तिसमओ आहारओ य सुहुमो य पणओ य ॥५९९॥
उववाए चेय तओ जओ जहण्णो न सेससमयेसु । तो किर तद्देहसमाण-मोहिक्खित्तं जहण्णं तु ॥ ६०० ॥

'ओहिस्से' त्यादि स्पष्टार्था ॥५९०॥ 'जावइया' इत्यादि । 'यावती' यावत्प्रमाणा त्रीन् समयानाहारयतीति त्रिसमयाहारकस्तस्य, सूक्ष्मनामकर्मोदयात्सूक्ष्मस्तस्य, पनकश्चासौ जीवश्च पनकजीवः, वनस्पतिविशेष इत्यर्थः, तस्य, अवगाहन्ते यस्यां प्राणिनः साऽवगाहना, तनुरित्यर्थः, 'जघन्या' सर्वस्तोका अवधेः क्षेत्रं अवधिक्षेत्रं 'जघन्यं' सर्वस्तोकं सर्वजघन्यं, तुशब्द एवकारार्थः स चावधारणे, तस्य चैवं प्रयोगः–अवधिक्षेत्रं जघन्यमेतावदेवेति ॥५९१॥ अत्र साम्प्रदायिकमर्थं भाष्यकार उद्भावयन्नाह–'जो' इत्यादि ।

जो जोयणसाहस्सो मच्छो णियए सरीरदेसम्मि 'उववज्जंतो' उववज्जितुकामो कर्मवशात्, स प्रथमसमये किं करोतीत्याह-पढमे समए 'संखिवति' उवसंहरइ आयामं, आत्मप्रदेशानां शरीरान्तर्दीर्घीभावेन, संहृत्य किमसौ करोतीत्याह-'पयरं'ति प्रतरं-मूलकक्रन्दकचक्कलिसंस्थानमिति भावना, किंविशिष्टमित्याह-'असंखेज्जंगुलभागतणुं'ति सर्वतोऽङ्गुलासंख्येयभागश्लक्ष्णं, ऊर्ध्वतिरश्चीनं च, किंविशिष्टमित्यत आह—मत्स्यदेहविस्तीर्णं तद्, अन्तःशरीरसम्बद्धत्वात्, एपः प्रथमसमयव्यापारः । ततो 'बितिते'त्ति द्वितीये समये तं पयरं उभयदिसिओ संहरिउं सूइं करेइ अंगुलासंख्येयभागविच्छड्डं मच्छसरीरकुडियमाणायामं, एप तु द्वितीयसमयव्यापारः, तृतीयसमयव्यापारमभिदधत्पश्चार्द्धमाह-'तइए समये तं खर्वि संखिविदुं, परभवायुषेति प्रच्छन्नोऽभिप्रायः, अविग्रहगत्या ततः स्वकायदेशे पनक उत्पद्यते॥ 'उवव याओ' इत्यादि, अस्मादुपपातसमयात् तृतीये समये यद् देहमानमेतस्य पनकस्य, तत्किमित्यत आह-'ओहिक्खेत्तं जहन्नं तु'त्ति तज्जघन्यमवधिक्षेत्रं, किंस्वरूपं ?, 'तज्ज्ञेयद्रव्यभाजनं' पनकशरीरज्ञेयद्रव्याधारमिति गाथात्रयार्थः ॥ ५९२-५९३-५९४ ॥ अत्र कश्चिदाह- 'किं'मित्यादि ॥ किमिति मत्स्योऽतिमहान् गृह्यते ? किं 'तिसमइओ य' त्ति, किं चास्य तृतीयसमये निजदेहदेश उत्पादः ? किमिति वा सूक्ष्मः ? किमिति वा पणको ? जघन्यावगाहनको वेति ॥ ५९५ ॥ उत्तरमाह- 'मच्छो' इत्यादि । स एव हि महामत्स्यस्त्रिभिः समयैरात्मानं सङ्क्षिपन् प्रयत्नविशेषात् सूक्ष्मावगाहनो भवति, नान्य इत्यतो महद्ग्रहणमिति गाथार्थः ॥५९६॥ 'कीस वा सुहुम ?' इत्यादेस्तावदुत्तरमाह-'सण्हतरो' इत्यादि, श्लक्ष्णादपि श्लक्ष्णतरत्वेन सूक्ष्मः पनक एव भवति जघन्यदेहश्च, एवं सुबहुविशेषणविशिष्टः श्लक्ष्णतरः श्लक्ष्णतमश्च 'सव्वदेहेसु' सर्वदेहेभ्यः स एव भवतीति गाथार्थः ॥५९७॥ 'किं तिसमयओ वे'त्यस्येदानीमुत्तरमाह-'पढमे'त्यादि । यस्मात्प्रथमद्वितीयसमययोरतिश्लक्ष्णः, चतुर्थादिषु चातिस्थूरः,

तृतीयसमये तु योग्योऽतस्त्रिसमयाहारग्रहणमिति गाथार्थः ॥५९८॥ 'केई'त्यादि ॥ एवं स्थिते केचन सूक्ष्मधियो व्याचक्षते–द्वौ झष-समयावायामविष्कम्भसंहारकरणलक्षणौ गृह्येते, तृतीयः पनकत्वोपपाते सूचिं संहरत इति सामर्थ्याद् गम्यते, अथैवं सति त्रिसामयिकत्वं लभ्यते यदुक्तं निर्युक्तिकारेण, आहारकथाविग्रहेणोत्पादात्, 'सुहुमो य'त्ति प्रत्युतातिसूक्ष्मतरः पनकश्च परभवोत्पत्तः ।५०९। तथा च—'उववाए'इत्यादि, 'उपपात एव' उपपातसमय एवासौ यतो 'जघन्यो' जघन्यावगाहनो, न 'शेषसमयेषु' द्वितीयादिषु ईषन्महत्त्वात्, ततः किल तद्देहमानमेवावधिक्षेत्रं जघन्यमिति, एतच्च न सत्यमेव सूक्ष्मधीवचनं, त्रिसमयाहारकत्वस्य पनकजीवविशेषणत्वाभ्युपगमात्, मत्स्यायामविष्कम्भसंहरणसमयद्वयस्य च पनकसमयत्वायोगात्, त्रिसमयाहारकत्वाख्यविशेषणानुपपत्तिप्रसङ्गादिति गाथार्थः ॥६००॥ अथोत्कृष्टमाह—

सव्वबहुअगणिजीवा निरंतरं जत्तियं भरिज्जंसु। खेत्तं सव्वदिसागं परमोही खेत्तनिद्दिट्ठो ॥६०१॥ (नि.३१)

अव्वाघाए सव्वासु कम्मभूमीसु जं तवारंभा। सव्वबहवो मणुस्सा होंतऽजियजिणिंदकालम्मि ॥६०२॥
उक्कोसया य सुहुमा जया तया सव्वबहुगमगणीणं। परिमाणं संभवओ तं छद्धा पूरणं कुणइ ॥६०३॥
एक्केक्कागासपएसजीवरयणाए सावगाहे य। चउरंसघणं पयरं सेढी छट्ठो सुयाएसो ॥६०४॥
घणपयरसेढिगणियं नणु तुल्लं चिय, विगप्पणा कीस। छद्धा कीरइ?, भण्णइ पुरिसपरिक्खेवओ भेओ॥६०५॥
निययावगाहणागणिजीवसरीरावली समंतेणं। भामिज्जइ ओहिनाणिदेहपज्जंतओ सा य ॥६०६॥

अइगंतूण अलोगं लोगागासप्पमाणमेत्ताइं । ठाइ असंखेज्जाइं इदमोहिक्खेत्तमुक्कोसं ॥६०७॥
सामत्थमेत्तमेयं जइ दट्ठव्वं हवेज्ज पेच्छेज्जा । न य तं तत्थऽत्थि जओ सो रूविनिबंधणो भणिओ ॥६०८॥
वड्ढंतो उण बाहिं लोयत्थं चेव पासई दव्वं । सुहुमयरं सुहुमयरं परमोही जाव परमाणुं ॥६०९॥
भणियं जहण्णमुक्कोसयं च खेत्तं विमज्झिमं सेसं । एयस्स कालमाणं वोच्छं जं जम्मि खेत्तम्मि ॥६१०॥

'सव्वे'त्यादि। सर्वेभ्यो-विवक्षितकालावस्थायिभ्योऽनलजीवेभ्य एवं बहवः सर्वबहवः, न भूतभविष्यद्भ्यो, नापि च शेषजीवेभ्योऽसम्भवात्, अनयश्च ते जीवाश्चाग्निजीवाः, सर्वबहवश्च तेऽग्निजीवाश्च सर्वबह्वग्निजीवाः, निर्गतमन्तरं यस्मात् क्षेत्रात्तद् निरन्तरं सन्ततमविच्छेदेन नैरन्तर्येणेत्यर्थः 'यावद्' यावत्प्रमाणं क्षेत्रं(वि) भृयुर्बभृवां, व्याप्तवन्त इत्यर्थः, भूतकालनिर्देशश्चाजितस्वामिकाले एव प्रायः सर्वबहवोऽनलजीवा भवन्त्यस्यामवसर्पिण्यामित्यस्यार्थस्य ख्यापनार्थः, सर्वदिशो गच्छतीति सर्वदिग्गं-सर्वा दिशो व्याप्नोति, सर्वदिशमित्यर्थः, परमश्चासाववधिश्च परमावधिः, क्षेत्रं अनन्तरव्यावर्णितं प्रभूतानलजीवममितमङ्गीकृत्य 'निर्दिष्टः' प्रतिपादितो गणधरादिभिरिति, ततश्च परमावधेः पर्यायेणैतावत् क्षेत्रमिदमित्युक्तं भवति, अथवा सर्वबह्वग्निजीवा निरन्तरं यावत् भूतवन्त क्षेत्रं सर्वदिग्गं एतावति क्षेत्रे यान्यवस्थितानि द्रव्याणि तत्परिच्छेदसामर्थ्ययुक्तः परमावधिः क्षेत्रमङ्गीकृत्य निर्दिष्टो, भावार्थः प्राग्वत्, अयमक्षरार्थः ॥ ६०१ ॥ साम्प्रतं साम्प्रदायिकमर्थं भाष्यकार आह—'अव्वाघाए' इत्यादि । अव्याघाते-गर्भव्युत्क्रान्तिकपुरुषोत्कृष्टसम्पद्युतके काले सर्वासु कर्मभूमिषु-सर्वासु धर्मचरणप्रवृत्तिषु क्षितिषु पञ्चसु भरतैरवतेषु विदेहेषु चेत्यर्थः, 'यत्' यस्मात् 'तदारम्भाः' अग्निसमारम्भाः सर्वबहवो विवक्षिताधस्त्योपरिभेभ्यो बहवो 'मनुष्याः' पुरुषा 'भवन्ति' सम्पद्यन्ते, कश्चासौ काल इत्याह—

'अजितजिनेन्द्रकाले' अस्यामेवावसर्प्पिण्यां द्वितीयतीर्थंकरकाल इत्युक्तं भवति, यदि नामैवमेतत् ततः प्रकृतोपयोगः क इति?, उच्यते-तेषु च नानाविधाग्निसाध्यकार्यौघकरणनिपुणेषु सर्वबहवोऽग्निजीवा भवन्त्यमी, बादराश्चैते, इओ य 'उक्कोस' इत्यादि। सुहुमा य अनलजीवा 'उक्कोसया' उक्कोसपदवत्तिणो जया भवंति तदा सव्वबहुगमगणीण परिमाणं भवति, बादरेषु सूक्ष्मप्रक्षेपात्, ततः किमित्यत आह-'संभवओ' यथासम्भवं 'तत्'सर्वबह्वग्निजीवपरिमाणं षोढा पूरणं करोति ॥६०३॥ तत्र पञ्चानादेशाः, एकस्त्वादेशः, कथमित्यत आह—'एक्केक्कं' इत्यादि। चउरंसघणो कीरइ, पुणो सो ओहिण्णाणिणो देवेण वा दाणवेण वा सव्वओ भामिज्जंतो जं फुसइ तावतियमुक्कोसयमोहिखेत्तं' कथमित्यत्राह-' एक्केक्कागासपएसजीवरयणाए' अत्र दोषद्वयं-क्षेत्राल्पत्वमुत्सिद्धान्तदोषश्च, एकप्रदेशे जीवानामनवस्थानादसङ्ख्येयप्रदेशावगाहिस्वभावत्वात्, द्वितीयमतमाह-सावगाहे, अत्राप्येको दोष इत्यनादेशः, तथा 'पतरं'-त्ति ततियचउत्था भणंति-पदरो कीरइ, कथं?, 'एक्केक्कागासपएसजीवरयणाए सावगाहे य' त्ति ते एव दोषाः। पंचमच्छट्ठा भणंति-'सेढि'त्ति सेढी कीरइ, कथमित्याह 'एकेके' त्येतदेवावर्तते। षष्ठमतमनुजानन्नाह-षष्ठे श्रेणिपक्षे 'श्रुतादेशः' श्रुताभिप्रायः गुणद्वययोगादिति गाथार्थः ॥६०४॥ आह—'घण'इत्यादि। ननु घनादिगणितस्य तुल्यत्वान्मा भूत् षड्विधा कल्पना, एतदुक्तं भवति-प्रतिप्रदेशघनः प्रतिप्रदेशप्रतरादिभिः सार्धं न परमार्थतो भिद्यते, एवं स्वावगाहघनोऽपि स्वावगाहप्रतरादिभिः सार्धं न परमार्थतो भिद्यते, कुतः?, क्षेत्रप्रदेशसाम्यात्, संवृतविवृतनेत्रपटस्पृष्टाकाशप्रदेशकलापवद् अतो घन एव कल्पनाद्वयेनास्तु, प्रतरः सूची वेत्यभिप्रायः, सूरिराह-'भण्णइ' त्ति उच्यते उत्तरं, पुरुषपरिक्षेपतो भेदः सर्वत्रास्तीत्यध्याहारः, स च यथोत्तरमसंख्येयगुणः, तथाहि-तद्बहिः स्वावगाहनाघनो भ्रम्यमाणो यावत् स्पृशति तावतः स्वावगाहनाप्रतरोऽसङ्ख्येयगुणं, तस्मादपि श्रेणीति गाथार्थः ॥ ६०५ ॥

'नियये'त्यादि गाथाद्वयं सुबोधम्, णवरं खंडाइं फुसिऊणं 'ठाति' तिष्ठति स्पृशतीत्यर्थः, न चैवं भावतोऽयुक्तेयं कल्पनेति । ॥६०६–६०७॥ असम्भवोऽयमिति चेत्, उच्यते—'सामत्थ'मित्यादि स्पष्टं, नवरं रूपिद्रव्यं चालोके नास्तीति सामर्थ्यमात्रमवशिष्यत इति ॥६०८॥ सोपयोगेयमन्यकर्तृकी गाथा ॥ 'वड्ढंतो'इत्यादि प्रतीतार्थं ॥६०९॥ इदानीं विमध्यमक्षेत्राभिधित्सया सम्बन्धगाथामाह—'भणिय'मित्यादि पुव्वद्धं कण्ठ्यं 'एतस्य' विमध्यमस्य कालमानं वक्ष्ये, यद्यस्मिन् क्षेत्रे भवति, एतदुक्तं भवति कियति क्षेत्रोपलम्भे कियान् कालोपलम्भः? कियत्का लोपलम्भे च कियान् क्षेत्रोपलम्भः? इति गाथार्थः ॥६१०॥ तत्र—

अंगुलमावलियाणं भागमसंखिज्ज दोसु संखिज्जा । अंगुलमावलियंतो आवलिया अंगुलपुहुत्तं ॥६११॥(नि.३२)

हत्थम्मि मुहुत्तंतो दिवसंतो गाउयम्मि बोद्धव्वो । जोयणदिवसपुहुत्तं पक्खंतो पण्णवीसाओ ॥६१२॥ (नि. ३३)

भरहम्मि अद्धमासो जंबुद्दीवम्मि साहिओ मासो।वासं च मणुयलोए वासपुहुत्तं च रुयगम्मि॥६१३॥(नि. ३४)

खेत्तमसंखेज्जंगुलभागं पासंतमेव कालेणं । आवलियाए भागं भूयमणागयं च जाणाइ ॥६१४॥

तत्थेव य जे दव्वा तेसिं चिय जे हवंति पज्जाया । इय खेत्ते कालम्मि य जोएज्जा दव्वपज्जाए ॥६१५॥

संखेज्जंगुलभाए आवलियाएवि मुणइ तइभागं । अंगुलमिह पेच्छंतो आवलियंतो मुणइ कालं ॥६१६॥

आवलियं मुणमाणो संपुण्णं खेत्तमंगुलपुहुत्तं । एवं खेत्ते कालं काले खेत्तं च जोएज्जा ॥६१७॥

संखिज्जम्मि उ काले दीवसमुद्दाऽवि होंति संखिज्जा। कालम्मि असंखिज्जे दीवसमुद्दा य भइअव्वा १८(नि. ३५)

काले असंखए दीवसागरा खुड्डया असंखेज्जा । भयणिज्जा य महल्ला खेत्तं पुण तं असंखेज्जं ॥६१९॥

'अंगुले'त्यादि ॥ 'हत्थम्मी'त्यादि ॥ 'भरहम्मी'त्यादि ॥ अङ्गुलं चावलिका च अङ्गुलावलिके तयोरङ्गुलावलिकयोर्भागं 'असंखं'असङ्ख्येयं पश्यत्यवधिज्ञानी, एतदुक्तं भवति–अङ्गुलासंख्येयभागावगाढानि योग्यद्रव्याणि पश्यन्नावलिकासंख्येयभागकालाभ्यन्तरे वृत्तान् भाविनश्च पर्यायान् जानाति, न क्षेत्रकालौ साक्षादिति भावना, तथा 'दोसु संखेज्ज'त्ति द्वयोरङ्गुलावलिकयोः संख्येयौ भागौ पश्यति, अङ्गुलसंख्येयभागं पश्यन्नावलिकाया अपि संख्येयमेव भागं पश्यतीत्यर्थः, भावना प्राग्वत्, तथाऽङ्गुलं सम्पूर्णं क्षेत्रतः पश्यन् कालतः आवलिकान्तः पश्यति, आवलिका दृश्यमाना सम्पूर्णा कालतः क्षेत्रतोऽङ्गुलपृथक्त्वं दर्शयत्यवधिज्ञानिनः, पृथक्त्वं द्विप्रभृति आनवभ्यः, इति गाथार्थः ॥६११॥ हस्त इति हस्तविषयः क्षेत्रतोऽवधिः कालतो मुहूर्त्तान्तः, भिन्नं मुहूर्त्तमित्यर्थः, अवध्यवधिमतोरभेदोपचारादवधिः पश्यतीत्युक्तं, तथा दिवसान्तः कालं पश्यतः क्षेत्रतो 'गव्यूत'इति गव्यूतविषयो बोद्धव्यः, योजनं तु पश्यन् दिवसपृथक्त्वं पश्यति, तथा पक्षान्तः–भिन्नं पक्षं पश्यन् क्षेत्रतः पञ्चविंशतियोजनानि पश्यति । तथा भरतक्षेत्रविषयेऽवधावर्धमासः, एकः पक्ष इत्यर्थः,तथा जम्बूद्वीपविषयेऽवधौ साधिको मासः, वर्षं च मनुष्यलोकविषयेऽवधौ, मनुष्यलोकोऽर्द्धतृतीयद्वीपसमुद्रपरिमाणः, वर्षपृथक्त्वं च–वर्षसहस्रं वा रुचकद्वीपाख्यबाह्यद्वीपविषयेऽवधाववगन्तव्यमिति गाथा (द्वया)र्थः ॥६१२–६१३॥ भाष्यकार आह–'खेत्त'मित्यादि । अंगुलासंखेज्जभागं खेत्तं पासंतो तमेव–असंखेज्जभागं आवलियाए 'कालेणं' कालं अंगीकिच्च मुणति अतीतमणागयं च, उपचारेण ॥६१४॥ यत आह–

'तत्थेव'इत्यादि, 'संखेज्जे'त्यादि 'आवलिय'मित्यादि, शेषं भावितं सुगमं वा ॥६१५–६१६–६१७॥ किं बहुना?, संख्यायते

अवधौ क्षेत्रकालप्रतिबंधः

दिवसपक्षमासादिभिरिति संख्येयः, स चैकवर्षलक्षणोऽपि भवति ततश्च तुशब्दविशेषणात् संख्येयो वर्षसहस्रात् परतोऽभिगृह्यते, अत एवोक्तं–"वाससहस्सं च रूपगंमि"त्ति, कलनं कालः कलासमूहो वा तस्मिन् संख्येये कालेऽवधिज्ञानगोचरे सति क्षेत्रतस्तस्यैवावधेर्गोचरतया द्वीपसमुद्रा अपि भवन्ति संख्येयाः, अपिशब्दात् महानेकोऽपि तदेकदेशोऽपि, क्षेत्रप्रमाणस्यैव प्रस्तुतत्वात् संख्यायाश्चाप्रयोजकत्वात्, तथा कालेऽसंख्येये–पल्योपमादौ अवधिविषये सति तस्यैवासंख्येयकालपरिच्छेदकस्यावधेः क्षेत्रतः परिच्छेद्यतया द्वीपसमुद्रास्तु 'भक्तव्याः' विकल्पयितव्याः, कथं ?, कदाचिदसंख्येया एव, इहस्थस्य पुंसोऽसंख्येयद्वीपोदधिविषयावधिज्ञानोत्पत्तेः, कदाचित् संख्येया महान्तः, क्षेत्रप्रमाणस्य प्रस्तुतत्वादित्युक्तं, कदाचित्त्वेकस्याप्येकदेशः स्वयंभूरमणतिर्यगवधेः, तस्यार्द्धरज्जुप्रमाणाम्भोनिधिसंस्थितत्वात्, कालासंख्येयकलघुत्वेन च तदेकदेशोपलब्धेः स्वयंभूरमणविषयमनुष्यबाह्यावधेर्वा, योजनापेक्षया तु सर्वेष्वपि पक्षेषु तुल्यमेव क्षेत्रं विवक्षितकालासंख्येयकाक्रोडितत्वादिति गाथार्थः ॥६१८॥ एतामेव भजनां व्याचष्टे भाष्यकारः—

'काले'इत्यादि भावितयदनुसर्तव्येति ॥६१९॥ एवं तावत् परिस्फुटं न्यायमङ्गीकृत्य क्षेत्रवृद्धया कालवृद्धिरनियता कालवृद्धया च क्षेत्रवृद्धिरुक्ता ॥ साम्प्रतं द्रव्यक्षेत्रकालभावापेक्षया यस्य वृद्धौ यद्वृद्धिर्भवति न भवति वा तदभिधित्सुराह–

काले चउण्ह वुड्ढी कालो भइयव्वु खेत्तवुड्ढीए । वुड्ढीए दव्वपज्जव भइयव्वा खित्तकालाओ ।६२०। (नि. ३६)

फाले पवड्ढमाणे सव्वे दव्वादओ पवड्ढंति । खेत्ते कालो भइओ वड्ढंति उ दव्वपज्जाया ॥६२१॥
भयणाए खेत्त–काला परिवड्ढंतेसु दव्वभावेसु । दव्वे वड्ढइ भावो भावे दव्वं तु भयणिज्जं ॥६२२॥

'काले'इत्यादि । काले-आवलिकासंख्येयभागादौ वर्द्धमाने सति 'चउण्ह वुड्ढी' नियमात् क्षेत्रादीनां वृद्धिरिति प्रतिज्ञा, कुतः ?, कालात् सूक्ष्मसूक्ष्मतरसूक्ष्मतमत्वात् क्षेत्रादेः, तथाहि—यदि नाम स्थूरस्य कालस्य वृद्धिस्तन्ननु क्षेत्रस्य सुतरामेव तया भवितव्यं, तदेकसमयवृद्धावितरस्य प्रदेशकोटीकोटीवृद्धेः, 'नत्रि अत्थि नवि य होहिति उछावो' इत्यादिन्यायतोऽसद्भाव उच्यते, अत एव वक्ष्यति-'अङ्गुलसेढीमेत्ते उस्सप्पिणीउ असंखेज्जे' ति, एवं क्षेत्रवृद्धौ द्रव्यवृद्धिर्देश्या तस्यार्थशून्यत्वात्, तदुपलब्धौ तदुपलब्धेरित्यर्थः, एवं द्रव्यवृद्धौ पर्यायवृद्धिः, तस्य पर्यायाविनाभूतत्वात्, तद्दृष्टौ च तद्दृष्टेः, तथा 'कालो भइयव्वो खेत्तवुड्ढीए'त्ति क्षेत्रवृद्धौ कालो भाज्य इति प्रतिज्ञा, कुतः ?, प्रदेशान्तरोक्तविरोधप्रसङ्गात्, यदि हि नियमेन क्षेत्रवृद्धावपि कालवृद्धिर्भवेत् ततोऽसंख्येयासूत्सर्पिण्यवसर्पिणीष्वतिक्रान्तास्वेकमङ्गुलमात्रं लभ्यत इतिकृत्वा, यदुक्तं 'हत्थंमि मुहुत्तंतो'त्ति तद् व्याहन्यते, एवं वक्तव्यं स्यात् 'हत्थंमि असंखिज्जाओ उस्सप्पिणिओ हवंति नायव्वा' । 'तथा वुड्ढी य दव्वपज्जव' त्तीत्यादि, द्रव्यपर्याययोर्वृद्धौ सत्यां क्षेत्रकालौ भाज्यावेव, यतः प्रागुपलब्ध एव क्षेत्रमात्रादावनुसमयं तथा तथा क्षयोपशमाविर्भावतोऽपूर्वापूर्वद्व्यणुकादिसूक्ष्मपरिणामविशिष्टं पुद्गलास्तिकायं पश्यति, अतो द्रव्यवृद्धाविमौ भाज्यौ, न तु पर्याया भाज्याः, अपि तु पर्यायवृद्धौ द्रव्यं भाज्यं, कदाचिद्वर्द्धते, द्रव्यवृद्धौ पर्यायवृद्धेर्ध्रुवत्वात्, कदाचिन्न वर्द्धते, एकस्मिन्नेवाणौ तत्प्रभूततरोपलब्धेरिति गाथार्थः ॥६२०॥ 'काले'इत्यादि 'भयणाए'इत्यादि भाष्यगाथाद्वयं गतार्थं ॥६२१-६२२॥ उत्तरगाथासम्बन्धनार्थं प्रश्नयति—

अण्णोऽण्णनिबद्धाणं जहण्णयाईण खित्तकालाणं ।समयप्पएसमाणं किं तुल्लं होज्ज हीणहियं ? ॥६२३॥

सुहुमो य होइ कालो तत्तो सुहुमयरं हवइ खेत्तं । अंगुलसेढीमित्ते ओसप्पिणिओ असंखेज्जा ॥२४॥ (नि.३७)

खेत्तं बहुयरमंगुलसेढीमित्ते पएसपरिमाणं। जमसंखेज्जोसप्पिणिसमयसमं थोवओ कालो ॥६२५॥
कालो खित्तं दव्वं भावो य जहुत्तरं सुहुमभेया। थोवासंखाणंतासंखा य जमोहिविसयम्मि ॥६२६॥
सव्वमसंखेज्जगुणं कालाओ खेत्तमोहिविसयम्मि। अवरोप्परसंबद्धं समयपएसप्पमाणेणं ॥६२७॥
खेत्तपएसेहिंतो दव्वमणंतगुणियं पएसेहिं। दव्वेहिंतो भावो संखगुणोऽसंखगुणिओ वा ॥६२८॥
भणियं खेत्तपमाणं तम्माणमियं भणामि दव्वमओ। तं केरिसमारंभे परिणिट्ठाणे विमज्झे वा? ॥६२९॥

'अण्णोण्णे'त्यादि 'अन्योऽन्यं' मिथः निबद्धयोरेतावत्क्षेत्रोपलम्भे इत्येवमादिनियमितयोर्जघन्यमध्यमोत्कृष्टभेदभिन्नयोः क्षेत्रकालयोरवधिविषययोरिति गम्यते, किं?, समयमानं प्रदेशमानं च किं तुल्यं स्यादाधिकं वाशब्दाद्धीनमिति?, उच्यते, सर्वत्र मतियोगिनः सत्यावलिकासंख्येयभागादेः कालादसंख्येयगुणं क्षेत्रं ॥६२३॥ यत आह—'सुहुमो य'इत्यादि। सूक्ष्म एव भवति कालः, उत्पलपत्रशतव्यतिभेदोदाहरणसिद्धत्वात्, ततोऽपि सूक्ष्मतरं क्षेत्रं भवति, यतोऽङ्गुलश्रेणिमात्रे क्षेत्रे प्रतिप्रदेशं समये न्हियमाणे सत्यवसर्पिण्योऽसंख्येयाः समतिगच्छन्तीत्यतः स्तोकः कालः स्थूरत्वादिति गाथार्थः ॥६२४॥ 'खित्त'मित्यादि भाष्यगाथा गतार्था ॥६२५॥ विशेषाभिधानार्थमाह, अत्र च-'कालो' इत्यादि। कालादयो यथोत्तरं सूक्ष्माः, कुतः? इत्याह—यतः 'स्तोकाः' अल्पाः, किं सामान्येनैव?, नेत्याह-स्तोका एते अवधिविषय एव, तस्मात् न सामान्येनेति गाथार्थः ॥६२६॥ तथा-'सव्व'मित्यादि ओधिविसयं खेत्तं अंगुलासंखेज्जभागादि कालओ-आवलियअसंखेज्जभागादिलक्खणओ असंखेज्जगुणं, किंविशिष्टं यदित्याह परस्परसंम्बद्धं जं अंगुलावलिकयोरसंख्येयादि, केनेत्यत आह-समयमानेन प्रदेशमानेन चेति गाथार्थः ॥६२७॥ एवम्- 'खेत्त'मि-

त्यादि, क्षेत्रप्रदेशेभ्योऽङ्गुलासंख्येयभागादिभ्यः द्रव्यमनन्तगुणं, कैरित्याह-प्रदेशैरणुभिरित्यर्थः, तथा द्रव्येभ्यो भावः संख्येयगुणः 'दो पज्जवे दुगुणिये'त्तिवचनात्, असंख्येयगुणो वा एकैकस्मादिति गाथार्थः ॥६२८॥ निगमयन्नाह-'भणिय'मित्यादि, उक्तं च त्रेधा क्षेत्रपरिमाणमवधेः, द्वारं, उत्तरद्वारसम्बन्धनार्थमाह-अत ऊर्ध्वं द्रव्यं 'भणामि' वच्मि, किंविशिष्टं ? 'तन्मानमितं' जघन्याद्यवधिक्षेत्रप्रमाणमितं, किमिति ?-अवधिविषयद्रव्यावधिकत्वादेतन्निरूपणायाः, अन्यथा नानेनार्थः स्यात्, अत एतदारम्भकद्रव्यस्वरूपजिज्ञासुः प्रश्नयति—'तद्' द्रव्यमवधिज्ञानगोचरमङ्गुलासंख्येयभागावरगादि च 'कीदृशं' कीदृक्स्वरूपं 'आरम्भे'प्रस्थाने ?, तथा 'परिनिष्ठाने' भ्रंशे, विमध्ये चेति गाथार्थः ॥६२९॥ आचार्य उत्तरमाह–

तेयाभासादव्वाण अतरा एत्थ लभइ पट्ठवओ। गुरुलहु अगुरुयलहुयं तंपि य तेणेव निट्ठाइ ॥६३०॥ नि. ३८

पट्ठवओ नामावहिनाणस्सारंभओ तयाईए। उभयाजोग्गं पेच्छइ तेयाभासंतरे दव्वं ॥६३१॥

गुरुलहु तेयासन्नं भासासन्नमगुरुं च पासेज्जा। आरंभे जं दिट्ठं दट्ठूणं पडइ तं चेव ॥६३२॥

तेयाभासाजोग्गं किमजोग्गं वा तयंतराले जं। ओरालियाइतणुवग्गणा कमेणं तयं सज्झं ॥६३३॥

ओरालविउव्वाहारतेयभासाणपाणमणकम्मे। अह दव्ववग्गणाणं कमो विवज्जासओ खेत्ते ॥६३४॥ नि ३९.

कुड्यण्णगोविसेसोवलक्खणोवम्मओ विणेयाणं। दव्वाइवग्गणाहिं पोग्गलकायं पयंसेंति ॥६३५॥

एगा परमाणूणं एगुत्तरवड्ढिया तओ कमसो। संखेज्जपएसाणं संखेज्जा वग्गणा होंति ॥६३६॥

तत्तो संखाईआ संखाइयप्पएससमाणाणं । तत्तो पुणो अणंताणंतपएसाण गंतूणं ॥६३७॥
ओरालियस्स गहणप्पाओग्गा वग्गणा अणंताओ । अग्गहणप्पाओग्गा तस्सेव तओ अणंताओ ॥६३८॥
एवमजोग्गा जोग्गा पुणो अजोग्गा य वग्गणाऽणंता । वेउव्वियाइयाणं नेयं तिविगप्पमिक्केक्कं ॥६३९॥
एक्केक्कस्साईए पज्जंतम्मि य हवंतिऽजोग्गाइं । उभयाजोग्गाइं जओ तेयाभासंतरे पढइ ॥६४०॥
कम्मोवरिं धुवेयरसुण्णेयरवग्गणा अणंताओ । चउधुवणंतर तणुवग्गणा य मीसो तहाऽचित्तो ॥६४१॥ (नि.४०)
निच्चं होंति धुवाओ इयरा लोए न होंतिवि कयाई । एकोत्तरवुड्ढीए कयाइ सुण्णंतराओऽवि ॥६४२॥
जाओ हवंति ताओ सुण्णंतरवग्गणात्ति भण्णंति । निययं निरंतराओ होंति असुण्णंतराउत्ति ॥६४३॥
धुवणंतराइं चत्तारि जं धुवाइं अणंतराइं च । भेयपरिणामओ जा सरीरजोग्गत्तणाभिमुहा ॥६४४॥
खंधचुगदेहजोग्गत्तणेण या देहवग्गणाउत्ति । सुहुमो दरगयबायरपरिणामो मीसयक्खंधो ॥६४५॥
जइणसमुग्घायगईएँ चउहिं समएहिं पूरणं कुणइ । लोगस्स तेहिं चेव य संहरणं तस्स पडिलोमं ॥६४६॥
जइणसमुग्घायसचित्तकम्मपोग्गलमयं महाखंधं । पइ तस्समाणुभावो होइ अचित्तो महक्खंधो ॥६४७॥
सव्वुक्कोसपएसो एसो केई न चायमेगंतो । उक्कोसपएसो जमवगाहट्ठिइओ चउट्ठाणो ॥६४८॥
अट्ठप्फासो य जओ भणिओ, एसो य जं चउप्फासो । अण्णेऽवि तओ पोग्गलभेया संतित्ति सद्धेयं ॥६४९॥
एगपएसोगाढाण वग्गणेगा पएसवुड्ढीए । संखेज्जोगाढाणं संखेज्जा वग्गणा तत्तो ॥६५०॥

तत्तो संखाईया संखाईयप्पएससमाणाणं। गंतुमसंखेज्जाओ जोग्गाओ कम्मुणो भणिया ॥६५१॥
तत्तो संखाईया तस्सेव पुणो हवंति जोग्गाओ। माणसदव्वाईणवि एवं तिविगप्पमेक्केक्कं ॥६५२॥
एगा समयठिईणं संखेज्जा संखसमयठिइयाणं। होंति असंखेज्जाओ तओ असंखेज्जसमयाणं ॥६५३॥
एगा एगगुणाणं एगुत्तरवुड्ढिया तओ कमसो। संखेज्जगुणाण तओ संखेज्जा वग्गणा होंति ॥६५४॥
संखाईयगुणाणं संखाईया य वग्गणा तत्तो। होंति अणंतगुणाणं दव्वाणं वग्गणाऽणंता ॥६५५॥
वण्णरसगंधफासाण होंति वीसं समासभेएणं। गुरुलहुअगुरुलहूणं बायरसुहुमाण दो वग्गा ॥६५६॥
भणियं तेयभासाविमज्झदव्वावगाहपरिमाणं। ओहिन्नाणारंभो परिणिट्ठाणं च तं जेसुं ॥६५७॥
गुरुलहुदव्वारद्धो गुरुलहुदव्वाइं पिच्छिउं पच्छा। इयराइं कोइ पेच्छइ विसुज्झमाणो कमेणेव ॥६५८॥
अगुरुलहुसमारद्धो उड्ढं वड्ढइ कमेण सो नाहो। वड्ढंतो चिय कोई पेच्छइ इयराइं सयराहं ॥६५९॥

'तेया' इत्यादि। तैजसं च भाषा च तैजसभाषे तयोर्द्रव्याणि२ तेषां तैजसभाषाद्रव्याणामन्तरात्–अन्तरे 'अर्थाद्विभक्तिपरिणतिः' अथवा सप्तम्येव पाठः, 'एत्थ'त्ति अत्रान्यदेव तदयोग्यं द्रव्यं 'लभते' पश्यति, कः ? इत्याह 'पट्ठवओ'त्ति अवधिज्ञानप्रारम्भकः–अवधिज्ञानप्रतिपत्ता, किंविशिष्टं तदित्याह–'गुरुलहु अगुरुलहुयं'न्ति, अस्यार्थः–गुरु च लघु च गुरुलघु न गुरुलघु अगुरुलहु, एतदुक्तं भवति–गुरुलघुपर्यायोपेतं वा अगुरुलघ्विति, इह च तैजसद्रव्यासन्नं गुरुलघु भाषाद्रव्यासन्नमगुरुलघ्विति, तदपि चावधिज्ञानं-तदावरणोदयात् प्रसन् मत्तेनैव द्रव्येणोपलब्धेन सता निष्ठां याति–प्रतिपतति, अपिशब्देन ज्ञापयति–प्रतिपातिन्ययं न्यायो, न

त्ववश्यमिदं प्रतिपत्तव्येव, चशब्दस्यास्यैवकारार्थत्वेनावधारणार्थत्वात्, एतदेवैवं निष्ठां याति, न शेषज्ञानानीति गाथार्थः 'पट्टवओ' इत्यादि गतार्थम् ॥६३०-३१-३२॥ अमुमर्थं श्रुत्वा शिष्यः प्रश्नयति—'तेयाभासा'इत्यादि । तैजसभाषयोर्यद्योग्यं—अनुकूलं द्रव्यं तत् 'किं' कतमदिति कथय भगवन्!, तयोर्वाऽन्तराले यदयोग्यं कतिप्रदेशं वा तदिति, अत्रोच्यते,'ओरालियाइ'त्ति परमाण्वौदारिकवैक्रियादितनुवर्गणाक्रमेण साध्यमिदानीं भवतः अन्यथा तत्प्रतिपत्त्यसम्भवाद्, अत उक्तं भगवता—'ओराले' त्यादि । द्रव्यवर्गणाक्रमः, क्षेत्रतस्त्वयमेव विपर्यासो भवति, सांन्यासिकं चैतत्पदमिति समुदायार्थः ॥६३३—३४॥ आह—किमेता वर्गणाः प्ररूप्यन्ते ?, उच्यते, शिष्यासम्मोहार्थं, तथा चोदाहरणम्—'कुती' त्यादि । इह भरतक्षेत्रे मगधाजनपदे प्रभूतगोमण्डलस्वामी कुचिकर्णो नाम धनपतिरभवत्, स च तासां गवामतिबाहुल्यात् सहस्रादिसंख्यामितानां पृथक्पृथगनुपालनार्थं प्रभूतान् गोपांश्चकार, तेऽपि च परस्परसम्मिलितासु तासु गोष्वात्मीयाः खल्वजानानाः सन्तोऽकलहयत्, तांश्च परस्परतो विवदमानानुपलभ्यासौ तद्व्यामोहार्थमधिकरणव्यवच्छित्तये च शुद्धपञ्चवर्णसंयोगवर्णोपलक्षितानां गवां प्रतिगोपं विभिन्ना वर्गणा व्यवस्थापितवान्, एवं कुचिकर्णसमः शास्ता गोपसमेभ्यो विनेयेभ्यो गोवर्गसदृशं पुद्गलास्तिकायं परमाण्वादिवर्गणाक्रमेण व्यवस्थापितवान्, तद्यथा—'एगा' इत्यादि गाथाओ, इयमासां भावना—इह वर्गणासमूहो मेलकः, तत्र 'एगपएसियाणं एगा, एवं आवेक्केक्कपरमाणुवड्ढीए संखिज्जपदेसियाणं संखेज्जाओ, तओ एगुत्तरवड्ढीए चेव असंखेज्जपदेसियाणं असंखेज्जाओ, एवमेगुत्तरवड्ढीए चेव अणंतपएसियाणं अणंताओ, एयाओ सव्वाओऽवि ओरालियस्स अग्गहणपाओग्गाओ अइसुहुमत्तणओ, पुणो जोग्गाओ तत्तत्परमाणुयोगे बादरपरिणामोपपत्तेः, पुनरयोग्यास्तत्परमाणुमीलने सूक्ष्मत्वेनायोग्यत्वात्, इतोऽपि चायोग्यास्तत्परमाणुमीलनेनातिबादरत्वात् पुनर्योग्यास्तत्परमाणुमीलनेन सूक्ष्म-

त्यादिरयेवमादि यावत्कार्मणं, स्थापना—जाव १० संखेज्जाणं सं १५ असं० असं २० अणं० अणं २५ जाव चउधुवणंतरवग्गणा, एतार्थनम्—उरालअजोग ३। विउव्व अजोग्ग ३। आहारअजोग्ग ३। तेयअजोग्ग ३। भासाअजोग्ग ३। आणुअजोग्ग ३। मणअजोग्ग ३। कम्मअजोग्ग ३। धुव०। अधुव०। सुन्न०। पत्तय०। सुन्न०। बायर०। सुन्न०। सुहुम०। सुन्न। अचित्त। धुवादिष्वंकयोजनैवं-धुव। ९१।९२।९३। अधुव ९४।९५।९६। (शून्य) ९७।९९।१०१। शून्यांतर १०२—१०३। १०४। (नायं क्रमः कर्मग्रन्थानुसारी) मिश्रे वक्ष्यत्यचित्तं च, तत्र 'कर्मोपरी'त्यादेर्भावना—कर्मयोग्यानन्तरद्रव्यवर्गणैकाधिकसूक्ष्मतरत्वेनाद्यपरिणामवत्याः सत्सारम्यैकोत्तराः स्वस्थानानन्तपरमाणूपचिततथामूर्तिसामान्यात् सूक्ष्मसूक्ष्मतरपरिणामवत्यः सकललोकव्यापिन्यो विनधिकानन्तकालद्व्यपोऽनन्ताः ध्रुवपरिणामोपेतत्वात् पञ्चास्तिकायवन्नित्याः—शाश्वता इति वर्गणा ध्रुववर्गणाः, अध्रुवास्त्वेतद्विपरीताः (भाष्याननुयायि पाठान्तरमिदमग्रतः 'एवमनेनैव वृद्धिक्रमेणे'त्यादेरर्थाक्, न चेदं भूयसीषु प्रतिषु दृश्यते) ॥६३५—४०॥

'कम्मोवरि'मित्यादि। कर्मग्रहणेन चात्रपदैकदेशाश्रयणात् कर्मवर्गणा आश्रीयन्ते, तदुपर्यव्यवहिता एकादिप्रदेशवृद्ध्याऽनन्ता ध्रुववर्गणा, ध्रुवत्वं च सदाभावविशेषाव्यभिचारात्, नत्संख्येयकालादुपर्यवस्थानं स्कन्धानां क्वचित्प्रतिपादितं, तदुपर्येकादिप्रदेशवृद्ध्या अनन्ता एवेतराः अध्रुववर्गणा इत्यर्थः, अध्रुवत्वं चैतासां कदाचित्तत्संख्याविनधिकानन्तकालद्व्यवृत्तयो न स्युरपि वर्गणाः अध्रुवाश्रयाश्रयणात्, तदनन्तरमेकादिप्रदेशवृद्धा अनन्ताः शून्यवर्गणाः, अत्रैतासां सर्वदा तत्तत्संख्याकस्थानान्तरा एकान्तरसंख्याविशेषः शून्य एव, अत एव चैतासां आगमे संतरनिरन्तरवग्गणेति पर्यायशब्दः पठ्यते, तदनन्तरमेकादिप्रदेशवृद्ध्यैव वृन्दः, शून्येतरवर्गणानामनन्तकाश्चत्वारः पठ्यन्ते, अत्र चैवं अक्षराणामभिसम्बन्धः—शून्याश्चेतराश्च शून्येतराः, शून्येतराश्च ता वर्गणाश्च शून्येतरवर्ग-

णाः, ताश्च कियन्त्यो भवन्ति ? अत्र आह–अनन्ताः, अनन्ता अपि शून्येतरत्वाभ्यां समुदिताः सत्योऽनन्ता आहोस्वित्प्रतिव्यक्त्यनन्ताः किंवान्यथेत्यत्र आह—'चउधुवणंतरतणुवग्गणा य' चतस्रश्च ता ध्रुवाश्च चतुर्ध्रुवा, ध्रुवग्रहणेन चात्र शून्यवर्गणा आगमपरिपठिता गृह्यन्ते, यत्र उक्तम्—"उक्कोसंतनिरंतराओ उवरिं एगे रूवे छूढे पढमधुवसुण्णवग्गणा होइ" ता एव यदेकदेशोच्चारणात्, अध्रुवास्तु तद्विपरीताः। एवमनेनैव वृद्धिक्रमेण शून्यानि–व्यवहितान्यन्तराणि यासां ताः शून्यान्तराः, ताश्च लोके कदाचिन्न भवन्त्यपि विचित्रत्वाद्विस्रसागतिवशपुद्गलास्तिकायगतेः। 'एगुत्तरवड्ढीए' इत्यादि (गाथा) द्वयव्याख्यानं प्रकटार्थम्। 'चउधुवणं'ति चतुःसंख्याप्रमितत्वाच्चत्वारि ध्रुवाः नित्यत्वात्, अनन्तराः स्वस्थानेऽनन्तपरमाणुनिर्वृत्ता अपि सत्य एकैकप्रदेशवृद्धत्वात्, तथा भेदाभेदपरिणामाभ्यां या औदारिकादिशरीरयोग्यत्वाभिमुखाः। 'खंधे' इत्यादि। स्कन्धः मूर्तिद्वयमूर्तियोग्यत्वाभिमुखा वा'या' इति द्रव्यवर्गणाः। 'मीसो'त्ति व्याचिख्यासुराह—'सुहुमो'त्ति सूक्ष्म एवार्धगतबादरपरिणामस्तदभिमुखो मिश्र उच्यते। ६४१–६४२–६४३–६४४–६४५। अचित्तमहास्कन्धस्त्वेवं भवतीत्याह—'जईण' इत्यादि। प्रथमे समये दण्डमित्येवमाद्यष्टसामयिक इति गाथार्थः ॥६४६॥ आह–महास्कन्धस्यैवं विशेषणमनर्थकं अचित्तत्वाव्यभिचारित्वेन व्यवच्छेद्याभावात्, न, केवलिसमुद्घाते सचित्तकर्मपुद्गललोकव्यापिमहास्कन्धव्यवच्छेदित्वात् विशेषणस्य, तथाहि–'जइण' इत्यादि सुगमा ॥६४७॥ अत्र परमतमाह—'सव्वुक्कोसे' त्यादि। केचन व्याचक्षते–अयमेव सकलस्कन्धेभ्य उत्कृष्टप्रदेशनिर्वृत्तः, ततः किमित्याह–'न चायमेकान्तो' न चायं नियम एव, दुष्प्रतिष्ठितत्वात्, कः प्रत्ययः इत्याह–यस्मादुत्कृष्टप्रदेशिकोऽन्यस्मात् प्रतियोगिनोऽवगाहनास्थितिभ्यां चतुःस्थानो भवतीति, उक्तं प्रज्ञापनायाम्—"उक्कोसपएसियाणं भंते ! खंधाणं केवइया पज्जवा पण्णत्ता ?, गोयमा ! अणंता, से केणट्ठेण

भंते ! एवं वुच्चइ ?, गोयमा ! उक्कोसपदेसिए खंधे उक्कोसपएसियस्स खंधस्स दव्वट्ठयाए तुल्ले' एकैकद्रव्यत्वात्, पदेसट्ठयाए तुल्ले, उत्कृष्टप्रदेशिकस्यैव प्रस्तुतत्वात्, ओगाहणट्ठयाए चउट्ठाणवडिए असंखेज्जतिभागहीणे वा संखेज्जइभागहीणे वा संखेज्जगुणहीणे वा असंखेज्जगुण० वण्णगंधरसफासपज्जवेहिं छट्ठाणवडिए'' । तथा चाह–'अट्ठ' इत्यादि । 'अट्ठफासो त जओ भणिओ,' उक्कोसपएसोत्ति अणुवट्टइ, व्यतिरेकमाह–एष चाचित्तमहास्कन्धः यद्–यस्माच्चतुःस्पर्शः, अन्येन तुल्य इत्यर्थः, तस्मान्न तत्परवचनं साधीयः, ततोऽपि किमित्याह–ततोऽन्येऽपि स्कन्धा एतद्बृहत्तराः सन्तीति थद्धपमित्युक्ता द्रव्यवर्गणाः ६४८–६४९ । साम्प्रत विपर्यासितः क्षेत्र इति व्याचिख्यासुराह–'एगपएसो' इत्यादि । एकप्रदेशावगाहिस्वभावानामेका वर्गणा, सा चाणुकाद्यनन्ताणुकाऽपि स्यात्, ततः देशवृद्ध्या संख्येयावगाढानां संख्येया इति गाथार्थः ॥६५०॥ 'तत्तो' इत्यादि । ततोऽसंख्येयावगाढानामसंख्येया यावत् कर्मणो-ग्रऽयोग्या भवन्ति ॥६५१॥ 'तत्तो' इत्यादि, ततः असंख्येयास्तस्यायोग्या भवन्ति बादरत्वात्, एवं भवआदिष्वप्यारात् औदारिका-दिति क्षेत्रवर्गणाः ॥६५२॥ कालत आह–'एक्का' इत्यादि प्रतीतार्थव इति कालवर्गणाः ॥६५३॥ भावत आह–'एगा' इत्यादि 'संखा' इत्यादि स्पष्टार्थं ॥६५४–६५५॥ नवरमनन्तगुणान्यपि भावाधाराणि द्रव्याणि भवन्तीति ता अप्यनन्ताः । 'वण्णे'त्यादि ॥ पंच वण्णा दोन्नि गंधा पंच रसा अट्ठ फासा एवं वीसं तथा' गुरुलघु 'त्ति गुरुलघुपर्यायाणां बादराणां ' अगुरुलहुगं 'ति अगुरुलघुपर्यायाणां सूक्ष्माणामेतावेव द्वौ वर्गाविति ॥६५६॥ प्रकृतं निगमयन्नाह–'भणिय' मित्यादि स्पष्टार्था, नवरं येषु चद्रव्येषु परिनिष्ठानं तदपि भणितमिति ॥६५७॥ अत्र च 'गुरुलहु' इत्यादि । 'गुरुलघुद्रव्यारब्धः' तैजसप्रत्यासन्नारब्धः इत्यप्रकाशयाभिप्रायः, किं करोति आह–गुरुलघूनि द्रव्याणि दृष्ट्वा औदारिकादीनीत्यभिप्रायः, कश्चित्तु क्रमेण विशुद्ध्यमान इतराणि-

अगुरुलघूनि भाषादीनि पश्यति, यस्तु न विशुद्ध्यते स तेष्वेव कियन्तमपि कालमास्ते पतति चेति गाथार्थः ॥६५८॥ तथा 'अगुरु' इत्यादि। भाषाद्रव्यारब्ध ऊर्ध्वमेव वर्धते क्रमेण, नाधः, आधस्त्येष्वस्य का वार्त्तेत्याह—कश्चिदितराण्यपि पश्यति, वर्धमानः सन् पडुत्वादिति गाथार्थः ॥६५९॥

गुरुलहुमगुरुलहुं वा तेयाभासंतरेति निद्दिट्ठं। ओरालाईयाणं किं गुरुलहुमगुरुलहुयं वा? ॥६६०॥

ओरालियवेउव्वियआहारगतेय गुरुलहू दव्वा। कम्मगमणभासाई एयाई अगुरुलहुयाइं ॥६६१॥ (नि. ४१)

गुरुयं लहुयं उभयं नोभयमिति वावहारियनयस्स। दव्वं लेट्ठुं दीवो वाऊ वोमं जहासंखं ॥६६२॥

निच्छयओ सव्वगुरुं सव्वलहुं वा न विज्जए दव्वं। बायरमिह गुरुलहुयं अगुरुलहुं सेसयं सव्वं ॥६६३॥

जइ गुरुयं लहुयं वा न सव्वहा दव्वमत्थि तो कीस। उड्ढमहोऽवि य गमणं जीवाणं पोग्गलाणं च? ॥६६४॥

उड्ढं लहुकम्माणं भणियं गुरुकम्मणामहो गमणं। जीवा य पोग्गलाविय उड्ढाहोगामिणो पायं ॥६६५॥

अन्नच्चिय गुरुलहुया अन्नो दव्वाण वीरियपरिणामो। अन्नो गइपरिणामो नावस्सं गुरुलहुनिमित्तो ॥६६६॥

परमलहुगमणूणं जं गमणमहोऽवि तत्थ को हेऊ?। उड्ढं धुमाईणं थूलयराणंपि किं कज्जं? ॥६६७॥

किं च विमाणाईणं नाहोगमणं महागुरूणंपि। तणुपरदेहो देवो हवखुवइ व किं महासेलं? ॥६६८॥

अह तस्स वीरियं तं तो नाहोगमणकारणं गुरुया। उड्ढगइकारणं वा लहुया एगंतओ जुत्ता ॥६६९॥

विरियं गुरुलहुयाणं जहाहियं गइविवज्जयं कुणइ। तह गइठिइपरिणामो गुरुलहुयाओ विलवेइ ॥६७०॥

भणिओ खित्तद्धाणं सुद्धाणं चिय परोप्परनिबंधो । इह ताणं चिय भण्णइ दव्वेण समं निबंधोऽयं ॥६७१॥

पुच्छा–'गुरुलघु'इत्यादि स्पष्टा ॥६६०॥ उत्तरमाह–'ओरालियं' त्यादि स्पष्टैव ॥६६१॥ नवरमादिशब्दात्प्राणापानः परिगृह्यते, अत्र च नयविचारप्रस्तावः, तौ च व्यवहारनिश्चयौ, व्यवहारत आह–'गुरुय'मित्यादि व्यवहारनयस्य गुर्वादि लेष्ट्वादि यथासंख्यम् ॥६६२॥ निश्चयत आह–' निच्छयओ ' इत्यादि, पुव्वद्धं कण्ठ्यम् , किं तदस्तीत्याह–बादरं गुरुलघ्वस्ति लेष्ट्वादि, शेषं चागुरुलघु सूक्ष्मम् ॥६६३॥ व्यवहारस्य चोद्यं कुर्वन्नाह–'जई'त्यादि, यदि सर्वगुरु सर्वलघु, वाशब्दादुभयं च द्रव्यं नास्ति, ततः किमिति जीवानामूर्ध्वाधोगमनं पुद्गलानां च ?, अयमत्राभिप्रायः—गुरुत्वनिबन्धनमधोयानं लघुत्वनिबन्धनं चोर्ध्वयानं गुरुलघुनिबन्धनं तिरश्चीनं अगुरुलघुनिबन्धनं च विमानावस्थानमिति ॥६६४॥ तथाहि–'उड्ढ'मित्यादि, गतार्था, नवरं प्रायोग्रहणमादित्यादेस्तिरश्चीनगमनात् विमानानां चावस्थानादाकाशस्य स्वास्ति(स्वस्थ)त्वे सति सकलविकल्पातिरिक्तत्वात् , तस्माद्यदधोगमनस्वभावं तद् गुरु इतरत् लघु इति द्रव्यचतुष्टयसिद्धि अबोधि व्यवहारः ॥६६५॥ उच्यते–अन्यैव च काचिद् गुरुता लघुता अन्यश्च द्रव्याणां देवादीनां वीर्यपरिणामोऽन्यश्च गतिपरिणामः, ततः किमित्याह–नावश्यं गुरुनिमित्तो लघुनिमित्त उभयनिमित्तो वा, कः ?–ऊर्ध्वाधोमात्रगमनादिप्रकारः ॥६६६॥ कुतः ?–'परम'इत्यादि । यद्–यस्मात्परमलघूनामप्यणूनाम्, अपिशब्दस्यात्र प्रयोगात्, 'गमनं' प्रापणं 'अधः' अधस्तात् तत्र 'को हेतुः' किं निमित्तं ?, किं कार्यमितियावत्, तथोर्ध्वं धूमादीनामग्राणामपि यद् गमनं तत्र 'किं कार्यं ?' को हेतुरित्यर्थः ॥६६७॥ तथा–'किं चे'त्यादि । यदि च गुरुत्वमधोगमनस्य हेतुः स्यात् ततः किमिति च विमानादीनां महागुरूणामपि नाधोगमनम् ?, एतदुक्तं भवति–लघोरप्यधोगतिपरिणामादधोगमनं, गुरोरप्यूर्ध्वगतिपरिणामादूर्ध्वगमनं, स्थितिपरिणा-

मविशेषाच्च विमानाद्यवस्थानं, तथा–तनुतरदेहो देव उत्क्षिपति किं महाशैलं यदि गुरुत्वमधोगतिकारणं स्यात् ?, ननु महीयसा मही–
ध्रेणास्याक्रमणं न्याय्यमिति गाथार्थः ॥६६८॥ 'अहे'त्यादि । अथ मन्यसे तस्य–लघोर्देवस्य 'तत्'महन्महीध्रोद्धरणं वीर्यं'तो'
इत्यादि पादत्रयं पठित्वा, अपि तु वीर्यमपि, तथाहि–वीर्यात् गुर्वप्यूर्ध्वं याति तत्स्वामान्याच्छैलवत्, लघ्वपि चाधस्तात् तत्स्वाभाव्या-
त्करताडितवाष्पवद्, तस्मादुक्तवत् ॥६६९॥ 'विरिय'मित्यादि दृष्टान्तोपसंहारः स्पष्टः, तथाहि–एवं गतिस्थितिपरिणामो गुरुलघु-
ते अतिक्रामति तस्मात् सूक्ष्मबादरभेदात् द्विविधमेव द्रव्यमबोधि निश्चयेनेति 'गुरुलघु अगुरुलघुयं चे'ति स्थापितमिति गाथार्थः
॥६७०॥ साम्प्रतमुत्तरगाथासम्बन्धनार्थमाह–'भणिओ'इत्यादि ॥ उक्तः क्षेत्रकालयोः शुद्धयोरेव परस्परनिबन्धः 'अङ्गुलिमावलि-
याणं' इत्यादिना, इह तयोरेवायं द्रव्येण सहोच्यत इति गाथार्थः ॥६७१॥ तत्र–

संखेज्ज मणोदव्वे भागो लोगपलियस्स बोद्धव्वो । संखिज्ज कम्मदव्वे लोए थोऊणयं पलियं ॥६७२॥ (नि ४२)

लोगपलियाण भागं संखइमं मुणइ जो मणोदव्वं । संखेज्जे पुण भाए पासइ जो कम्मुणो जोग्गं ॥६७३॥
सयलं लोयं पासं पासइ पल्लोवमं स देसूणं । सुद्धाण किमत्थाणे गहणमिहं खेत्तकालाणं ? ॥६७४॥
कम्मदव्वमईओ पेच्छइ दुगमित्तियंति जं भणियं । उवरिंपि तओ कमसो साहिज्जा तयणुमाणेणं ॥६७५॥

तेयाकम्मसरीरे तेयादव्वे य भासदव्वे य । बोद्धव्वमसंखेज्जा दीवसमुद्दा य कालो य ॥६७६॥ (नि. ४३)

एयाइं जओ कम्मयदव्वेहिंतोऽतिथूलयरयाइं । तेयाइयाइं तम्हा थोवयरा खेत्तकालऽत्थ ॥६७७॥

जओ कम्मदव्वेहिंतो थूलाणि 'तम्ह'त्ति तस्मात् 'त्थे'त्यत्र थोवं खेत्तं असंखेज्जदीवसमुद्दा कालोऽपि पल्योपमअसंखभागो' अत-आह-'थोवतरा सेत्तकाला' इति, कर्मद्रव्यविषये लवघौ अनन्तरातीतमूलगाथायां लोकपल्योपमयोः पृथक् पृथक् संख्येया भागा उक्ताः 'मंरेज्जकम्मदव्वे'त्ति वचनादिति गाथार्थः ॥६७७॥ ननु च जघन्यावधिप्रमेयमभिदधता गुरुलघ्वगुरुलघु वा पश्यति, न सर्व-मेवेत्युक्तम्, एवमङ्गुलासंख्यादिविमध्यमावधेरपि नियत एव विषयस्तत्रस्थानां केषांचिदेव दर्शनादित्युक्तं, तत्किमुत्कृष्टावधेरप्येताव-न्मात्रमेव सामर्थ्यमुतान्यद् ?, अत्रोच्यते—

एगपएसोगाढं परमोही लहइ कम्मगसरीरं। लहइ य अगुरुयलहुयं तेयसरीरे भवपुहुत्तं ॥६७८॥ (नि. ४४)

एगपएसोगाढं पेच्छइ पेच्छइ य कम्मयतणुंपि। अगुरुलहुदव्वाणि य चसद्दओ गुरुलहुइंति ॥६७९॥

तेयसरीरं पासं पासइ सो भवपुहुत्तमेगभवे। णेगेसु बहुतरए सरिच्छ न उ पासए सव्वे ॥६८०॥

एगपएसोगाढे भणिए किं कम्मयं पुणो भणियं ?। एगपएसोगाढे दिट्ठे का कम्मए चिंता ? ॥६८१॥

अगुरुलहुगहणंपि य एगपएसावगाहओ सिद्धं। सव्वं वा सिद्धमिओ रूवगयं लहइ सव्वंति ॥६८२॥

एगोगाढे भणिए संसओ सेसए जहाऽऽरंभे। सण्हयरं पिच्छंतो थूलयरं न मुणइ घडाई ॥६८३॥

जह वा मणोविओ नत्थि दंसणं सेसएऽतिथूलेवि। एगोगाढे गहिए तह सेसे संसओ होज्जा ॥६८४॥

इय नाणविसयवइचित्तसंभवे संसयावणोयत्थं। भणिएऽवेगोगाढे केइ विसेसे पयंसंति ॥६८५॥

एगोगाढग्गहणेऽणुगादओ कम्मयंति जा सव्वं। तदुवरि अगुरुलहुइं चसद्दओ गुरुलहुइंपि ॥६८६॥

'संखेज्ज'इत्यादि 'मणोदव्वे'त्ति मनोद्रव्यविषयेऽवधौ प्रादुर्भूते सति 'लोगस्स पलिओवमस्स य संखेज्जभागो बोद्धव्वो' प्रमेयत्वेनेति गम्यते, एतदुक्तं भवति–मनोद्रव्याणि साक्षात्कुर्वन् लोकस्य संख्येयभागं पश्यति, पल्योपमस्य च, तद्यथा हस्तशतान्तावृ बकुलं पश्यन् हस्तशतमिति बकुलोपाधिनाकाशपरिच्छित्तिरिति भावनीयम्, तथा 'कम्मदव्व'त्ति कार्मणशरीरप्रायोग्यावद्धद्रव्यविषये चावधौ 'संखेज्ज'त्ति संख्येया भागा लोकपल्योपमयोः पृथक् पृथग् बोद्धव्याः। तथा 'लोए'त्ति चतुर्दशरज्ज्वात्मकक्षेत्रलोकविषये त्ववधौ कालतः स्तोकन्यूनं–देशोनं पल्योपमं प्रमेयत्वेन गम्यत एव, ननु च घोटारूढस्य विस्मृतो घोटः, तथाहि–द्रव्योपनिबन्धाधिकारे किमनयोरेव केवलयोरयमुच्यत इति?, उच्यते–कर्मद्रव्यमतिक्रम्यैतावन्तौ क्षेत्रकालौ पश्यतीति ज्ञापनार्थम्, एतद्वृद्धौ च द्रव्यवृद्धेरित्यत एव च कार्मणद्रव्योपर्यपि ध्रुववर्गणादिद्रव्यपरिणामं पश्यतः क्षेत्रकालवृद्ध्या पल्योपमभरणादिना प्रकारेण परमावधिसम्भवोऽनुमेय इति गाथार्थः ॥६७२॥ 'लोग'इत्यादि 'सयल'मित्यादि 'कम्मे'त्यादि गतार्थम् नवरं 'जुगमेत्तियं'ति 'लोगं थोयूणगं च पलियं'ति यदुक्तं चरमावयवे तत्रापि द्रव्योपनिबन्धः सामर्थ्यमापित इति वाक्यशेषः, यतश्चैवं ततः—'उयरिपी'इत्यादि ॥६७३–६७४–६७५॥ एवम्–'तेया'इत्यादि। तेजोविकारस्तैजसं कर्मविकारः कार्मणं शरीरशब्दः प्रत्येकमभिसम्बध्यते, ततश्च तैजसबद्धशरीरविषयेऽवधौ कार्मणबद्धशरीरविषये चावधौ तथा तैजसावद्धद्रव्यविषये भाषाद्रव्यविषये च सत्यवधौ द्रव्यतः क्षेत्रतः, किमित्यत आह–'असंखेज्जा दीवसमुद्दा बोद्धव्वा' प्रमेयत्वेन 'कालो य'त्ति कालश्चासंख्येयो बोद्धव्यः, स च पल्योपमासंख्येयभाग इति नियमः, अत्र च पदचतुष्टयेऽप्यविशेषेणासङ्ख्येयत्वेऽभिहितेऽप्यर्थादिदं लघु बृहद् बृहत्तरं बृहत्तमं च भावनीयम्, एवं क्रमेण सूक्ष्मादिस्वभावत्वाद् बद्धाबद्धस्य सूक्ष्मत्वात् पटतन्तुवदिति गाथार्थ ॥६७६॥ 'एताइं'मित्यादि। एताइं तेयादियाइं चत्तारि वत्थूणि

जओ कम्मदव्वेहिंतो थूलाणि 'तम्ह'त्ति तस्मात् 'तत्थे'त्यत्र थोवं खेत्तं असंखेज्जदीवसमुद्दा कालोऽपि पल्योपमअसंखभागो' अतआह-'थोवतरा खेत्तकाला' इति, कर्मद्रव्यविषये त्वघौ अनन्तरातीतमूलगाथायां लोकपल्योपमयोः पृथक् पृथक् संख्येया भागा उक्ताः 'संखेज्जकम्मदव्वे'त्ति वचनादिति गाथार्थः ॥६७७॥ ननु च जघन्यावधिप्रमेयमभिदधता गुरुलघ्वगुरुलघु वा पश्यति, न सर्वमेवेत्युक्तम्, एवमङ्गुलासंख्यादिविमध्यमावधेरपि नियत एव विषयस्तत्रस्थानां केषांचिदेव दर्शनादित्युक्तं, तत्किमुत्कृष्टावधेरप्येतावन्मात्रमेव सामर्थ्यमुतान्यत् ?, अत्रोच्यते—

एगपएसोगाढं परमोही लहइ कम्मगसरीरं। लहइ य अगुरुयलहुयं तेयसरीरे भवपुहुत्तं ॥६७८॥ (नि. ४४)

एगपएसोगाढं पेच्छइ पेच्छइ य कम्मयतणुंपि। अगुरुलहुदव्वाणि य चसद्दओ गुरुलहूइंति ॥६७९॥
तेयसरीरं पासं पासइ सो भवपुहुत्तमेगभवे। णेगेसु बहुतरए सरिज्ज न उ पासए सव्वे ॥६८०॥
एगपएसोगाढे भणिए किं कम्मयं पुणो भणियं ?। एगपएसोगाढे दिट्ठे का कम्मए चिंता ? ॥६८१॥
अगुरुलहुगहणंपि य एगपएसावगाहओ सिद्धं। सव्वं वा सिद्धमिओ रूवगयं लहइ सव्वंति ॥६८२॥
एगोगाढे भणिए संसओ सेसए जहाऽऽरंभे। सण्हयरं पिच्छंतो थूलयरं न मुणइ घडाई ॥६८३॥
जह वा मणोचिओ नत्थि दंसणं सेसएऽतिथूलेवि। एगोगाढे गहिए तह सेसे संसओ होज्जा ॥६८४॥
इय नाणविसयवइचित्तसंभवे संसयावणोयत्थं। भणिएऽवेगोगाढे केइ विसेसे पयंसंति ॥६८५॥
एगोगाढग्गहणेऽणुगादओ कम्मयंति जा सव्वं। तदुवरि अगुरुलहुइं चसद्दओ गुरुलहुइंपि ॥६८६॥

एवं वा सव्वाइं गहियाइं तेसिमेव नियमत्थं । सव्वं रूवगयंतिय एयं चिय नावरमओऽत्थि ॥६८७॥

'एग'इत्यादि, एकः–असहायः प्रकृष्टो देशः अंशः इति प्रदेशः एकश्चासौ प्रदेशश्चेत्येकप्रदेशः 'अवगाढं'ति मग्नमेकप्रदेशावगाढं, किं तत् ?, परमाणुद्व्यणुकादीति गम्यते, 'परमावधिः' उत्कृष्टावधिः 'लभते' पश्यति अभेदोपचारात्, कम्मगसरीरं च परमावधिर्लभत इति देशतोऽनुवृत्तिः, एवमुक्ते सत्याह–नेह परमाणुद्व्यणुकादि गम्यते अश्रुतत्वात्, ततश्च 'एगपदेसोगाढं परमोही लभइ' किमत आह–'कम्मगसरीर'मित्येवमस्तु साक्षाच्छ्रुतेः, उच्यते, न, एकप्रदेशावगाढमिति विशेषणात्, तस्यैकप्रदेशावगाहित्वायोगात्, तथा–'लभति य अगुरुलघुअं'ति लभते चागुरुलघुद्रव्यं एकप्रदेशावगाढं परमावधिरिति देशत एवानुवृत्तिः, उपलक्षणं चेदं जात्यपेक्षत्वादेकवचनस्य, ततश्च सर्वाण्यमूनि सर्वप्रदेशावगाढानि लभते, चशब्दादगुरुलघूनि च । तथा 'तेयसरीरे'त्ति तैजसशरीरविषये अवधाविह-जन्मसम्बन्धिनि कालतो भवपृथक्त्वमतीतानागतं पश्यति, क्षेत्रतस्तु असंख्येयान् द्वीपसमुद्रानित्युक्तमनन्तरगाथायां, 'तेयसरीरे बोद्धव्वा असंखेयदीवसमुद्दा' इति वचनात्, एतच्चात्रोक्तं भवति–तैजसशरीरोपलब्धौ यः पल्योपमासंख्येयभाग उक्तोऽभूत् स एतावानिति नियमितं भवतीति गाथार्थः ॥६७८॥ भाष्यम्—'एग'इत्यादि गतार्था ॥६७९॥ 'तेय'इत्यादि गतार्थैव, नवरं 'एगभवे'त्ति । किमुक्तं भवति ? विवक्षितभवोत्पन्नेऽवधौ अतीतानागतभवपृथक्त्वं पश्यतीति भावनीयम्, अनेकभवानङ्गीकृत्याह–अनेकेषु भवेषूत्पन्ने पूर्वावधौ सति बहुतरान् भवान् 'स्मरेत्'मनसा आलम्ब्येत, संभरत्येतत्, नतु पृथक्त्वाभ्यन्तरानिव पश्येत्, यत आह'ण उ पासती सव्वे' त्ति नतु पश्यति साक्षात्कारेण सर्वानेव, अपि तु कांश्चिदवधिज्ञानविशिष्टान्, इतरांस्तु स्मरति इतरैर्दृष्टत्वात् प्राग्दृष्टमन्यत्र स्थितवत् [ ]००००००००००जी०००००००००० । एतदुक्तं भवति–पृथक्त्वमेव पश्यत्येतत् साक्षात्करणविषयत्वात् तैजसशरीरोपलभ्यस्येति

गाथार्थः ॥६८०॥ आहैनमपि-'एग'इत्यादि ॥ प्रथमेनैवावयवेनैकप्रदेशावगाढे उक्ते किमिति भूयः कार्मणग्रहणं ?, तथाहि-एकप्रदेशावगाढत्वेन सूक्ष्मे दृष्टे 'कार्मणे'असंख्येयप्रदेशावगाहित्वेन परिस्थूरे का 'चिन्ता' कथेति गाथार्थः ॥६८१॥ अपि च-'अगुरु'इत्यादि ॥ अगुरुलघुग्रहणमपि तृतीयपादोक्तं प्रथमपादोक्तेन चरितार्थत्वान्न कर्त्तव्यं, चशब्दार्थं चाशंक्याह-सर्वं चैतत्सिद्धं लब्धं, अतोऽन्यस्माद्वचनाद्वक्ष्यति-'रूपगतं' मूर्त्तजातं 'लभते' पश्यति 'सर्वं'कृत्स्नं, परमावधिरिति गम्यते इति, तस्मात् एकप्रदेशावगाढमात्रमेवास्तु, मा वा भूदिति गाथार्थः ॥६८२॥ अत्रोच्यते-'एगो'इत्यादि, एकपदेसोगाढेऽवि सुहुमे भणिते सेसते असंखेज्जपएसोगाढे संसओ होइ, दृष्टान्तमाह-'यथा' येन प्रकारेण 'आरम्भे प्रारम्भे' श्लक्ष्णतरद्रव्यं पश्यन्नपि तेजोभाषान्तर इति गम्यते, स्थूरतरान्न प्रमुते घटादीन्, तेषामयोग्यत्वादिति कस्मान्न कार्मणे चिन्तेति गाथार्थः ॥६८३॥ द्वितीयमाह-'जह वे'त्यादि। यथा वा मनःपर्यायज्ञानिनो नास्ति 'दर्शनं' साक्षादुपलम्भनं 'शेषके' मनस्त्वपरिणतद्रव्यव्यतिरिक्ते बाह्ये मन्ये मन्दरमकराकरादौ अतिस्थूरेऽपि ततः शेषे संशयो मा भूदतो द्वितीयावयवस्याप्यभिधानमिति गाथार्थः ॥६८४॥ 'इय'इत्यादि, एवमवधेर्विषयवैचित्र्यसम्भवे सति भणितेऽप्याद्येऽवयवे संशयापोहार्थं द्वितीयादिपदोपन्यासेन कांश्चिद्विशेषान् प्रदर्शयन्ति भद्रबाहुस्वामिमिश्राः, इति गाथार्थः॥६८५॥ एवमिदं परिहृत्य प्रकारान्तरमाह—'एगो'इत्यादि। अथवैकप्रदेशावगाढग्रहणेन सर्वमणुकादि गृह्यते आकार्मणात्, ततश्च 'एगपएसोगाढं परमोही लभइ जाव कम्मगसरीरं'ति स्यात्, 'तदुपरि' कर्मोपरि अगुरुलघु-ध्रुवादि लभते, 'कम्मोवरिं धुवेयर' इति वचनात्, चशब्दात् गुरुलघून्यौदारिकादीनि लभते, 'एवं वे'त्यादि एवं वा सर्वाणि गृहीतानि लभते, वक्ष्यमाणं तर्हि पुनरुक्तमित्यत आह-तेषामेवाखिलानां परमाण्वादिवर्गणानां नियमार्थं वक्ष्यति-'सर्वं रूपगत'मिति चैतावदेव,अतः परं न तद्विषयोऽस्तीति गाथार्थः ॥६८६-८७॥ एवं ताव-

स्परमावधि द्रव्यतोऽभिधायाधुना क्षेत्रकालाभ्यामाह—

**परमोहि असंखेज्जा लोगमित्ता समा असंखिज्जा । रूवगयं लहइ सव्वं खेत्तोवमियं अगणिजीवा ॥ नि. ४५ ।**

खित्तमसंखेज्जाइं लोगसमाइं समाणकालं च । दव्वं सव्वं रूवं पासइ तेसिं च पज्जाए ॥ ६८९ ॥

खेत्तोवमाणमुत्तं जमगणिजीवेहिं किं पुणो भणियं ? । तं चिय संखाईयाइं लोगमित्ताइं निद्दिट्ठं ॥ ६९० ॥

अहवा वच्चं भणियं इह रूवगयंति खेत्तकालदुगं । रूवाणुगयं पेच्छइ नय तं चिय तं जओऽमुत्तं ॥ ६९१ ॥

परमोहीनाणविओ केवलमंतोमुहुत्तमित्तेण । मणुयक्खओवसमिओ भणिओ तिरियाण वोच्छामि ॥ ६९२ ॥

'परमोही' त्यादि । 'परमोही असंखेज्जाइं अलोए लोगप्पमाणाइं खंडाइं खेत्तओ लहइ' समास्तु—उत्सर्प्पिण्यवसर्प्पिणीरसंख्येयाः पश्यति, द्रव्यतः सर्वं रूपगतं, भावतस्तु वक्ष्यमाणान् पर्यायानिति, अथ यदिदमुक्तं—'असंखेज्जा लोयमेत्त'त्ति, अस्य नियमार्थमाह—उपमानमुपमितमिति भावे निष्ठाप्रत्ययः क्षेत्रस्योपमितं क्षेत्रोपमितम्, एतदुक्तं भवति—उत्कृष्टावधिक्षेत्रोपमानमग्निजीवा इति प्रागुक्ता एवेति मूलगाथार्थः ॥६८८॥ अथ साक्षेपपरिहार विस्तरार्थमाह भाष्यकारः—'खेत्त' मित्यादि उक्तार्था ॥६८९॥ अथ मूलगाथापश्चार्धंसाप्रस्तुतत्वमनुध्यमान आह—'खेत्तोवमाण'मित्यादि ॥ जमगणिजीवेहिं खेत्तोवमाणं तमुक्तं, क्व ?—अनन्तरगाथायां 'एगपएसोगाढ' मित्यस्यासामर्थ्येन न्यायेन, अतः किं पुनरभिहितमधिकृतगाथापश्चार्द्धं इति भावनीयं, ततश्चाद्यमेवार्द्धमस्तु, तत्र, प्रतिविहितत्वात् । अथ भाष्यं परिहारमाह—तं चिय—अगणिजीवखेत्तोवमाणं संखादीयाइं अलोए लोयप्पमाणमेत्ताइं खंडाइं निद्दिट्ठं' निर्युक्तिकृता पश्चादर्धं इत्येतेति गाथार्थः । ६९० । परिहारान्तरमाह—'अहवे'त्यादि ॥ अथवा 'एगपएसोगाढ' मित्यनया गाथया

पौर्वापर्येण द्रव्यमेव परमावधेर्भणितं, निगमनमप्येतदेवेति भावनीयं, ततः किमित्यत आह–'इह'त्ति इहास्यामधिकृतगाथायां 'खित्तकालदुगं'ति 'परमोही असंखेज्जा लोयमेत्ता समा असंखेज्जा' इत्येतत्, सूचयंति लहइ मव्वंति मूलगाथावयवः, कोऽस्यार्थ इत्यतः आह–रूपानुगतं–रूपोपाधि पश्यति 'खेत्तकालदुगं'ति प्रक्रमः, विपक्षप्रतिषेधमाह–नतु तदेव द्रव्यं पश्यति, तस्यामूर्तत्वात् मूर्तिनिबन्धनाचावधेरिति भावनीयमेतदर्हद्वचनं, मोक्षाङ्गत्वादिति गाथार्थः ॥ ६९१ ॥ अस्य च कृतिनोऽन्तर्मुहूर्तेन केवलश्रीसम्प्राप्तिरित्यत उच्यते–'परमोही'त्यादि स्पष्टार्था ॥६९२॥ नवरमुत्तरार्धेनानन्तरग्रन्थाभिसम्बन्ध इति ॥

आहारतेयलंभो उक्कोसेणं तिरिक्खजोणीसु । गाउय जहण्णमोही नरएसु य जोयणुक्कोसो ॥६९३॥ (नि.४६)

ओरालिय- वेउव्विय-आहारग-तेयगाइं निरएसु । उक्कोसेणं पेच्छइ जाइं च तदंतरालेसु ॥६९४॥

भणिओ खओवसमिओ भवपच्चइओ स चरिमपुढवीए । गाउयमुक्कोसेणं पढमाए जोयणं होइ ॥६९५॥

चत्तारि गाउयाइं अध्धुट्ठाइं तिगाउयं चेव । अड्ढाइज्जा दोण्णि य दिवड्ढमेगं च नरएसु ॥६९६॥ नि. ४७

अद्धगाउयाइं जहण्णयं अद्धगाउयंताइं । जं गाउयंति भणियं तं पइ उक्कोसयजहण्णं ॥६९७॥

सक्कीसाणा पढमं दोच्चं च सणंकुमारमाहिंदा । तच्चं च बंभलंतग सुक्कसहस्सारय चउत्थिं ॥६९८॥(नि.४८)

आणयपाणयकप्पे देवा पासंति पंचमिं पुढविं । तं चेव आरणच्चुय ओहिण्णाणेण पासंति ॥६९९॥ (नि.४९)

छट्ठिं हेट्ठिममज्झिमगेविज्जा सत्तमिं च उवरिल्ला । संभिण्णलोगनालिं पासंति अणुत्तरा देवा ।७००।नि.५०

एएसिमसंखिज्जा तिरियं दीवा य सागरा चेव। बहुययरं उवरिमगा उड्ढं च सकप्पथूभाई ॥७०१॥ नि. ५१
संखेज्ज जोयणा खलु देवाणं अद्धसागरे ऊणे। तेण परमसंखेज्जा जहण्णयं पणवीसं तु ॥७०२॥ नि. ५२

वेमाणियवज्जाणं सामण्णमिणं तहावि उ विसेसो। उड्ढमहे तिरियम्मि य संठाणवसेण विण्णेओ ॥७०३॥
पणवीसजोयणाइं दसवाससहस्सिया ठिई जेसिं। दुविहोऽवि जोइसाणं संखेज्ज ठिई विसेसेणं ॥ ७०४ ॥
वेमाणियाणमंगुलभागमसंखं जहण्णओ होइ। उववाए परभविओ तब्भवजो होइ तो पच्छा ॥ ७०५ ॥
उक्कोसो मणुएसुं मणुस्सतेरिच्छिएसु य जहण्णो। उक्कोस लोगमेत्तो पडिवाइ परं अपडिवाई (नि. ५३)

'आहारे'त्यादि ॥ आहारकं च तैजसं च आहारकतैजसे तयोर्लाभः आहारकतैजसलाभः, किमुक्तं भवति ?–औदारिकवैक्रियाहारकतेजोद्रव्यपरिच्छेदः, स तूत्कृष्टेन–प्रकर्षेण तिर्यग्योनिषु, योनियोनिमतामभेदोपचारात् तिर्यग्योनिकविषयो य इत्यर्थः तस्येति, मत्स्यादीनां योऽवधिरिति भावना, क्षेत्रकालौ त्वेतदनुसारेणास्य प्रमेयतया द्रष्टव्यौ, उक्तं च–'महतोऽप्येकदेशः सम्बद्धावच्युतपत्तेर्मत्स्यस्ये' ति, उक्ताः क्षायोपशमिकयः, साम्प्रतं भवप्रत्ययाः प्रकृतय उच्यन्ते, तत्राल्पत्वान्नारकाणामाह–'गाउय'मित्यादि, नरान् कायन्तीति नरकाः, ते च नारकाश्रयाः, आश्रयाश्रयिणोरभेदोपचारात्, तेषु नरकेषु च, एतदुक्तं भवति–नारकाधारो योऽवधिः स जघन्यं–स्तोकं गव्यूतमेकं साक्षात्करोति, उत्कृष्टतस्तु योजनम्, इदमौघिकं, सामुदायिकत्वादिति गाथार्थः ॥ ६९३ ॥ 'ओरालिये'त्यादि ॥ औदारिकादिशरीरद्रव्याण्ययमुत्कृष्टतः पश्यति, तदयोग्यानि चेति गाथार्थः ॥ ६९४ ॥ एवम्–'मणिओ' इत्यादि ॥

भवप्रत्ययः सप्तमपृथिव्यां गव्यूतमुत्कृष्टेन, प्रथमायां तु योजनं क्षेत्रतो, द्रव्यकालौ त्वेतदनुसारेणेति गाथार्थः ॥ ६९५ ॥ साम्प्रतं रत्नप्रभादिपूत्कृष्टेतरमाह–'चत्तारि' इत्यादि॥ यथासङ्ख्यमुत्कृष्टं सप्तस्वपि ॥६९६॥ जघन्यमाह–अद्धुट्ठगाउयाइं, (अद्धुट्ठाईयाइं)जघन्यमधगव्यूतान्तानि सप्तस्वपि यथासङ्ख्यं, तथा चाभ्यधाय्यार्यश्यामेन–'रयणप्पभापुढविनेरइयाणं भंते ! केवतियं खेत्तं ओहिणा जाणंति पासंति ?, गोयमा ! जहन्नेण अद्धुट्ठाइं गाउयाइं, उक्कोसेणं चत्तारि, एवं जाव चरिमाए जहण्णेण अद्धगाउयं, उक्कोसेणं गाउयं"। ननु च प्राक् सप्तम्यां गव्यूतस्योक्तत्वात् 'अद्धगाउयंताइं'ति विरुध्यते ?, इत्यत आह–'जं गाउयंति भणियं' मूलगाथायां तद् गव्यूतमुत्कृष्टं योजनं प्रति–अङ्गीकृत्य जघन्यं वर्त्तते, स्वस्थाने तु तदुत्कृष्टमेव, "जहन्नेणं अद्धगाउयं उक्कोसेणं गाउयं"-त्यागमादिति गाथार्थः ॥ ६९७ ॥ 'सक्कीसाणे' त्यादि ॥ 'आणये' त्यादि ॥ 'छट्ठी' त्यादि ॥ शक्रश्चेशानश्च शक्रेशानौ तदुपलक्षितकल्पद्वयवासिसामानिकदेवा इत्यर्थः, ते प्रथमां पृथिवीं यावद्, अवधिना पश्यन्ति क्षेत्रत इति क्रिया द्वितीयगाथायामिति, एवमनया भावनया यावच्चतुर्थीम्, एवमानतप्राणतौ आरणाच्युतावपि, अवधिनेति स्वरूपकथनं, यदि नाम विशुद्धतरां वितिमिरतरां च, लोकपुरुषग्रीवानुकारिणो ग्रैवेयकाः, ते आधस्त्यमध्यमाः षष्ठीं पश्यन्ति, उपरितनाः सप्तमीम्, अनुत्तरविमानपञ्चकवासिनः सम्भिन्ना चासौ लोकनाडी चरतां पश्यन्ति, तत्र सम्भिन्ना चतसृष्वपि दिक्षु सपरिकरा कन्याचोलकानुकारिणीत्यर्थः, द्रव्यादि तु एतदनुसारेण, गाथात्रयार्थः ॥ ६९८–६९९–७०० ॥ 'एतेसिं' मित्यादि। एतेषां शक्रेशानादीनामसंख्येयास्तिर्यक्–तिरश्चीनाः 'द्वीपाः' जम्बूद्वीपादयः 'सागराः' लवणादयः क्षेत्रतोऽवधिपरिच्छेद्या इति गम्यते, तथा 'बहुतरं' बृहत्तरमुक्तद्वीपोदधिप्रमाणम् उपरिमा एवोपरिमकाः–सनत्कुमारादयः पश्यन्ति यावद् अनुत्तराः, ऊर्ध्वमासकल्पस्तूभात् आदि शब्दाद् ध्वजादिपरिग्रह इति गाथार्थः ॥७०१॥

तदेवं वैमानिकानामवधिप्रमाणमभिधायापरेषां सामान्येनैवाह–'संखेज्जे'त्यादि ॥ संख्येयानि योजनानि, खलुशब्दस्यावधारणार्थत्वे सति उभयथा प्रयोगं दर्शयिष्यामः, देवानां–क्रीडावत्प्राणिविशेषाणां अर्धसागरे–अर्धसागरोपमे न्यूने खण्डे आयुषि सति संख्येयान्येव योजनानि, तथाऽर्धसागरे न्यून एव सत्यवधिक्षेत्र, ततः किमित्याह–'तेण परं' सम्पूर्णार्द्धसागरोपमादावायुषि सत्यसंख्येयानि योजनान्यवधिक्षेत्रप्रमाणं, देवानामिति वर्त्तते, एतच्च वैमानिकवर्जानां सामान्यतः, विशेषतस्तूर्ध्वाधस्तिर्यक्संस्थानविशेषात् ज्ञातव्यं, तथा जघन्यकं, देवानामिति वर्त्तते, पञ्चविंशतिरेव, तुशब्दस्यैवकारार्थत्वात्, एतच्च दशवर्षसहस्रस्थितीनां भवनपतिव्यन्तराणामवसेयं, ज्योतिष्काणामनल्पतरस्थितित्वात्संख्येययोजनान्येव जघन्यमितरच्चावसेयमेतावज्जीवितात् उक्को० पल्यो० १–१००००० वर्ष, ज० प. ६ ॥७०२॥ अनुमेयार्थं किञ्चिदाह–'वेमाणिये'त्यादि ॥ अयमत्र भावः–यया दिशा स्तोकः प्रभूतो वा तया संस्थानविशेषाद्वक्ष्यमाणाद् बोद्धव्य इति गाथार्थः ॥७०३॥ 'पणवीसे'त्यादि॥ 'पंचवीसजोयणाइं जहन्नं खेत्तप्पमाणं' शेषमुक्तार्थम् ॥७०४॥ वैमानिकानां जघन्यं नोक्तमित्यत आह–'वेमाणियाण'मित्यादि ॥ वैमानिकानां पारभविकत्वेन क्षायोपशमिकोऽङ्गुलासंख्येयभागमेव स्यादुपपाताद्यसमये, द्वितीयसमये तु भवप्रत्यय एवेति गाथार्थः ॥७०५॥ परमावधिस्तु कस्य स्यादित्यत आह–'उक्कोस'इत्यादि ॥ उत्कृष्टोऽवधिर्द्रव्यादि-विषयो मनुष्येष्वेव स्यात्, नान्ये, केवलज्ञानलाभप्रापकत्वात्, तस्य च मनुष्येष्वेव प्राप्तेः, तथा जघन्यो मनुष्यतिर्यक्ष्वेव स्यात्, न द्वये, तदपान्तरालद्रव्यदर्शनात्, अपि च–'उक्कोसे'त्यादि, उक्कोसेण लोयं दट्ठूणं पडिवएज्जा, परमेकस्मादपि प्रदेशोपलम्भादप्रति-पातीति, कोऽस्य प्रस्तावः? इति चेत्, उच्यते—प्रसङ्गागताभिधानलक्षण इति गाथार्थः ॥ ७०६ ॥ एवं 'खेत्तपरिमाणे'त्ति दारं गयं ॥ संस्थानद्वारमाह–

थिवुगागार जहन्नो वट्टो उक्कोसमायओ किंची। अजहण्णमणुक्कोसो य खेत्तओऽणेगसंठाणो ॥७०७। नि. ५४

पणओ थिवुयागारो तेण जहन्नावही तयागारो। इयरो सेढिपरिक्खेवओ सदेहाणुवत्तीए ॥७०८॥

तप्पागारे-पल्लग-पडहग-झल्लरि-मुइंग-पुप्फ-जवे। तिरिअमणुएसु ओही नाणाविहसंठिओ भणिओ ॥नि. ५५॥

नेरइयभवणवणयरजोइसकप्पालयाणमोहिस्स। गेविज्जणुत्तराण य होंतागिईओ जहासंखं ॥७१०॥
तप्पेण समागारो तप्पागारो स चाययत्तंसो। उड्डायओ य पल्लो उवरिं च स किंचि संखित्तो ॥७११॥
नचायओ समोऽविय पडहो हिट्ठोवरिं पईओ सो। चम्मावणद्धविच्छिण्णवलयरूवा य झल्लरिया ॥७१२॥
उड्डायओ मुइंगो हेट्ठा रुंदो तहोवरिं तणुओ। पुप्फसिहावलिरइया चंगेरी पुप्फचंगेरी ॥७१३॥
जवनालउत्ति भणिओ उब्भो सरकंचुओ कुमारीए। अह सव्वकालनियओ कायाइक्कोऽवि सेसाणं ॥७१४॥
नाणागारो तिरियमणुएसु मच्छा सयंभूरमणेव्व। तत्थ वलयं निसिद्धं तस्सिह पुण तंपि होज्जाति ॥७१५॥
भवणवइवंतराणं उड्ढं वहुगो अहो य सेसाणं। नारयजोइसियाणं तिरिअं ओरालिओ चित्तो ॥७१६॥

'थिवुगागारे'त्यादि ॥ जघन्यो वृत्तस्तिवुकाकारत्वात्, उत्कृष्ट आयतः किञ्चिदितरस्तु नाना 'खेत्तओ'त्ति क्षेत्रवशात्, वक्ष्यति च 'तप्पागारे'इत्येवमादिनेति गाथार्थः ॥७०७॥ 'पण इत्यादि' ॥ स्पष्टत्वान्न वितन्यते, सामान्यतश्चैतन्न विशेषतः, वस्तुस्थितिविवक्षया तु यदि स्यात् स्यात् को दोषः? इति ॥७०८॥ अथ निर्युक्तिगाथापश्चार्द्धमाह निर्युक्तिकार एव 'तप्पागारे'इत्यादि ॥

७०९॥ पूर्वार्धे पदानि सप्त, किंविषयाणीत्यत आह-'नेरइये'त्यादि सुगमा ॥७१०॥ 'तप्पे'त्यादि ॥७११॥ 'गच्चे'त्यादि ॥७१२॥ 'उद्धे'त्यादि ॥७१३॥ 'जवे'त्यादि सुगमम् ॥७१४॥ अथायं सर्वकालम् आभवं यावन्नियत एव, शेषाणां तु कादाचित्क इति, आह च-'तिरियमणुयाणमोही नाणाविहसंठिओ भणिओ'त्ति । अस्य भाष्यम् 'नाणे'त्यादि सुगमा, नवरमिह तु-अवधाविति द्रष्टव्यम् ॥७१५॥ इह च 'भवणवई'त्यादि भवनव्यन्तराणामयमुपरि चक्षुः अधश्च शेषाणां चक्षुः, नारकज्योतिष्काणां तिरश्चीनं, मनुष्यतिरश्चां तु विचित्र इति गाथार्थः ॥७१६॥

अणुगामिओ य ओही नेरइयाणं तहेव देवाणं । अणुगामी अणणुगामी मीसो य मणुस्सतेरिच्छे ॥नि. ५६॥

अणुगामिओऽणुगच्छइ गच्छंतं लोयणं जहा पुरिसं । इयरो य नाणुगच्छइ ठियपईवोव्व गच्छंतं ॥७१८॥

उभयसहावो मीसो देसो जस्साणुजाइ नो अन्नो । कासइ गयस्स गच्छइ एगं उवहयम्मि(म्मइ) जहऽच्छि ॥७१९॥

'अणि'त्यादि अनुगच्छतीत्यानुगामुकः तच्छीलत्वाल्लोचनवत्, तुशब्दस्यावधारणार्थत्वादनुगामुक एव, अवधिः, केषामित्याह-नारकाणां, 'तथैवे'त्यानुगामुक एवेत्युक्तं भवति, केषामित्याह-देवानां, तत एव हेतोस्तद्वत्, तथा आनुगामुक उक्तशब्दार्थः अनानुगामुक उक्तस्वरूपव्यतिरिक्तत्वात् शृङ्खलाप्रतिबद्धप्रदीपवत्, तथा मिश्रश्च-मिश्रोऽभिधीयते देशान्तरगतपुरुषैकलोचनोपघातोपमः, एतत् त्रयं केषु भवतीत्याह-मनुष्यतिर्यक्षु, कथं ?-देवनारकव्यतिरिक्तानुभावादिति गाथार्थः ॥७१७॥ 'अणु'इत्यादि गतार्थं । द्वारम् ॥७१८-१९॥ अथावस्थितद्वारम् ॥-किमुक्तं भवति ? अवस्थितिरवस्थानं, तदवधेराधारात् उपयोगतो लब्धितश्च चिन्त्यते, तत्र—

खित्तस्स अवट्ठाणं तेत्तीसं सागरा उ कालेणं। दव्वे भिन्नमुहुत्तो पज्जवलंभे य सत्तट्ठ ॥७२०॥ नि. ॥५७॥
अद्धाएँ अवट्ठाणं छावट्ठी सागरा उ कालेणं। उक्कोसगं तु एयं एक्को समओ जहन्नेणं ॥७२१॥ नि. ॥५८॥

आहारे उवओगे लद्धीए वा हविज्जऽवत्थाणं। आहारो से खित्तं तेत्तीसं सागरा तत्थ ॥७२२॥
विजयाईसूववाए जत्थोगाढो भवक्खओ जाव। खेत्तेऽवचिट्ठइ तहिँ दव्वेसु य देहसयणेसु ॥७२३॥
दव्वे भिन्नमुहुत्तं तत्थऽण्णत्थ य हविज्ज खेत्तम्मि। उवओगो न उ परओ सामत्थाभावओ तस्स ॥७२४॥
दव्वे तत्थेव गुणा संधरओ सत्त वऽट्ठ वा समया। अण्णे पुण अट्ठ गुणे भणंति तप्पज्जवे सत्त ॥७२५॥
जह जह सुहुमं वत्थुं तह तह थोवोवओगया होइ। दव्व-गुण-पज्जवेसुं तह पत्तेयंपि नायव्वं ॥७२६॥
तत्थऽण्णत्थ य खित्ते दव्वे गुण-पज्जयो-वओगे य। चिट्ठइ लद्धी सा पुण नाणावरणक्खवोवसमो ॥७२७॥
सो सागरोवमाइं छावट्ठिं होज्ज साइरेगाइं। विजयाइसु दो वारे गयस्स नरजम्मणा समयं ॥७२८॥
सव्वजहण्णो समओ दव्वाइसु होइ सव्वजीवाणं। स पुण सुरनारगाणं हविज्ज किह खेत्तकालेसु? ॥७२९॥
चरिमसमयम्मि सम्मं पडिवज्जंतस्स जं चिय विभंगं। तं होइ ओहिनाणं गयस्स बीयम्मि तं पडइ ॥७३०॥

'खेत्तस्से'त्यादि ॥ 'क्षेत्रस्य' पञ्चानुत्तरविमानलक्षणस्य सम्बन्धि 'अवस्थानम्' अविचलभावेनासनं, क्षेत्रभवनमित्यभिप्रायः, कियन्तं कालं यावदवधेर्भवतीत्याह—त्रयस्त्रिंशदेव सागरोपमाणि भवन्ति 'कालेने'ति कालमाश्रित्य, उपयोगतस्तु कियन्तं कालमि-

त्यत आह–'द्रव्ये' मेर्वादौ विषये भिन्नमुहूर्त्तो मुहूर्त्तान्तर्यावदवधिरविचलित आस्ते इति, तथा 'पर्यायलाभे च' मेर्वादिद्रव्यपर्यायोपलम्भे चोपयोगत एव सप्ताष्टौ वा समयानवधेरवस्थानम्, एतदुक्तं भवति–एकगुणोपलब्धिरेतावन्तं कालं, पुनरन्यत्रावश्यं संक्रम इति, अन्ये त्वाहुः–द्रव्येऽन्तर्मुहूर्त्तं गुणेष्वष्टौ पर्यायेषु सप्त यथाक्रमं सूक्ष्मत्वादुपयोगोऽप्येवमेवेति गाथार्थः ॥७२०॥लब्धितः कियन्तं कालमपमास्ते ? इत्यत आह 'अद्धे'त्यादि, 'अद्धाए' कालतो यत्र कुत्रचिदवस्थानमवधेर्लब्धिमङ्गीकृत्य कियन्तं कालं यावद् भवतीत्याह–षट्षष्टिसागरोपमाणि, तुशब्दान्नरजन्माधिकानि, निगमयन्नाह 'कालेणमुक्कोसयं तु एवं' लब्ध्यवस्थानं, जघन्यमाह–एकः समयो जघन्येनावधेर्लब्ध्यवस्थानं, कथमिति चेद्वक्ष्यति भाष्यकार इति गाथार्थः ॥७२१॥ 'आहारे' इत्यादि ॥ आहारो इत्याधारापरपर्यायस्तस्यावस्थानं स्यात् तत्रास्याधारः क्षेत्रं विजयादि तत्र कालतोऽवस्थानं–'तेत्तीसं सागरा' इति, तदेव भावयन्नाह 'विजये'त्यादि । विजयादिषूपपाते सति (यत्राभवक्षयमवगाढस्तत्र क्षेत्रेऽवधिरवतिष्ठते, द्रव्येषु च) देहपर्यङ्कतूल्यादिष्वित्याधार इति गाथार्थः ॥७२२–७२३॥ उपयोगत आह–'दव्वे' इत्यादि तत्रान्यत्र वा क्षेत्रे उपयोगः–तद्व्यापारो भवेत् द्रव्ये द्रव्यविषये, कियन्तं कालं यावदित्याह–भिन्नमुहूर्त्तं, न परतः, सामर्थ्याभावात् । तथा 'दव्वे' इत्यादि ॥ तत्रैव मेर्वादौ द्रव्ये गुणे पीतपीततरादौ 'सञ्चरतो' व्यापारमनुभवतोऽवधिः, शेषं स्पष्टम् ॥ सामान्येन दृष्टान्तमभिधाय पश्चार्द्धेन दार्ष्टान्तिकमभिदधदिदमाह 'जह जहे'त्यादि ॥ एतदुपयोगतः, अथ लब्धित आह 'तत्थे'त्यादि सुगमा ॥७२४-२७॥ 'सो' इत्यादि 'सः' तदावरणक्षयोपशमः, शेषं गतार्थम् ॥ 'एक्को समयो जहण्णेणं' इत्यस्य व्याख्या–'सव्व' इत्यादि । सर्वजघन्योऽवधिः द्रव्यादिषु भवत्येकं समयं, केषामित्याह–सर्वजीवानां नारकतिर्यङ्नरामराणामपि, अपिशब्दलोपात्, एवमुक्ते सत्याह–स पुनः समयः सुरनारकयोर्भवेत् 'कथं' ? केन ?–भावनाक्रमेण, नैवेत्यभिप्रायः, क सतीत्याह–'खेत्तकालेसु'त्ति, खेत्तयो

सागरोपमा ३३ कालओ ६६ एतावत्प्रमाणोऽयं कथमेकं समयं स्यादित्यर्थः, एतदुक्तं भवति–नरतिरश्चोरयं युक्तः प्रतिपादित उपयोगतोऽविरुद्धत्वात्, नत्वनयोरिति, उक्तवदिति गाथार्थः ॥७२८-२९॥ उच्यते, नैतदेवं, सिद्धान्ताभिप्रायापरिज्ञानात्, तथाहि–'चरिमे'-त्यादि, इह सामान्ये देवादेर्भवचरिमत्वेन साटमसये यदस्य विभंगं तत्सम्यक्त्वं लभमानस्यावधिज्ञानं भवति ततः–मयस्स चुतस्स मनुस्स वा से इह बितियसमये प्रच्यवतीति ॥द्वारम् ॥७३०॥ अथ चलद्वारम्–चलतीति चलः–पुरः प्रसर्प्पति तीव्रत्वादीरवीरपुरुषपदितत्र विपर्यय इत्यत आह–

वुड्ढी वा हाणी वा चउव्विहा होइ खेत्तकालाणं । दव्वेसु होइ दुविहा छव्विह पुण पज्जवे होइ ॥नि. ५९

वुड्ढी वा हाणी वाऽणंतासंखिज्जसंखभागाणं । संखिज्जासंखिज्जाणंतगुणा चेति छब्भेया ॥७३२॥
पइसमयमसंखिज्जइभागहियं कोइ संखभागहियं । अन्नो संखेज्जगुणं खित्तमसंखिज्जगुणमण्णो ॥७३३॥
पेच्छइ विवड्ढमाणं हायंतं वा तहेव कालंपि । नाणंतवुड्ढिहाणी पेच्छइ जं दोऽवि नाणंते ॥७३४॥
दव्वमणंतसहियं अनन्तगुणवड्ढियं च पेच्छेज्जा । हायंतं वा भावम्मि छव्विहा वुड्ढिहाणीओ ॥७३५॥
वुड्ढीए चिय वुड्ढी हाणी हाणीए न उ विवज्जासो । भागे भागो गुणणे गुणो य दव्वाइसंजोए ॥७३६॥
किह खेत्तअसंखभागाइ संभवे संभवो न दव्वेऽवि ? । किह वा दव्वाणंते पज्जवसंखिज्जभागाइं ? ॥७३७॥
खेत्ताणुवत्तिणो पोग्गला गुणा पोग्गलाणुवत्ती य । सामण्णा विण्णेया न उ ओहिन्नाणविसयम्मि ॥७३८॥
दव्वाइं सखेत्ताओऽणंतगुणा पज्जवा सदव्वाओ । निययाहाराहीणा तेसिं वुड्ढी य हाणी य ॥७३९॥

नउ नियमाहारवसा अवहिनियंबो जओ परित्तो सो। चित्तो तहण्णहाविय आणागेज्झो य पागण ॥७४०॥

'वुड्ढी वेत्यादि' इह क्षेत्रं च कालश्च तौ क्षेत्रकालौ तयोः क्षेत्रकालयोरवधिविषययोः 'वृद्धिर्वा' अपूर्वापूर्वांशोपलब्धिर्वा 'हानिर्वा'उपलब्धोपलब्धस्याख्या(ना)वृत्तिर्वा, किमत आह-'चतुर्विधा भवति' चतूरूपैव भवति, प्रथममेवासंख्येयप्रदेशसमयोपलब्धेः, तद्यथा-'पच्छाणुपुव्वीए पाढो-असंखेज्जगुणवड्ढी वा संखेज्जगुणवड्ढी वा संखेज्जभागवड्ढी वा असंखेज्जभागवड्ढी वा।' एवं हानिरपि, तथा द्रव्येषु भवति 'द्विविधा' द्विविधैवेति शेषप्रतिषेधः, प्रथममेवानन्तद्रव्योपलब्धेः, तद्यथा-'पच्छाणुपुन्वीए चेव पढणा' अणंतगुणाहियं वा हाणी वा अणंतभागब्भहियं वा हाणी वा, पर्याये पुनः 'षड्विधा' षड्रूपैव, शेषप्रतिषेधः, तत्प्रथमतयैव समुदायमङ्गीकृत्यानन्तपर्यायोपलब्धेस्तद्यथा पश्चानुपूर्व्यैव स्थापना-॥ एवं हानिरपि बोद्धव्या, तद्यथा-'अणंतगुणवड्ढी वा १ असंखेज्जगुणवड्ढी वा २ संखेज्जगुणवड्ढी वा ३ संखेज्जभागवड्ढी वा ४ असंखेज्जभागवड्ढी वा ५ अणंतभागवड्ढी वा ६, इत्येष गाथार्थः ॥ ७३१ ॥ आह-नात्र भावार्थं विद्मः किं चातुर्विध्यादि ?, अत आह भाष्यकारः-'वुड्ढी वे'त्यादि षट्स्थानकस्थापनया भावितार्था ॥ किमयमुत्क्रम इति चेत्, उच्यते, अस्य व्यापकत्वोपदर्शनार्थमेतदन्तर्गते च चतुर्द्विस्थानके इति दर्शनार्थमिति गाथार्थः ॥ ७३२ ॥ एवं निरूप्य निर्युक्तिगाथाद्यार्धं व्याचिख्यासुराह-'पई'त्यादि ॥अस्याक्षरघटना-'कोइ'त्ति कश्चिदवधिज्ञानी अनुसमयं प्रागुपलब्धात्पनकोपलक्षितक्षेत्रात्, किमत आह-असंखेज्जभागहियं खेत्तं पेच्छति विवड्ढमाणं, कुतः? विशुध्यमानत्वेन तीव्रत्वात्, तद्यथा-एवं कोई संखभागब्भहियं खेत्तं पेच्छइ विवड्ढमाणं, तद्यथा तथा अन्नो संखेज्जगुणं खेत्तं पेच्छइ विवड्ढमाणं, तद्यथा जम्बूद्वीपमात्रं लोकमात्रं वा, किमस्यायमेव प्रकारोऽन्यो वेत्याह-'हायंतं वा'-प्रतिसमयमनेनैव प्रकारेण क्षीयमाणं वा, प्रतिलोममिति शेषः। एवं जहा खेत्तं तहेवकालंपि

पेच्छइ विवड्ढमाणं हायंतं वा, अस्यैव नियमार्थमाह–नानंतवृद्धिहानी अनयोः पश्यति, कुतः ? इत्याह–यस्मादू द्वावपीमौ नानन्तौ अवधिविषय इति गम्यते ॥ तृतीयं पादं व्याचिख्यासुराह 'दव्वमणंतंसहियं' कोऽर्थः ? प्रागुक्तात्पनकद्रव्यराशेः पुनस्तदनन्तभागवृद्धं पश्यति कश्चित् कश्चित्तु तदेवानन्तगुणवर्धितं पश्येत्, समस्तलोकमात्रद्रष्टृसम्भवात्, एवं हायंतं वा प्रातिकूल्येनेति गम्यते, चतुर्थपादव्याचिख्यासयाऽऽह–भावे च षड्विधे वृद्धिहानी इत्युक्तवद्, इति मूलगाथार्थोऽपि भाष्यकृता व्याख्यात इति ॥ अथानयोर्वृद्धिहान्योर्लक्षणमाह 'वुड्ढीए चिय वुड्ढी' त्यादि। अत्र 'दव्वाइसंजोए'त्ति कालखेत्तदव्वभावाणं इत्युक्तं भवति, अन्यतरस्य कस्यचित्, किमत आह–वृद्धौ वृद्धिरेवान्येषां त्रयाणामुक्तत्वात् 'काले चउण्ह वुड्ढी' ति वचनात्, नतु कस्यचिद् वृद्धावन्येषां हानिरनुक्तत्वात्, अवस्थानं तु स्यादुक्तवत्, 'कालो भतियव्वो खेत्तवुड्ढीए'त्ति वचनादिति वाक्यार्थः। अथवा वृद्धावेवान्यतमस्येतरेषां वृद्धिर्नतु हानिः, यद्वक्ष्यति 'न उ विवज्जासो' त्ति वाक्यार्थः, तथा 'हाणी हाणिए'त्ति कस्यचिद्धानौ अपरस्यापि हानिरेव, नतु विपर्यासो नतु वृद्धिरसम्भवात्, अवस्थानं तु स्यात्, तथा 'भागे भागो'त्ति एकस्य भागे वर्द्धमाने सत्यपरेषामपि भाग एव वर्धते संखेयासंख्येयानन्तलक्षणः तथा संख्येयासंख्येयलक्षणश्च, नतु तृतीयेऽपि स्थाने, संख्येयलक्षणक्षेत्रकालभागवृद्धावपि द्रव्यस्यानन्तगुणवृद्धिदर्शनात्, अत एव पूज्यपादैः स्वटीकायां प्रायोग्रहणं कृतमित्येवमादि, तथा 'गुणे गुणो'त्ति संख्येयगुणवृद्धिरेव असंख्येयगुणवृद्धावपि सैवेत्यर्थः, स्थापना इति गाथार्थः ॥७३६॥ तत्रैतत्स्यात्–क्षेत्रचतुःस्थानकवद् द्रव्यस्यापि चतुःस्थानकमस्तु, तत्रस्थत्वात्, द्रव्यद्विस्थानकत्वाच्च पर्यायाणामप्येतदेवास्तु तन्निबन्धनत्वाद्, आह च–'किह' इत्यादि, कथं क्षेत्रस्यासंख्यभागादिसम्भवे द्रव्येऽपि न तत्सम्भवो ? येनोच्यते–'दव्वेसु होइ दुविह'त्ति, ननूच्यतां–'दव्वेसु होइ चउह'त्ति ? कथं वा द्रव्यानन्त्ये सति पर्यायाणां असंख्येयभागवृद्ध्यादिचतुष्टयं

स्थापना अणंतगु० वृ० अणं० भा० वृ० मध्यमभिधीयते, भागगुणद्वयं त्वाद्यचरमं तुल्यमेव येनोच्यते 'छव्विह'त्ति तन्निबन्धनत्वात्तस्या इति गाथार्थः ॥७३७॥ तत्र, यत इह गाथायां विशेषन्यायस्याङ्गीकृतत्वादित्थमुपन्यासस्तथाहि– 'खेत्त' इत्यादि। 'क्षेत्रानुवर्त्तिनः' क्षेत्रपरिसंख्यानवन्तः पुद्गलाः–स्कन्धादयस्तदाधेयत्वात्, तथा गुणाश्च–पर्यायाश्च पुद्गलानुवर्तिन इति 'सामन्ना विन्नेया' इति सामान्यन्यायमङ्गीकृत्यैवमित्युक्तं भवति, कथ पुनर्नैवमित्याह–न त्ववधिविषये एत एवं ॥७३८॥ तत्र स्वक्षेत्रानन्तगुणत्वाद् द्रव्याणां पुद्गलेभ्यश्च पर्यायाणामित्याह–स्वक्षेत्राद्धि द्रव्याण्यनन्तगुणानि, स्वद्रव्यादपि च पर्याया अनन्तगुणाः, अतोऽवधिविषये न क्षेत्रानुवर्त्तिनः पुद्गला इति द्विस्थानकमेव, न च द्रव्यानुवर्त्तिनः पर्याया इति षट्स्थानकमेवेति, अथ सामान्यन्यायस्य निगमनमाह–अतो निजाधाराधीना तेषां द्रव्यपर्यायाणां वृद्धिः हानिर्वा वृद्धिर्न हानिर्वा, अहानिर्वा वृद्धिः, एतदुक्तं भवति–तस्मात्सामान्यन्यायमङ्गीकृत्य यावती क्षेत्रस्य वृद्धिर्वा हानिर्वा तावत्येव हि द्रव्यस्य तदाधारत्वात्, यावती च द्रव्यस्य तावत्येव पर्यायाणामिति गाथार्थः ॥७३९॥ प्रकृतन्यायनिगमनमाह– 'न उ' इत्यादि न तु निजाधारवशादवधिनिबन्धो यस्मादसौ परीतः असंख्येयत्वात्, क्षेत्रकालयोरपि च विज्ञेयं, नात्रानुपपत्तिश्चोद्या, तथा चान्यथा च प्रवृत्तेः, आज्ञाग्राह्यत्वाच्च, प्रायोग्रहणं यथायोगं युक्त्यभिधानादिति, द्वारम् ॥७४०॥ तीव्रमन्दाविति द्वारमाह—

फड्डा य असंखेज्जा संखेज्जा यावि एगजीवस्स। एगप्फड्डुवओगे नियमा सव्वत्थ उवउत्तो ॥७४१॥ (नि. ६०)

फड्डा य आणुगामी अणाणुगामी य मीसया चेव। पडिवाई अपडिवाई मीसा य मणुस्सतेरिच्छे ।७४२। (नि, ६१)

जालंतरत्थदीवप्पहोवमो फड्डगावही होइ। तिव्वो विमलो मंदो मलीमसो मीसरूवो य ॥७४३॥

स्पर्धकावधिः ॥२४६॥

उवओगं एगेणवि दिंतो सो फड्डएहिं सव्वेहिं । उवउज्जइ जुगवं चिय जह समयं दोहिं नयणेहिं ॥७४४॥
कह नोवओगबहुया ? भण्णइ न विसेसओ स सामण्णो। तग्गयविसेसविमुहो खंधावारोवओगोव्व ॥७४५॥
अणुगामि–नियय–सुद्धाइं सेयराइं च मीसयाइं च। एक्केक्कसो विभिन्नाइं फड्डयाइं विचित्ताइं ॥७४६॥
निययाणुगामियाणं को भेओ ? को व तव्विवक्खाणं ?। नियओऽणुजाइ नियमा नियओऽनियओ व अणुगामी॥७४७॥
चयइच्चिय पडिवाई अणाणुगामी चुओ पुणो होइ। नरतिरिगहणं पाओ जं तेसु विसोहिसंकेसा ॥७४८॥
गहणमणुगामियाईण किं कयं तिव्वमंदचिंताए ?। पायमणुगामि नियया तिव्वा मंदा य जं इयरे ॥७४९॥
अण्णे पडिवायुप्पायदार एवाणुगामियाईणि। नरतिरियग्गहणेणं अहवा दोसुंपि न विरुद्धं ॥७५०॥

फड्डा येत्यादि । फड्डानि–अवधिज्ञानज्योत्स्नानिर्गमस्थानानि जालान्तरस्थप्रदीपोपमत्वात्, तानि चैकजीवस्य संख्येयान्यसंख्येयान्यपि च भवन्ति, क्षायोपशमिकविशेषात्. एवं च स्थिते एकफड्डकोपयोगे नियमात् सर्वैरुपयुक्तो लभ्यते एकोपयोगत्वाल्लोचनवत्, तत्रैतत् स्यात्–अक्रमविरोधस्तीव्रमन्दद्वाराभिधाने फड्डकावधिप्ररूपणादिति, तन्न, तीव्रमन्दत्वात् फड्डकानाम् । आह च ग्रन्थकार एव–'फड्डा ये'त्यादि। अनुगमनशीलान्यनुगामुकानि, नियतानीत्यभिप्रायः, नानुगमनशीलान्यननुगामुकानि, ध्वंसस्वाभाव्ये सत्यपि तत्रैवागतस्य पुनर्भावीनीत्यभिप्रायः, मिश्राणि चैवेति उभयत्राप्युभयस्वभावानीत्यभिप्रायः। आद्ययोर्विपर्ययमाह– 'पडिवाइ अपडिवाइ'त्ति प्रतिपतनशीलानि प्रतिपातीनि, तद्देशापेक्षया देशान्तरभावीनि तु भवन्तीत्यर्थः, अप्रतिपतनशीलान्यप्रतिपातीनि, नियतान्येवेत्यर्थः, मिश्राणि चोभयसामान्यानि चेत्यर्थः, एतानि च मनुष्यतिर्यक्षु भवन्ति, एतेष्वेव विशुद्धिसंक्लेशसद्भावादिति निर्युक्तिगाथाद्वयार्थः ॥७४१–

७४२॥ 'जालंतरत्थे'त्यादि। प्रागद्गनास्य स्वरूपम्। कः पुनरयं तीव्रादिरित्याह—यो विमलः स तीव्र उच्यते, मलिनस्तु मन्दः, मिश्रस्तूभयस्वभावः, सदेशत्वादिति गाथार्थः ॥७४३॥ इह च—'उवओग' मित्यादि प्रकटार्थम् ॥७४४॥ तत्राह—'कह'मित्यादि। कथं नोपयोगभाचुर्यमनेकैकरूपयुज्यमानस्य स्यात्?, उच्यते, एकोपयोगत्वादित्युक्तत्वात्, एकोपयोगो ह्यात्मा तत्स्वाभाव्यात् लोचनद्वयवदिति, अथवाऽनेकवस्तुविषयोपयोगे ह्येतत् स्यात्, न चायं तद्धर्मा, अत आह—पण्णते अत्र प्रतिवचनं, न तैरुपयोगो जीवस्य 'न विशेषतो' न भेदेन, किंतु 'सामण्णो'त्ति 'सामान्यः' साधारणः, कुतः?—'तग्गयविसेसविमुहो'त्ति तद्गतविशेषवैमुख्यात् लोचनद्वयेन स्कन्धावारोपयोगवत्, यथा हि जालगृहान्तर्ज्वलितप्रदीपप्रभानिर्गमः एकः, एकत्वादन्तः प्रदीपस्य, एवमत्राप्येकत्वात् परिच्छेत्तुरसावपि तदुपयोग एक एवेति गाथार्थः ॥७४५॥द्वितीयां मूलगाथां व्याचिख्यासुराह—'अणुगामी'त्यादि। अणुगामिनियतशुद्धा इति विकल्पास्त्रयः, सेतरा इति त्रय एव, ततश्च षड् विकल्पाः, 'मीसयाइं च'त्ति 'अणुगामिअणणुगामीणि नियपाणियपाणि सुद्धासुद्धाइं' एवं विमिश्राणि, एकैकशो विभिन्नत्वात्, स्थापना चेयमग्रे, यद्वा—'अणुगामिनियपसुद्धा' इति, एत एव विशुद्धानि, सेतराइं नेति प्रतिपक्षभूतानि पत्राशुद्धे 'मीसयाइं च'त्ति उभयस्वभावानि एव, एवं विचित्राणि, एकैकशो जघन्यादिभेदेन वर्त्तमानत्वादिति, स्थापना चेयमग्रतः, एवमुक्ते सत्याह—'नियये' इत्यादि, 'नियपाणुगामियाणं' अप्रतिपात्यनुगामिनोरित्यर्थः, उच्यते, 'निययजो'त्ति यो नियतत्वेनाप्रतिपाती सोऽनुपात्येन नियमात्, तत्स्वभावत्वाल्लोचनवत्, अनुगामुकस्तु नियतोऽपि स्यात्, तत्स्वाभाव्याल्लोचनवत्, अनियतोऽपि स्यात्, किमपि यात्वा विध्वंसगमनादेकलोचनोपघातवदिति गाथार्थः ॥७४६-४७॥ विपर्येऽधुनोत्तरमाह—'भयइ'—त्यादि। प्रतिपाती नाम अनियतः, नियमात् स्वत्र एव गच्छतः, अन्यत्र तु गरत्यसकृदप्यवधिज्ञानोत्पत्तेः, अनानुगामुकस्तु

च्युतः सन् पुनरपि तत्रैवायातस्य भवति। पश्चादर्द्धं व्याचिख्यासुराह–'नरे' त्यादि गतार्थम्। चोदक आह–'गहण' मित्यादि। तीव्रमन्दद्वारे किमेषां ग्रहः?, उच्यते, एतद्ग्रहण एवानयोः स्वरूपोक्तेः, आह च–'पाय'मित्यादि स्पष्टम् ॥७४८–४९॥ 'अण्णे' इत्यादि। अथवाऽन्ये सूरयः प्रतिपात्युत्पादद्वार एव वक्ष्यमाणेऽनुगामुकादीन्यवधिज्ञानान्याचक्षते, न पुनरत्र, केनेदं सिद्धम्?,अत आह–'नरतिरियग्गहणेणं' नरतिर्यग्ग्रहणात्, तिर्यङ्मानुष्यग्रहणाल्लिङ्गादित्यर्थः, न चैतदेव प्रमाणं, यत आह–अथवा द्वयोरपि द्वारयोस्तेऽनुगामुकादयोन विरुद्धाः, आर्थेन न्यायेनेति सामर्थ्यात् गम्यते, एतदभिधाने तीव्रमन्दत्वाभिधानादित्येवमाद्युभयत्रोत्प्रेक्ष्य वक्तव्यमिति॰ ॥ द्वारम् ॥७५०॥ अथ प्रतिपातोत्पादद्वारम्—

बाहिरलंभे भज्जो दव्वे खेत्ते य कालभावे य। उप्पा-पडिवाओऽवि य तदुभयं चेगसमयेणं ॥७५१॥(नि. ६२)

बाहिरओ एगदिसो फड्डोही वाऽहवा असंबद्धो। दव्वाइसु भयणिज्जा तत्थुप्पायादओ समये ॥ ७५२ ॥

उप्पाओ पडिवाओ उभयं वा होज्ज एगसमएणं। कहमुभयमेगसमये? विभागओ तं न सव्वस्स ॥ ७५३ ॥

दावानलो व्व कत्थइ लग्गइ विज्झाइ समयमन्नत्तो। तह कोइ ओहिदेसो संजायइ नासए चिइओ ॥ ७५४ ॥

अब्भिंतरलद्धीए तु तदुभयं नत्थि एगसमएणं। उप्पापडिवाओऽवि य एगयरो एगसमयेणं नि. ॥६३॥

अब्भिंतरलद्धी सा जत्थ पईवप्पभव्व सव्वत्तो। संबद्धमोहिनाणं अब्भंतरओऽवहीनाणी ॥ ७५६ ॥

उप्पाओ विगमो वा दीवस्स व तस्स नोभयं समयं। न भवणनासा समयं वत्थुस्स जमेगधम्मेणं ॥ ७५७ ॥

उप्पायव्वयधुवया समयं धम्मंतरेण न विरुद्धा। जह रिउवक्कंगुलिता सुरनरजीवत्तणाइं वा ॥ ७५८ ॥
उप्पज्जइ रिउयाए नासइ वक्कत्तणेण तस्समयं। नउ तम्मि चेव रिउयानासो वक्कत्तभवणं च ॥ ७५९ ॥
लद्धत्तलाभनासो जुज्जइ लाभो य तस्स समएणं। जइ तम्मि चेव नासो निच्चविणट्ठे कुओ भवणं? ॥७६०॥
सव्वुप्पायाभावा तदभावे य विगमो भवे कस्स?। उप्पायवयाभावे काऽवठिइ? सव्वहा सुण्णं ॥ ७६१ ॥
दव्वाईणं लिप्पइं पुव्वं भणिओ परोप्परनिबंधो। इह दव्वस्स गुणेणं भण्णइ दव्वासिओ जं सो ॥ ७६२ ॥

'बाहिरलंभे' इत्यादि ॥ 'बाहिरलंभे' बाह्यावधिप्राप्तौ 'भाज्यः' सेव्यः, कः? इत्याह–उत्पादः प्रतिपातस्तदुभयं चैकममयेन, अपिशब्दचशब्दौ पूरणसमुच्चयार्थौ, क्वेत्याह–द्रव्ये क्षेत्रे काले भावे च, एतदुक्तं भवति–कदाचिदस्यैकसमये उत्पाद एव–वृद्धिरेव कदाचिद्व्यय एव कदाचिदुभयं दावदृष्टान्तेन सदेशत्वादिति समुदायार्थः ॥ ७५१ ॥ लक्षणमाह–'बाहिरओ' इत्यादि ॥ बाहिरओ नाम एगओ दिशो, एकया दिशा प्रतिबद्ध इत्यर्थः, फड्डकावधिर्वाऽसम्बद्ध एव, अथवा वलयाकारत्वादसम्बद्धस्तत्र–द्रव्यादौ सेव्या–विकल्पनीया वा उत्पादादयः 'समकं' युगपत्, एतदुक्तं भवति–सदेशोऽयं ततश्चैकायतैकतो दिग्गं यदैव तिरश्चीनं सङ्कोचस्तदैवाग्रतो विकाशः, एवं प्रायः फड्डकावधावपि, वलयाकारोऽप्येकया दिशाऽस्य शुषिरपूरणभावचे, परया तु तद्विधानमेव यदा उत्पादविनाशौ, यदा तूत्पाद एव तदा तनु सद्वलयं विसरति, व्यये तु पृथु सत्तनूभवति, विचित्रत्वादिति गाथार्थः ॥ ७५२ ॥ एतदेव भावयन्नाह–'उप्पाओ' इत्यादि, पूर्वार्धं गतार्थम्, एवमुक्ते सत्याह–'कहमुभयमेगसमये'त्ति उत्पादव्ययौ भिन्नकालावेकैकसमये युक्तावविरुद्धत्वात्, नतूभयमिति, उच्यते, 'विभागतो तत्र सव्वस्स'त्ति विभागतः–एकदेशमङ्गीकृत्य तद्–उत्पादव्ययोभयमवधेरिति प्रकृतं, न सर्वस्य-

निर्मूलत एव तदसाभिदध्महे, तथाहि–'दावानलो' वेत्यादि ॥ यथा दावानलः कुत्रचित्–शुष्कतृणस्तम्बादौ लगति तस्मिन्नेव च समयेऽन्यत्र भूतृणादौ विध्यायति सदेशत्वात्, तथा किमित्यत आह–'तह कोइ ओहिदेसो लग्गति–वड्ढइ विज्झायइ–वितिओ नासइ'त्ति गाथार्थः ॥७५३ ५४॥ विपर्ययमधिकृत्याह–'अब्भिंतरलद्धीए तु' इत्यादि ॥ अभ्यन्तरावधिप्राप्तौ तुर्विशेषणार्थः, किं?, 'तदुभयं' उत्पादव्ययोभयं 'नास्ति'न विद्यते 'एकसमयेन'एकस्मिन् समये, अदेशावधित्वेन सर्वात्मप्रदेशावधित्वात्, सम्बद्धावधित्वादिरयर्थः, किं तर्ह्यस्यैकसमयेनेत्याह–उत्पादप्रतिपातावन्यतराविति गाथार्थः ॥ ७५५ ॥ लक्षणमाह–'अब्भिंतरलद्धी'त्यादि प्रतीतार्था ॥७५६॥ 'उप्पाओ' इत्यादि तस्येत्यभ्यन्तरावधेः 'उत्पादः' प्रादुर्भावः, तथा 'विगमो वा' भ्रंशो वा 'समय'त्ति एकैकस्मिन् समये भवेत्, एतदुक्तं भवति–एकस्मिन् समये उत्पाद एव स्याददेशत्वात् प्रदीपस्येव, एवं व्ययोऽपि, अनभिमतप्रतिषेधमाह–न 'उभयं' उत्पादव्ययद्वयमस्यैकसमये स्यात्, किं कारणमित्याह–'ण'त्ति यस्मात् 'वस्तुनो' द्रव्यस्य 'एकेन धर्मेण' एकेन स्वभावेन 'समकं' हेलयैव 'न भवननाशौ' नोत्पादव्ययौ स्यातां, नह्यङ्गुलिद्रव्यं येनैव धर्मेणर्जु भवति तेनैवर्जुत्वेन व्येति, विरोधात्, धर्मान्तरेण त्वेकसमयमपि भवेत्, यतो यस्मिन्नेव समये तत्तथोत्पद्यते, तस्मिन्नेव चान्यथा व्येति, द्रव्यतया त्ववस्थितमेवास्ते इत्याह'उप्पाए'त्यादि पूर्वार्धेन दार्ष्टान्तिकः पश्चादर्द्धेन तु दृष्टान्तः, यस्मिन्नेव समये ऋजुत्वोत्पादस्तस्मिन्नेव वक्रत्वनाशोऽङ्गुलिर्द्रव्यतया त्ववस्थितैवेति भावनीयं सर्वत्र ॥७५७–७५८॥ तथा च–'उप्पज्जती'त्यादि। उदेत्यकौटिल्येनाङ्गुलिद्रव्यमिति शेषः, नश्यति कौटिल्येनैकदा तिष्ठति चेति गम्यते, अत्राविरोधः, नतु तस्मिन्नेवाकौटिल्यसमये नाशोऽकौटिल्यतायाः, तथा भाविवक्रत्वभवनं वा, विरोधात्, ॥७५९॥ तथा चाह–'लद्ध' इत्यादि ॥ इह वस्तुनो कौटिल्यादेर्लब्धात्मलाभस्य सतो नाशो युज्यते, लाभश्च–स्वभावावाप्तिश्च तस्य कौटिल्यादेः समयेन, ततश्च

उप्पायव्वयधुवया समयं धम्मंतरेण न विरुद्धा। जह रिउवक्कंगुलिता सुरनरजीवत्तणाइं वा ॥ ७५८ ॥
उप्पज्जइ रिउयाए नासइ वक्कत्तणेण तस्समयं। नउ तम्मि चेव रिउयानासो वक्कत्तभवणं च ॥ ७५९ ॥
लद्धत्तलाभनासो जुज्जइ लाभो य तस्स समएणं। जइ तम्मि चेव नासो निच्चविणट्ठे कुओ भवणं? ॥७६०॥
सव्वुप्पायाभावा तदभावे य विगमो भवे कस्स?। उप्पायवयाभावे काऽवठिइ? सव्वहा सुण्णं ॥ ७६१ ॥
दव्वाईणं तिण्हं पुव्वं भणिओ परोप्परनियंधो। इह दव्वस्स गुणेणं भण्णइ दव्वासिओ जं सो ॥ ७६२ ॥

'बाहिरलंभे' इत्यादि ॥ 'बाहिरलंभे' बाह्यावधिप्राप्तौ 'भाज्यः' सेव्यः, कः? इत्याह—उत्पादः प्रतिपातस्तदुभयं चैकसमयेन, अपिशब्दचशब्दौ पूरणसमुच्चयार्थौ, क्वेत्याह—द्रव्ये क्षेत्रे काले भावे च, एतदुक्तं भवति—कदाचिदस्यैकसमये उत्पाद एव—वृद्धिरेव कदाचिद्व्यय एव कदाचित्तूभयं दावदृष्टान्तेन सदेशत्वादिति समुदायार्थः ॥ ७५१ ॥ लक्षणमाह—'बाहिरओ' इत्यादि ॥ बाहिरओ नाम एगओ दिशो, एकया दिशा प्रतिबद्ध इत्यर्थः, फड्डकावधिर्वाऽसम्बद्ध एव, अथवा वलयाकारत्वादसम्बद्धस्तत्र—द्रव्यादौ सेव्या—विकल्पनीया वा उत्पादादयः 'समकं' युगपत्, एतदुक्तं भवति—सदेशोऽयं ततश्चैकायतैकतो दिग्गं यदैव तिरश्चीनं सङ्कोचस्तदैवाग्रतो विकाशः, एवं प्रायः फड्डकावधावपि, वलयाकारोऽप्येकया दिशाऽस्य शुषिरपूरणमाधत्ते, परया तु तद्विधानमेव यदा उत्पादविनाशौ, यदा तूत्पाद एव तदा तनु सद्वलयं विसरति, व्यये तु पृथु सत्तनूभवति, विचित्रत्वादिति गाथार्थः ॥ ७५२ ॥ एतदेव भावयन्नाह—'उप्पाओ' इत्यादि, पूर्वार्धं गतार्थम्, एवमुक्ते सत्याह—'कहमुभयमेगसमये'त्ति उत्पादव्ययौ भिन्नकालावेकैकसमये युक्तावविरुद्धत्वात्, नतूभयमिति, उच्यते, 'विभागतो तत्र सव्वस्स'त्ति विभागतः—एकदेशमङ्गीकृत्य तद्—उत्पादव्ययोभयमवधेरिति प्रकृतं, न सर्वस्य-

निर्मूलत एव तदसाभिदध्महे, तथाहि–'दावानलो' वेत्यादि ॥ यथा दावानलः कुत्रचित्–शुष्ककुशस्तम्बादौ लगति तस्मिन्नेव च समयेऽन्यत्र भूतृणादौ विध्यायति सदेशत्वात्, तथा किमित्यत आह–'तह कोइ ओहिदेसो लगति–वड्ढइ विज्झायइ–वितिओ नासइ'त्ति गाथार्थः ॥७५३ ५४॥ विपर्ययमधिकृत्याह–'अब्भितरलद्धीए तु' इत्यादि ॥ अभ्यन्तरावधिप्राप्तौ तुर्विशेषणार्थः, किं ?, 'तदुभयं' उत्पादव्ययोभयं 'नास्ति'न विद्यते 'एकसमयेन'एकस्मिन् समये, अदेशावधित्वेन सर्वात्मप्रदेशावधित्वात्, सम्बद्धावधित्वादित्यर्थः, किं तर्ह्यस्त्यस्यैकसमयेनेत्याह–उत्पादप्रतिपातावन्यतराविति गाथार्थः ॥ ७५५ ॥ लक्षणमाह–'अब्भितरलद्धी'त्यादि प्रतीतार्था ॥७५६॥ 'उप्पाओ' इत्यादि तस्येत्यभ्यन्तरावधेः 'उत्पादः' प्रादुर्भावः, तथा 'विगमो वा' अंशो वा 'समय'त्ति एकैकस्मिन् समये भवेत्, एतदुक्तं भवति–एकस्मिन् समये उत्पाद एव स्याददेशत्वात् प्रदीपस्येव, एवं व्ययोऽपि, अनभिमतप्रतिषेधमाह–न 'उभयं' उत्पादव्ययद्वयमस्यैकसमये स्यात्, किं कारणमित्याह–'ज'त्ति यस्मात् 'वस्तुनो' द्रव्यस्य 'एकेन धर्मेण' एकेन स्वभावेन 'समकं' हेलयैव 'न भवननाशौ' नोत्पादव्ययौ स्यातां, नह्यङ्गुलिद्रव्यं येनैव धर्मेणर्जु भवति तेनैवर्जुत्वेन व्येति, विरोधात्, धर्मान्तरेण त्वेकसमयमपि भवेत्, यतो यस्मिन्नेव समये तत्तथोत्पद्यते, तस्मिन्नेव चान्यथा व्येति, द्रव्यतया त्ववस्थितमेवास्ते इत्याह'उप्पाए'त्यादि पूर्वार्धेन दार्ष्टान्तिकः पश्चादर्द्धेन तु दृष्टान्तः, यस्मिन्नेव समये ऋजुत्वोत्पादस्तस्मिन्नेव वक्रत्वनाशोऽङ्गुलिर्द्रव्यतया त्ववस्थितैवेति भावनीयं सर्वत्र ॥७५७–७५८॥ तथा च–'उप्पज्जती'त्यादि । उदेत्यकौटिल्येनाङ्गुलिद्रव्यमिति शेषः, नश्यति कौटिल्येनैकदा तिष्ठति चेति गम्यते, अत्राविरोधः, नतु तस्मिन्नेवाकौटिल्यसमये नाशोऽकौटिल्यतायाः, तथा भाविवक्रत्वभवनं वा, विरोधात्, ॥७५९॥ तथा चाह–'लद्ध' इत्यादि ॥ इह वस्तुनो कौटिल्यादेर्लब्धात्मलाभस्य सतो नाशो युज्यते, लाभश्च–स्वस्वभावावाप्तिश्च तस्य कौटिल्यादेः समयेन, ततश्च

यदि तस्मिन्नेव–उत्पत्तिसमये नाशः प्रतिपादितः ततो 'नित्यविनष्टे' नित्यमनाविर्भूते 'कुतो भवनं ?' कुतः स्वात्मलाभप्राप्तिः ?, अत एवमेकेन पर्यायेण विनाशोत्पादे ॥७६०॥ किंमत आह–'सव्वुप्पाये'त्यादि ॥ सर्वेषामूलादुत्पत्त्यभावस्तदभावे च विनाशः– अभावो भवेत् कस्य?, लब्धात्मलाभस्य ध्वंसात्तस्य चाप्राप्तेः, तदभावे च स्थित्यभावः, ततश्च सर्वाभावस्ततोऽप्यायाताऽशेषस्य जगतः शून्यतेति । दार्ष्टान्तिकभावना त्वेवम्, उप्पज्जइ वज्झेणं णासइ अब्भंतरेण तस्समयं । णउ तंमि चेव अंतो नासो वज्झा हि भवणं वा ॥१॥ तम्हा तं णोभयं समयं इति स्थितम् ॥७६१॥ उत्तरगाथासम्बन्धनार्थमाह–'दव्वाईणम्मि'त्यादि सुगमा, नवरं पूर्वमिति 'संखेज्जमणोदव्वे'इत्येवमादिना ॥७६२॥

दव्वाओ असंखेज्जे संखेज्जे यावि पज्जवे लहइ । दो पज्जवे दुगुणिए लहइ य एगाओ दव्वाओ । नि. ६४

एगं दव्वं पेच्छं खंधमणुं वा स पज्जवे तस्स । उक्कोसमसंखिज्जे संखिज्जे पेच्छए कोई ॥७६४॥

दो पज्जवे दुगुणिए सव्वजहण्णेण पेच्छए ते य । वण्णाइए य चउरो नाणंते पेच्छइ कयाई ॥७६५॥

सागारमणागारा ओहि-विभंगा जहण्णया तुल्ला । उवरिमगेवेज्जेसु परेण ओही असंखेज्जो ।७६६। नि. ६५

सविसेसं सागारं तं नाणं निव्विसेसमणगारं । तं दंसणंति ताइं ओहिविभंगाण तुल्लाइं ॥७६७॥

आरब्भ जहण्णाओ उवरिमगेवेज्जगावसाणाणं । परओऽवहिनाणं चिय न विभंगमसंखयं तं च ॥७६८॥

'दव्वाओ'इत्यादि, इहावधिज्ञान्येकस्मात् परमाण्वादेर्द्रव्यादसंख्येयान् पर्यायान् नीलनीलेतरादीनेकादिगुणकृष्णादीन् वा गुरुलघ्वा-

दीन् वा लभते उत्कृष्टः, मध्यमः संख्येयान्, जघन्यस्तु द्वौ पर्यायौ द्विगुणितौ, चतुरो वर्णादीनित्यर्थः । इति गाथार्थः ॥७६३॥ 'एगं दव्व'मित्यादि, 'दो पज्जवे'त्यादि सुबोध्यम्, नवरं नानन्तान् प्रतिव्यक्तिकं, न समुदायमङ्गीकृत्य । द्वारम् ॥७६४-७६५॥ अथ "नाणदंसणविभङ्गे" इतिद्वारत्रयमभिधीयते, कस्य कियानवधिरिति, तत्र गाथा—'सागारे'त्यादि ॥ जघन्य एव जघन्यकः, सर्वस्तोक इत्यर्थः । तस्मात् जघन्यकादारभ्य 'तुल्यौ'सदृशौ भवतः, सर्वत्रेति शेषः, कावित्याह—'अवधिविभङ्गौ' अवधिश्च विभङ्गश्च तौ, किंविशिष्टौ यावित्याह—साकारानाकारौ, एतदुक्तं भवति—सम्यग्दृष्टेरवधिः, स च साकारो भवत्यनाकारश्च, मिथ्यादृष्टेर्विभङ्गोऽसावपि च साकारोऽनाकारश्च, तौ जघन्यादारभ्य सर्वत्र तुल्यौ, किमविशेषेण ?, नेत्याह—उपरिमग्रैवेयकेषु, तुरपिशब्दार्थः,तेनैतदुक्तं भवति—भवनपतित आरभ्य उपरिमग्रैवेयकेष्वप्ययमेव न्यायो यदुत—'सागारमणागारा ओहिविभंगा जहण्णओ आरब्भ तुल्ला' परतस्तु किमित्यत आह—परतोऽवधिरेव, तत्र मिथ्यादृष्ट्युपपातासम्भवात्, स चासंख्येय इत्यत आह—स चासंख्येयो योजनापेक्षया, देवानां चायं प्रायो निरूपित इति गाथार्थः ॥७६६॥ 'सविसेस'मित्यादि 'आरब्भे'त्यादि गतार्थे ॥७६७-७६८॥द्वारम्॥ साम्प्रतं देशद्वाराभिधानायाह—

**नेरइय-देव-तित्थंकरा य ओहिस्सऽवाहिरा होंति । पासंति सव्वओ खलु सेसा देसेण पासंति ॥नि. ६६**

ओहिण्णाणक्खेत्तब्भंतरगा होंति नारयाईया । सव्वदिसोऽवहिविसओ तेसिं दीवप्पभोवम्मो ॥७७०॥
अब्भिंतरत्ति भणिए भण्णइ पासंति सव्वओ कीस ? । ओयइ जमसंतयदिसो अंतोऽवि ठिओ न सव्वत्तो ॥७७१॥
निययावहिणो अब्भिंतरत्ति वा संसयावणोयत्थं । तो सव्वओऽभिहाणं होउ किमब्भिंतरग्गहणं ? ॥७७२॥
अब्भिंतरत्ति तेणं निययावहिणोऽवसेयया भइया । भवपच्चयाइचयसा सिद्धे कालस्स नियमोऽयं ॥७७३॥

**सेसच्चिय देसेणं न उ देसेणेव सेसया किंतु। देसेण सव्वओवि य पेच्छन्ति नरा तिरिक्खा य ॥७७४॥**

'नेरइय'इत्यादि ॥नरकेषु भवा नारकाः क्रीडाभाजो देवाः तीर्थंकरणशीलास्तीर्थंकराः द्वन्द्वश्च समासः, च एवकारार्थत्वादवधारणार्थः, अस्य च व्यवहितं प्रयोगं दर्शयिष्यामः, त एते नारकादयः 'अवधेः' अवधिज्ञानस्य 'अबाह्या भवन्ति' अवध्युपलब्धस्य क्षेत्रस्यान्तर्वर्त्तन्ते, सर्वतोऽवभासकत्वात् प्रदीपवदित्युक्तं भवति, ततश्चार्थाद्बाह्यावधय एव भवन्ति, नैषां बाह्यावधिर्भवतीत्यर्थः, तथा 'पश्यन्ति' आलोकयन्ति 'सर्वतः' सर्वासु दिक्षु, खलुशब्दोऽप्येवकारार्थः, स चाप्यवधारण एव, सर्वास्वपि दिग्विदिक्ष्विति, तत्रैतत्स्याद्–एतेऽवधेरबाह्या भवन्तीत्यनेनैव पश्यन्ति सर्वतः खल्विति सिद्धत्वात् द्वितीयपदोपादानं न कर्त्तव्यं, गतार्थत्वात्, तन्न, सन्देहापनोदार्थत्वात्, तथाहि–वलयाकारावधिमन्तोऽप्यवधिज्ञानोपलब्धक्षेत्रान्तर्भवन्तो न सर्वतः पश्यन्ति दिगन्तरालादर्शनात्, अत उच्यते–पश्यन्ति सर्वत एव, शेषास्तु शेषास्तिर्यग्नरा देशेनेत्येकदेशेन पश्यन्ति, अत्र चेष्टतोऽवधारणविधिः, शेषा एव देशतः पश्यन्ति, न तु शेषा देशत एवेति गाथार्थः ॥७६९॥ अथवाऽन्यथा व्याख्यायते–ततश्च नारकदेवतीर्थकरा अवधेरबाह्या भवन्तीति कोऽर्थः ?, अवधिज्ञानवन्तोऽमी भवन्ति, अयमर्थः, अत इदानीं संशयः–किमेते देशतः पश्यन्तीत्यत आह–पश्यन्ति सर्वत एव, आह–यद्येवं पश्यन्ति सर्वत इत्येतावदेवास्तु अभ्यन्तरग्रहणमनर्थकं, संशयोद्भूतिहेतुत्वाद् अस्य च तद्व्यावृत्तिहेतुत्वात्, तन्न, एतद्ग्रहणे सत्यपि अभ्यन्तरग्रहणस्य नियतावधित्वविशेषकत्वादतो नियतावधयोऽमी भवन्ति सर्वतोऽवभासवन्तश्चेति पौर्वापर्यम्। तत्रैतत्स्यात्–नियतावधित्वमप्यमीषामत एव सिद्धं, भवप्रत्ययो नारकदेवाना( तत्त्वा० अ० १ सू० )मिति वचनात्, तीर्थकृतामपि पारभविकोऽवधिरिति प्रसिद्धेस्ततश्च 'पासंती'त्याद्येवास्त्विति, तन्न, यतः भवप्रत्ययादिवचसा सिद्धे कालस्य नियमोऽयं, भवक्षयं यावदमी अभ्यन्तरावधयः पश्यन्ति च सर्वतः इति

पुनरपि पौर्वापर्यमिति गाथार्थः ॥७६९॥ आद्यं व्याख्यानं कुर्वन्नाह भाष्यकारः—'ओहि'इत्यादि॥ अवध्यभ्यन्तरा नारकादयो भवन्ति यतः सर्वतः 'सव्वे'त्यादि स्पष्टम् ॥७७०॥ चोदक आह–'अब्भिंतर'मित्यादि पूर्वार्द्धं स्पष्टं, सूरिराह–'जं अन्तोवि ठिओ न सव्वओ ओयइ', कोऽसौ ? असंततदिशो वलयाकारः एकदिशो वेति भावनेति गाथाद्वयार्थः ॥७७१॥ द्वितीयं व्याख्यानं कुर्वन्नाह–'नियये'-त्यादि। अथवाऽभ्यन्तर इति कोऽर्थः ?, नियतावधयो, नियमेनामीपामवधिर्भवतीत्याकूतं, ते च किं देशतः पश्यन्ति उत नेति संशयापनोदार्थं पश्यन्ति सर्वत एवेत्याह, यद्येवं ततः सर्वतोऽभिधानमेवास्तु किमनेनेति, उच्यते–'अब्भिंतरत्ती' त्यादि। 'तेने'ति ततस्तर्हि अभ्यन्तरा इति कोऽर्थः ?, नियतावधयो, नियमेनामीपामवधिर्भवतीत्यभिप्रायप्रकटनम्, अवशेपास्तु–तिर्यङ्मनुष्याः भजिताः कदाचिन्नियतावधयः कदाचिदनियतावधय इति गाथार्द्धार्थः, भवप्रत्ययादिवचनादेवेदं सिद्धमिति चेत्, अत आह–'भवे' त्यादि, गतार्थम् ॥७७२–७३॥ चरमावयवं व्याचिख्यासुराह—'सेसघिये' त्यादि, गतार्था ॥७७४॥ द्वारम्। अथ क्षेत्रद्वारम्–

संखेज्जमसंखेज्जो पुरिसमवाहाए खेत्ततो ओही। संबद्धमसंबद्धो लोगमलोगे य संबद्धो ॥७७५॥ (नि. ६७॥)

ओही पुरिसे कोई संबद्धो जह पभा व दीवम्मि। दूरंधयारदीवयदरिसणमिव कोइ विच्छिण्णो ॥७७६॥

संखिज्जमसंखिज्जं देहाओ खित्तमंतरं काउं। संखेज्जासंखेज्जं पेच्छइ तदंतरमवाहा ॥७७७॥

संबद्धासंबद्धो नरलोयंतेसु होइ चउभंगो। संबद्धो उ अलोए नियमा पुरिसेऽवि संबद्धो ॥७७८॥

तत्र 'संखेज्ज' इत्यादि, तत्र क्षेत्रतोऽवधिर्द्धिधा भवति, 'संबद्धमसंबद्धो'त्ति, किमुक्तं भवति ?–इह कश्चिदवधिः पुरुषे–पूर्णः सुखदुःखानामिति पुरुषः तस्मिन् पुरुषे–द्रष्टरि 'सम्बद्धः' प्रतिष्ठितः सन्ततत्वात् प्रदीपप्रभावत्, कश्चिचासम्बद्धः झटितत्वात्, प्रकृष्टत-

मोन्याकुलप्रदेशव्यवहितप्रदीपप्रभासमुद्योतितक्षेत्रदर्शनवद्, तत्र यस्तावदसंबद्धस्स संख्येयोऽसंख्येयो वा, कथं ?–'पुरिसमबाहाए'त्ति अबाधनमबाधाऽपान्तरालमित्यर्थः, पुरुषस्याबाधा पुरुषाबाधा तया हेतुभूतया सह, अयमभिप्रायः–असम्बद्धोऽवधिः क्षेत्रतः संख्येयो वा असंख्येयो वा योजनापेक्षया, एवं सम्बद्धोऽपि, तदनेन स्वतन्त्रावधिचिन्तनमात्रं कृतम्, इदानीमयमबाधया चिन्त्यते, अत्र चतुर्भंगी–संख्येया अबाधा संख्येयोऽवधिः १, संख्येया अबाधा असंख्येयोऽवधिः २ असंख्येया अबाधा संख्येयोऽवधिः ३ असंख्येया अबाधा असंख्येयोऽवधिरिति ४, सम्बद्धे तु विकल्पाभावः, तथा 'लोगमलोगे य संबद्धो'त्ति लोके चतुर्दशरज्ज्वात्मके पञ्चास्तिकायवति, अलोके च–केवलाकाशास्तिकायात्मके, चः समुच्चये, 'संबद्धः' लग्नः, कथं ? 'लोगे'त्ति पुरुषे सम्बद्धो लोके च, लोकप्रमाणावधिः, पुरुषे न लोके, देशतोऽभ्यन्तरावधिः, न पुरुषे लोके शून्यो, न पुरुषे न लोक इति बाह्यावधिः, अलोकसम्बद्धस्त्वारमसम्बद्ध एवेति गाथार्थः ॥७७५॥ 'ओही' त्यादि 'संखेज्जे' त्यादि 'संबद्धे' त्यादि ॥७७६–७७७–७७८॥ उक्तार्थं स्थापनाद्वारम् । गतिद्वारधुना—

गइ नेरइयाईया हेट्ठा जह वण्णिया तहेव इहं । इड्ढी एसा वण्णिज्जइत्ति तो सेसियाओऽवि ॥७७९॥(नि. ६८)

जे पडिवज्जंति मइं तेऽवहिनाणंपि समहिआ अण्णे । वेयकसायाईया मणपज्जवनाणिणो चेव ॥ ७८० ॥

सम्मा सुरनेरइयाऽणाहारा जे य होंति पज्जत्ता। ते च्चिय पुव्वपवण्णा वियलाऽसण्णी य मोत्तूणं ॥ ७८१ ॥

आमोसहि विप्पोसहि खेलोसहि जल्लमोसही चेव । संभिन्नसोय उजुमइ सव्वोसहि चेव बोद्धव्वो ॥(नि. ६९)

चारण आसीविस केवली य मणनाणिणो य पुव्वधरा । अरहंतचक्कवट्टी बलदेवा वासुदेवा य ॥(नि. ७०)

संफरिसणमामोसो मुत्तपुरीसाण विप्पुसो विप्पो । अन्ने विडिति विट्ठा भासंति य पत्ति पासवणं ॥७८४॥
एए अन्ने य बहू जेसिं सव्वे य सुरभओऽवयवा । रोगोवसमसमत्था ते होंति तओसहिप्पत्ता ॥७८५॥
जो सुणइ सव्वओ सुणइ सव्वविसए व सव्वसोएहिं । सुणइ बहुए व सद्दे भिन्ने संभिन्नसोओ सो ॥७८६॥
रिजु सामण्णं तम्मत्तगाहिणी रिजुमई मणोनाणं । पायं विसेसविमुहं घडमेत्तं चिंतियं मुणए ॥७८७॥
विउलं वत्थुविसेसण माणं तग्गाहिणी मई विउला । चिंतियमणुसरइ घडं पसंगओ पज्जवसएहिं ॥७८८॥
अइसयचरणसमत्था जंघाविज्जाहिं चारणा मुणओ । जंघाहिं जाइ पढमो नीसं काउं रविकरेऽवि ॥७८९॥
एगुप्पाएण गओ रुयगवरम्मिओ तओ पडिनियत्तो । बीएणं नंदिस्सरमिहं तओ एइ तइएणं ॥७९०॥
पढमेण पंडगवणं बीओप्पाएण नंदणं एइ । तइओप्पाएण तओ इह जंघाचारणो हो(ए)इ ॥७९१॥
पढमेण माणुसोत्तरनगं स नन्दिस्सरं तु बिइएण । एइ तओ तइएणं कयचेइयवंदणो इहइं ॥७९२॥
पढमेण नन्दणवणे बीओप्पाएण पंडगवणंमि । एइ इहं तइएणं जो विज्जाचारणो होइ ॥७९३॥
आसी दाढा तग्गयमहाविसाऽऽसीविसा दुविहभेया । ते कम्मजाइभेएण णेगहा चउविहविगप्पा ॥७९४॥
मणनाणिग्गहणेणं विउलमई केवली चउब्भेओ । सम्मत्तनाणदंसणचरणेहिं खयप्पसूएहिं ॥७९५॥
ओहिन्नाणावसरे मणपज्जवकेवलाण किं गहणं ? । लद्धिपसंगेण कयं गहणं जह सेसलद्धीणं ॥७९६॥

सोलस रायसहस्सा सव्वबलेणं तु संकलनिबद्धं । अंछंति वासुदेवं अगडतडम्मी ठियं संतं ॥ नि. ७१ ॥
घेत्तूण संकलं सो वामगहत्थेण अंछमाणाणं । भुंजिज्ज विलिंपिज्ज व महुमहणं ते न चाएंति ॥ नि. ७२ ॥
दो सोला बत्तीसा सव्वबलेणं तु संकलनिबद्धं । अंछंति चक्कवट्टिं अगडतडम्मी ठियं संतं ॥ नि. ७३॥
घेत्तूण संकलं सो वामगहत्थेण अंछमाणाणं । भुंजिज्ज विलिंपिज्ज व चक्कहरं ते न चायंति ॥ नि. ७४ ॥
जं केसवस्सउ बलं तं दुगुणं होइ चक्कवट्टिस्स । तत्तो बला बलवगा अपरिमियबला जिणवरिंदा ॥नि.७५॥

खीर-महु-सप्पिसाओवमा उ वयणा तयासवा होंति । कोट्ठयधन्नसुनिग्गलसुत्तत्था कोट्ठबुद्धीया ॥ ८०२ ॥
जो सुत्तपएण बहुं सुयमणुधावइ पयाणुसारी सो । जो अत्थपएणऽत्थं अणुसरई स बीयबुद्धी उ ॥ ८०३ ॥
उदय-क्खय-खउवसमो-वसमसमुत्था बहुप्पगाराओ । एवं परिणामवसा लद्धीओ होंति जीवाणं ॥८०४॥
केई भणंति वीसं लद्धीओ तं न जुज्जए जम्हा । लद्धित्ति जो विसेसो अपरिमिया ते य जीवाणं ॥ ८०५ ॥
गणहरतेयाहारयपुलायवोमाइगमणलद्धीओ । एवं बहुगाओऽवि य सुव्वंति न संगिहीयाओ ॥ ८०६ ॥
आमोसही य खेले जल्ले विप्पे य होइ सव्वे य । कोट्ठे य बीयबुद्धी पयाणुसारी य संभिन्ने ॥ १ ॥
उजुमइ-विउल क्खीरे महु-अक्खीणे विउव्वि-चरणे य । विज्जाहर-अरहंता चक्की बल-वासु बीसइमे ॥२॥
भवसिद्धियाणमेता वीसंपि हवंति एत्थ लद्धीओ । भवसिद्धियाण महिलाण जत्तिया जाउ तं वोच्छं ॥ ३॥

जिण-बल-चक्की-केसव-संभिन्ने-जंघचरण-पुव्वे य। भवियाइवि इत्थीए एयाओ न सत्त लद्धीओ ॥ ४ ॥
रिजुमइ-विउलमईओ सत्त य एयाओ पुव्वभणियाओ। लद्धीओ अभव्वाणं होंति नराणंपि न कयाइ ॥५॥
अभवियमहिलाणंपि हु एयाओ न होंति भणियलद्धीओ। महुखीरासवलद्धीवि नेय सेसाउ अविरुज्झा ॥६॥"
भव्वाभव्वाइविसेसणत्थमहवा तयंपि सवियारं। भव्वावि अभव्वा विय जं चक्कहरादओ भणिया ॥८०७॥
पोग्गलपरियट्टद्धं जं नरदेवंतरं सुए भणियं। तो सो भव्वो कालो जमयं निव्वाणभावीणं ॥ ८०८ ॥
भणिओऽवहिणो विसओ तहावि तस्संगहं पुणो भणइ। संखेवकईण हियं अव्वामोहत्थमिट्ठं च ॥ ८०९ ॥
दव्वाइं अंगुलावलिसंखेज्जाईयभागविसयाइं। पेच्छइ चउग्गुणाइं जहण्णओ मुत्तिमंताइं ॥ ८१० ॥
उक्कोसं संखाइयलोगपोग्गलसमानियद्धाइं। पइदव्वं संखाइयपज्जायाइं च सव्वाइं ॥ ८११ ॥
ओहिविभागे भणियंपि लद्धिसामण्णओ मणोनाणं। विसयाइविभागत्थं भण्णइ नाणक्कमायातं ॥८१२॥

'गई'त्यादि। गतिर्नारकादिका, आदिशब्दादिन्द्रियादिपरिग्रहः, अधस्ताद्यथा मतिप्रस्ताव उक्ता एवमिहाप्यवधौ, विशेषं वक्ष्यति भाष्यकारः, एषा च ऋद्धिरतोऽनेन प्रस्तावेन शेषा अप्यामर्षौषध्यादय उच्यन्ते इति गाथार्थः ॥ ७७९ ॥ 'जे'इत्यादि। ये मतिज्ञानस्य प्रतिपद्यमानकास्तेऽवधेरिति, किमविशेषेण ?, नेत्याह—समधिका अन्ये अवधेः प्रतिपद्यमानकास्तद्यथा वेदातीताः श्रेणिद्वयेऽवधेः प्रतिपद्यमानका भवन्ति, मतेस्तु नोक्ताः, सम्यक्त्वप्राप्तावेतल्लाभात्, एवं सर्वत्र भावना, तथा कषायातीताश्च सूक्ष्मसम्परायादयः तथा मनःपर्यायज्ञानिनश्चेति गाथार्थः ॥ ७८० ॥ तथा—'सम्मा' इत्यादि। अपरिवडियसम्मद्दिट्ठीणो मणुया नारगसुरेसु उववज्ज-

माणा आहारगद्वारे अनाहारकमङ्गीकृत्य पडिवज्जमाणया, मतेः पुनरमी नोक्ताः, तथा ये च भवन्त्यपर्याप्तका अविग्रहोपपातादौ अपर्याप्तकद्वारे शक्तिमङ्गीकृत्य, पूर्वप्रतिपन्नेषु का वार्त्तेत्यत आह–त एवास्य पूर्वप्रतिपन्ना ये मतेः, किमविशेषण ?, नेत्याह–विकलेन्द्रियान् असंज्ञिनो मुक्त्वा, तेषां तद्विषयत्वादेवेति गाथार्थः ॥ ७८१ ॥ प्रागुक्तसम्बन्धं गाथाद्वयमाह–'संफरिसण'मित्यादि भाष्यगाथाः पञ्च प्रतीतार्थाः, नवरं यः किल सर्वतः शृणोति स संभिन्नश्रोताः, यद्वा श्रोतांसि इन्द्रियाणि सम्भिन्नान्येकैकशः सर्वविषयैरस्य परस्परतो वेति स सम्भिन्नश्रोताः, सम्भिन्नान् वा परस्परतो लक्षणतो विधानतश्च सुबहूनपि शब्दान् शृणोति स संभिन्नश्रोतेति ॥७८४–८८॥ अथ 'चारण' त्ति पदम्–'अइसये'त्यादि । अतिशयो–यथावत्श्रुताभ्यासजनितो विद्यादिलाभः अतिशयेन चरणे–गमने समर्थाः–मत्पलाः, के च ते ? इत्याह–'मुनयः' साधवो भगवन्तः, ते च द्विविधा भवन्ति, कथमित्याह–'जंघाविज्जाहिं चारण'त्ति जङ्घाचारणा विज्जाचारणा य, प्रथमसामर्थ्योपवर्णनायाह–जंघाभ्यां याति प्रथमो–जङ्घाचारणः, किं कृत्वेत्याह'निश्रां कृत्वा' अवलम्बनं कृत्वा 'रविकरानपि' आदित्यकिरणानपि, मेरुशिखरादाविति गम्यत इति गाथार्थः ॥७८९॥ कथमित्यत आह–'एगु'इत्यादि । अतः एतस्मात्कर्मभूमिस्थानाद् 'एकोत्पादेन' एकक्रमेण 'गतो' याति रुचकवरद्वीपं, चैत्यवन्दनार्थमिति गम्यते, ततो रुचकवरात् प्रत्यागच्छन् द्वितीयेनोत्पादितेन नन्दीश्वरद्वीपं तदाराद्वर्तिनमागच्छति, ततस्तृतीयेनावस्कन्देन इह एति यतो गतः आसीदिति गाथार्थः ॥७९०॥ एवं तावत्तिर्यक्सामर्थ्यम्, अथ ऊर्ध्वमाह–'पढमेणे'त्यादि । प्रथमेन क्रमेणामुतः पण्डकवनं याति, मेरोः शिखरमित्यर्थः, द्वितीयेन नन्दनवनं, प्रथमां मेखलामित्यर्थः तृतीयेन त्विहवीति गाथार्थः ॥७९१॥ विद्याचारणसामर्थ्यमप्याह–'पढमेणे'त्यादि । अयमपि प्रथमेनावस्कन्देन मानुषोत्तरं पर्वतमेति, द्वितीयेन नन्दीश्वरमेति–यातीत्यर्थः, ततपरावृत्तः एति ततो नन्दीश्वराद् कृतचैत्यवन्दन इह–भरत-

क्षेत्रादाविति गाथार्थः ॥७९२॥ एवत्तिर्यग्, ऊर्ध्वमथ आह–'पढमेणे'त्यादि। स्पष्टार्था ॥७९३॥ 'आसी'त्यादि। आस्यो–दंष्ट्राः तासु विषमेषामित्यासीविषाः ते द्वेधा–कर्मभेदेन जातिभेदेन च, तत्र जातिभेदेन चतुर्विधविकल्पा वृश्चिकमण्डूकोरगमनुष्यजातयो यथार्थस्यन्धात्, कर्मतस्तु क्रियातस्तु तपश्चरणादितोऽन्यतो वा गुणतोऽनेकविधास्तद्यथा तिर्यञ्चो मनुष्याः देवाश्चासहस्रारादिति गाथार्थः ॥७९४॥ 'मणे'त्यादि। मनोज्ञानिग्रहणेन विपुलमतिः, प्रागुक्तमासीत्, स्वरूपज्ञापनार्थं, 'केवली य' ति केवली च चतुर्दा, कः ? इत्याह–सम्यक्त्वादिभिः क्षायिकैरिति गाथार्थः ॥ एतदवरतु मन्यमान आह 'ओही'त्यादि स्पष्टा, नवरं लद्धी एते मनःपर्यायकेवले अत उक्ते, प्रसङ्गायातत्वाचारणादिवत् ! 'पुव्वधर' त्ति पूर्वाणि धारयन्तीति पूर्वधराः, अर्हदादयस्तु प्रतीता इति निर्युक्तिगाथाद्वयार्थः ॥७९५–७९६॥ साम्प्रतमत्रैव वासुदेवादीनां महापुरुषाणां वीर्यान्तरायक्षयोपशमादिप्रभवं सामर्थ्यमुत्कीर्त्यते–'सोलसे'त्यादि। गाथाः पञ्च। 'अच्छन्ति' आकर्षन्ति 'भुंजेज्ज'त्ति भुञ्जीत विलिम्पेत वा न चायेत्याकृष्टुं, ततः–सामान्यजनपदबलाद् बलदेवा बलवत्तराः, जिनवरेन्द्रास्त्वनन्तबलाः, समस्तवीर्यान्तरायकर्मक्षयादिति, शेषं स्पष्टत्वान्नाख्यातम्। तदेवमेता लब्धयः किल संक्षेपेणोक्ताः, साम्प्रतमेतदधिकारानुवृत्तेर्विमध्यमप्रमाणोपदर्शनाय चाह भाष्यकारः—'खीर' इत्यादि। 'जो सुत्ते' त्यादि ॥ ८०२–३ ॥ उपसंहरन्नाह–'उदये'त्यादि ॥८०४॥ तदेवमभिधाय केषांचिन्मतमाशिशङ्कयिषुराह–'केइ' इत्यादि। केचन प्रज्ञाभिमानिनो व्याचक्षते यथा विंशतिरेव लब्धयः, नाधिका न्यूना वा, उक्तं च–अतः पूर्वपक्षतः 'केइ भणंति वीसं लद्धीओ,' भणंतु काऽत्रानुपपत्तिरित्याह–तन्न, लब्धेरतिशयत्वाचस्य च जीवेष्वपरिमितत्वादिति गाथार्थः ॥८०५॥ अपि च यदि सत्यमेव विंशतिर्लब्धयः स्युस्ततोऽन्यासामपि परिगणनं स्यात्, तथा च सति संख्यानियमो प्लाव्येत, गणधरादिलब्धिपरित्यागप्रसङ्गात्, तथा

च–'गणहरे'त्यादि स्पष्टा ॥ ८०६ ॥ सूरिराह–'भव्वा' इत्यादि । अथ चेत् भव्याभव्यादिविशेषणार्थमेव लब्धीनां प्ररूपणप्रयासः, एतदुक्तं भवति–एता विंशतिर्भव्यानामेव, शेषास्त्वभव्यानामिति, उच्यते, तदप्येवं प्ररूपणं सविचारम्-अनैकान्तिकम्, अन्यत्रापि समानत्वात् व्यभिचाराच्च, तथाहि–नैता भव्यानामेव, अपि त्वभव्यानामप्युक्तवत्, कथं चाऽन्यत्रापि समानत्वमित्याह–यद्-यस्मात् चक्रधरादयः भव्या एव सन्तोऽभव्या अपि, अभव्यलब्धिष्वपि मध्ये 'भणिताः' पठिताः सूत्रेऽतो न्यत्रापि समानम्, आह–कथं पुनर्ज्ञायते भव्या एव चक्रधरा इति ?, उच्यते–'पोग्गले'त्यादि ॥ यद्–यस्मान्नरदेवान्तरं श्रुते भणितं कालतः पुद्गलपरावर्त्तस्याप्यर्द्धं 'होऊण चक्कवट्टी पुणोवि अह होइ एत्तिए य गए'त्ति तओ असौ भव्यो वर्त्तते, कुतः? इत्याह 'यत्' यस्मात्कालोऽयं-पुद्गलपरावर्त्तार्धप्रमाणः कायस्था निर्वाणभाविनां, भव्यानामित्यर्थः, अभव्यानां त्वन्तरकालो वनस्पतिकाल इति गाथार्थः ॥८०७–८॥ उपसंहरन्नाह–'भणिओ' इत्यादि ॥ उक्तोऽवधेर्विषयः 'ओही खेत्तपरिमाणे' इत्यादि द्वारगाथाद्वयेन तथापि येऽतिसंक्षेपरुचयः सत्त्वास्तद्धिताय तत्संग्रहं भूयोऽपि 'वक्ति' भणति च, अर्थात् सूत्रकारः अव्यामोहार्थत्वाद्, इष्टं चैतच्छिष्यादिहितत्वादिति गाथार्थः ॥८०९॥ 'दव्वाइं' इत्यादि ॥ इह ओहिणाणी जहण्णओ मुत्तिमन्ताइं दव्वाइं पेच्छइ क्षेत्रकालाभ्यां तु अङ्गुलावलिकासंख्येयभागाभ्यन्तरतः भावतो चउगुणाइं दव्वाइं 'दो पज्जवे दुगुणिए' त्ति वचनात् ॥ 'उक्कोस'मित्यादि भावितार्था ॥ तदनेन यदुक्तं 'तं समासओ चउव्विहं पण्णत्तं'ति तदाख्यातमिति अवधिज्ञानार्थस्तत्परिसमाप्तः ॥ 'ओही'त्यादि ॥८१०–८१२॥

मणपज्जवनाण पुण जणमणपरिचिंतियत्थपागडणं । माणुसखेत्तनिबद्धं गुणपच्चइयं चरित्तवओ (नि.७६)

पुणसद्दो उ विसेसे रूविनिबंधाइतुल्लभावेऽवि । इदमोहिन्नाणाओ सामिविसेसाइणा भिन्नं ॥ ८१४ ॥

तं संजयस्स सव्वप्पमायरहियस्स विविहरिद्धिमओ। समयक्खेत्तब्भितर सण्णिमणोगयपरिण्णाणं ॥८१५॥
मुणइ मणोदव्वाइं नरलोए सो मणिज्जमाणाइं। काले भूयभविस्से पलियासंखिज्जभागम्मि ॥८१६॥
दव्वमणोपज्जाए जाणइ पासइ य तग्गएऽणंते। तेणावभासिए उण जाणइ बज्झेऽणुमाणेणं ॥८१७॥
सो य किर अचक्खुदंसणेण पासइ जहा सुयन्नाणी। जुत्तं सुए परोक्खे पच्चक्खे न उ मणोनाणे ॥८१८॥
जइ जुज्जए परोक्खे पच्चक्खे नणु विसेसओ घडइ। नाणं जइ पच्चक्खं न दंसणं तस्स को दोसो ? ॥८१९॥
अन्नेऽवहिदंसणओ वयंति न य तस्स तं सुए भणियं। न य मणपज्जवदंसणमन्नं च चउप्पयाराओ ॥८२०॥
अहवा मणपज्जवदंसणस्स मयमोहिदंसणं सण्णा। विब्भंगदंसणस्स व नणु भणियमिदं सुयाईयं ॥८२१॥
जेण मणोनाणविओ दो तिण्णि व दंसणाइं भणियाइं। जइ ओहिदंसणं होज्ज होज्ज नियमेण तो तिण्णि ॥८२२॥
अन्ने उ मणोनाणी जाणइ पासइ य जोऽवहिसमग्गो। इयरो य जाणइ चिय संभवमेत्तं सुएऽभिहियं ॥८२३॥
अन्ने जं सागारं तो तं नाणं न दंसणं तम्मि। जम्हा पुण पच्चक्खं पेच्छइ तो तेण तन्नाणी ॥८२४॥
भण्णइ पण्णवणाए मणपज्जवनाणपासणा भणिया। तो एव पासए सो संदेहो हेउणा केण ? ॥८२५॥

'मण'इत्यादि। मनःपर्यायज्ञानं–प्राग्निरूपितशब्दार्थम्, पुनःशब्दो विशेषणार्थः, इदं हि रूपिद्रव्यनिबन्धनक्षायोपशमिकप्रत्ययत्वादि-सामान्येऽपि सत्यवधिज्ञानात् स्वाम्यादिभेदेन विशिष्टमित्यर्थभेदेनेति, स्वरूपमस्याह–जनमनःपरिचिन्तितार्थप्रकटनं, मानुषक्षेत्रम्-अर्धतृतीयद्वीपसमुद्रपरिमाणं तन्निबद्धं 'गुणप्रत्ययम्'असाधारणक्षान्त्यादिगुणप्रभवम्, इदं च चारित्रवत एव स्याद्, एतदुक्तं भवति-आम-

पंपध्यादिऋद्धिप्राप्तस्यैवेति समुदायार्थः । 'पुण'इत्यादि ॥ 'त'मित्यादि व्याख्यातार्थम् ॥८१३ १५॥ यदुक्तं-तं समासओ चउव्विह-मित्येतदाह-'मुणइ' इत्यादि । मन्यमानान्ययं जानीते योग्यानि काले त्रिविधेऽपि, कियत्प्रमाणे ?-पल्योपमासंख्येयभागेऽतीतादौ । पर्यायत आह-'दव्वमणो' इत्यादि । द्रव्यात्मकं मनो द्रव्यमनस्तस्य पर्याया द्रव्यमनःपर्यायास्तान् 'जानाति' विशेषभूयिष्ठपरिच्छेदतः साक्षात्करोति स्पष्टावभासित्वात्, करतलामलकवत्, तथा पश्यति च सामान्येन, क्व स्थितानित्याह-'तद्गतान्' द्रव्यमनोऽस्तित्वपर्याय-सम्बद्धानित्यर्थः, कियत इत्याह-अनन्तान्, अन्यानपि भावान्, किं साक्षात्करोति ?, नेत्याह-तेन पुनर्द्रव्यमनसाऽवभासितान् बाह्यान् मन्दरमकराकरादीन् जानात्यनुमानेन, न साक्षाद्, अमूर्त्तत्वादपि च ह्यस्येति गाथार्थः ॥८१६-७॥ आह-अन्यत्र प्रतिपादितं-"जाणइ पासति" अतः किमुक्तं-'जाणति पासति य' ? इत्यत आह-'सो य किरे' त्यादि । स च किल-मनःपर्यायज्ञानी अचक्षुर्दर्शनेन-शेषेन्द्रियोपलब्धिरूपावग्रहादिमतिव्यापारेण तान् पश्यति, क इवेत्याह-'यथा' येन प्रकारेण श्रुतज्ञानी अचक्षुर्दर्शनेन पश्यतीत्युक्तं, विकल्पत इति भावः, एवं परिहृते सत्याह-'युक्तं' घटमानकं 'श्रुते' ज्ञातस्वभावे मेर्वादावचक्षुर्दर्शनेन दर्शनमिति प्रक्रमः, किमिति ? परोक्षत्वात्तस्य, 'न तु' नैव मनःपर्यायज्ञाने ज्ञातस्वभाव एव युक्तमचक्षुर्दर्शनेनावग्रहादिरूपमतिव्यापारेण तद्दर्शनं, तस्य प्रत्यक्षत्वादिति गाथार्थः ॥८१८॥ उच्यते-'जइ जुज्जए' इत्यादि । यदि परोक्षे श्रुते युज्यते अचक्षुर्दर्शनेन दर्शनं तन्ननु प्रत्यक्षेऽस्मिन् विशेषतः-सुतरां घटते अवग्रहादिलक्षणमतिव्यापाराचक्षुर्दर्शनेन दर्शनं, तथाहि-'ज्ञानं' मनःपर्यायज्ञानं यदि प्रत्यक्षं न दर्शनमचक्षुर्दर्शनं ततस्तस्य मनःपर्यायविदः को दोषो ?, नैव दोषः,तस्यान्यविषयत्वात्, अवधिज्ञानिनश्चक्षुर्दर्शनाचक्षुर्दर्शनवत्, अत एव 'जाणइ पासइ' यदुक्त-मिति गाथार्थः । अन्ये पुनरस्य पश्यत्तामेवं समर्थयन्तीत्याह-अन्ये त्वाहुः-असौ अवधिदर्शनेन पश्यति इति ब्रुवतां को दोषः ?

इत्यत आह-'न च' नैव तस्य-मनःपर्यायविदस्तत्-अवधिदर्शनं सूत्रे प्रतिपादितं,'न य अण्णं च'त्ति न च अन्यत्-चतुष्प्रकाराद् दर्शनादधिकं मनःपर्यायदर्शनमस्ति, चक्षुरचक्षुरवधिकेवलदर्शनमिति सूत्रप्लुतेरिति गाथार्थः ॥८१९-२०॥ 'अहवे'त्यादि ॥ अथ चेन्मनःपर्यायदर्शनस्यावधिदर्शनमिति संज्ञा मता तस्यां सूत्रश्रुताविति, कस्येवेत्यत आह-'विभंगदंसणस्स व' यथा विभङ्गदर्शनस्यावधिदर्शनमितिसंज्ञा, सिद्धश्च दृष्टान्तः, उच्यते-भणियं नन्विदं त्वया श्रुतातिक्रान्तं, किं वाङ्मात्रेण ?, नेत्याह-'जेणे'त्यादि ॥ येन मनोज्ञानविदो भगवत्यामासीविषोद्देशके द्वे दर्शने प्रतिपादिते चक्षुरचक्षुर्दर्शने, त्रिज्ञानित्वाद्, त्रीणि वा चतुर्ज्ञानित्वे सति, ततश्च यद्यवधिदर्शनं स्यान्मनःपर्यायदर्शनं सूत्रश्रुतौ ततः स्यान्नियमेन त्रीणीत्यतस्त्रयमेवावक्ष्यदिति गाथार्थः ॥८२१-२२॥ 'अन्ने' इत्यादि ॥ अन्ये तु मन्यन्ते-अयं जानाति पश्यति चेति, कः ? इत्यत आह-योऽवधिज्ञानसमग्रः, इतरस्तु जानात्येव केवलं त्रिज्ञानी, अतः सूत्रे सम्भवमात्रं भणितं नन्द्यादौ 'जाणति पासती'ति गाथार्थः ॥ ८२३ ॥ 'अन्ने' इत्यादि ॥ अपरे अभिदधति, यद्-यस्मान्मनःपर्यायज्ञानं 'साकारं' सविशेषं 'तो' ततस्तज्ज्ञानमुच्यते, तेन च जानात्येव, न तत्र दर्शनं, यस्मात्पुनस्तानेव स्कन्धान् 'प्रत्यक्षं पश्यति' साक्षात्करोति 'तो' ततस्तेन प्रत्यक्षद्रष्टृत्वेन तज्ज्ञानी भण्यते, क्षमाश्रमणटीकायां त्वियम्, अन्ये त्वाहुः-साकारोपयोगान्तःपातित्वान्न दर्शनं, दृश्यते चानेन प्रत्यक्षत्वादवधिवत्, इत्येतदपि न दर्शनं, दृश्यते चानेनेति विरुद्धम्, उभयधर्मान्वयाभावाद्वा न किञ्चिदिति गाथार्थः॥८२४॥ उच्यते-'भण्णई' त्यादि कण्ठ्या ॥ ८२५ ॥ सत्पदप्ररूपणादि तु स्वाम्यनुसारेणावधेरिवानुसर्त्तव्यमिति ॥ समाप्तं मनःपर्यायज्ञानम् ॥

अथ केवलमुच्यते—

अह सव्वदव्वपरिणामभावविन्नत्तिकारणमणंतं। सासयमप्पडिवाई एगविहं केवलन्नाणं ॥८२६ नि. ७७॥

मणपज्जवनाणाओ केवलमुद्देससुद्धिलाभेहिं। पुव्वमणंतरमभिहियमहसद्दोऽयं तयत्थम्मि ॥ ८२७ ॥

सव्वदव्वाण पओगवीससामीससा जहाजोग्गं। परिणामा पज्जाया जम्मविणासादओ सव्वे ॥ ८२८ ॥

तेसिं भावो सत्ता सलक्खणं वा विसेसओ तस्स। नाणं विण्णत्तीए कारणं केवलण्णाणं ॥ ८२९ ॥

किं बहुणा ! सव्वं सव्वओ सया सव्वभावओ नेयं। सव्वावरणाईयं केवलमेगं पयासेइ ॥ ८३० ॥

पज्जायओ अणंतं सासयमिदं च सदोवओगाओ। अव्वयओऽपडिवाई एगविहं सव्वसुद्धीए ॥ ८३१ ॥

केवलनाणेणऽत्थे नाउं जे तत्थ पन्नवणजोग्गे। ते भासइ तित्थयरो वइजोग सुयं हवइ सेसं ॥८३२॥नि. ७८॥

नाऊण केवलेणं भासइ न सुएण जं सुयाईओ। पण्णवणिज्जे भासइ नाणभिलप्पे सुयाईए, ॥ ८३३ ॥

तत्थवि जोग्गे भासइ नाजोग्गे गाहयाणुवित्तीए। भणिए व जम्मि सेसं सयमूहइ भणइ तम्मत्तं ॥ ८३४ ॥

वइजोगो तं न सुयं खओवसमियं सुअं तओ न तओ। विन्नाणं से खइयं सद्दो उण दव्वसुयमित्तं ॥ ८३५ ॥

सेसं छउमत्थाणं विन्नाणं जं सुयाणुसारेणं। तं भावसुयं भण्णइ खओवसमिओवओगाओ ॥ ८३६ ॥

भण्णंतं वा न सुयं सेसं कालं सुयं सुणेंताणं। तं चेव सुयं भण्णइ कारणकज्जोवयारेण ॥ ८३७ ॥

अहवा वइजोगसुयं सेसं सेसंति जं गुणब्भूयं । भावसुयकारणाओ जमप्पहाणं तओ सेसं ॥ ८३८ ॥
वइजोगसुयं तेसिंति केइ तेसिंति भासमाणाणं । अहवा सुयकारणओ वइजोगसुयं सुणेंताणं ॥ ८३९ ॥
केवलनाणं नन्दी मंगलमिति चेह परिसमत्ताइं । अहुणा स मंगलत्थो भण्णइ पगओऽणुओगत्ति ॥८४०॥

'अथे'त्यादि, अथेत्यानन्तर्यार्थो वक्ष्यमाणोपपत्तिभ्यः, शेषं स्पष्टम्, गाथाः षट् यावदिति शेषः ॥ ८२६-८२७-८२८-८२९-८३०-८३१ ॥ इह तीर्थकृत् समुत्पन्नकेवलज्ञानः सद्धर्म्मदेशनां करोतीति ध्वनिर्द्रव्यश्रुतं, स च भावश्रुताविनाभावीति तत्सम्भवेऽनिष्टापत्तिरिति मा भूदव्युत्पन्नधियां मतिमोहोऽत उच्यते–'केवले'त्यादि स्पष्टार्था, नवरं 'वइजोग'त्ति तस्यासौ वाग्योग उच्यते, शेषं छद्मस्थानां श्रुतं भवति, श्रुतानुसारप्रभवत्वात् ॥ ८३२ ॥ शेषं भाष्यकृदाह–'नाऊणे'त्यादि ॥ केवलेनैव ज्ञात्वा भाषते, नास्मद्विधवच्छ्रुतेन, तदतीतत्वात्, 'पन्नवणजोगा' प्रज्ञापनीयास्तान् भाषते, नेतरान्, वाग्गोचरातिक्रान्तत्वात् ॥ ८३३ ॥ 'तत्थवी'त्यादि सुगमा ॥८३४॥ 'वइ' इत्यादि ॥ तस्यासौ ध्वनिर्वाग्योगमात्रं, नतु श्रुतं, श्रुतस्य क्षायोपशमिकत्वात्, न चासौ क्षयोपशमस्तस्यास्ति, एतदुक्तं भवति–क्षायिकं तस्य विज्ञानं, शब्दस्तु द्रव्यमात्रम् ॥ ८३५ ॥ सुतं भवउ 'सेसं'ति व्याचिख्यासुराह–'सेस'मित्यादि सुगमा, 'अहवा सुयं भवति सेसं' कालमित्यध्याहारः ॥ ८३६ ॥ तथा चाह–'भण्णंतं वे' त्यादि ॥ इह भगवता भण्यमानं न श्रुतं, शेषं तु कालं श्रुतं, नच 'सुणेंताणं' गणहराणमित्यर्थः, अथवा 'तं चेव सद्दमेत्तं सुयं भन्नइ' कथं ?, वाग्योग एव श्रुतं वाग्योगश्रुतमितिविग्रहः, कुत इत्याह-कारणे कार्योपचाराद् वृष्टौ तन्दुलोपचारवत् ॥८३७॥ 'अहवे'त्यादि ॥ 'वइजोगसुयं सेसं'ति कोऽर्थः ? इत्याह–'सेसंति जं गुणब्भूयं', कुत एतदेवमित्याह–'भावे'त्यादि पच्छद्धं कंठं, अथवा–'वइ'इत्यादि, केति भणंति 'वतिजोगसुयं (हवइ) तेसिं' 'तेसिं'ति

कोऽर्थः इत्यत आह–'भासमाणाणं' तीर्थंकराणां, नतु 'तित्थगर' इत्येकवचनाभिधानादेवं वचनभेददोषः, तन्न 'अच्छंदा जेण भुंजंति, न से चाइत्ति वुच्चइ'त्ति न्यायसिद्धत्वात्, 'अहवा वइजोग्गसुयं'ति वाग्योग एव श्रुतं, केषां ?, शृण्वतां श्रुतकारणत्वादिति गाथार्थः, तदेवं तत्त्वादिभिर्निरूप्य गत्यादिभिरिदं निरूप्यते–तत्र गतौ सिद्धमनुष्ययोः केवलमस्ति, इन्द्रियेष्वतीन्द्रियस्य, एवं त्रसकायाकाययोः, सयोगायोगयोः, अवेदकस्य, अकषायस्य, शुक्ललेश्यालेश्ययोः, सम्यग्दृष्टेः, केवलज्ञानिनः, संयतनोसंयतनोअसंयतयोः, साकारानाकारोपयोगयोः, आहारकानाहारकयोः, भाषकाभाषकयोः, परीत्तनोपरीत्तापरीत्तयोः, पर्याप्तकनोपर्याप्तकापर्याप्तकयोः, बादरनोबादरयोः, नोसंज्ञिनः, भव्यनोभव्ययोः, चरमाचरमयोः, द्रव्यप्रमाणं प्रतिपद्यमानानामुत्कृष्टतोऽष्टशतं, पूर्वप्रतिपन्नाः केवलिनोऽनन्ताः, क्षेत्रं जघन्यतो लोकस्यासंख्येयभागः उत्कृष्टतो लोकः, स्पर्शनमप्येवमेव, कालतः साद्यपर्यवसितं, नास्यान्तरमस्ति, भागाल्पबहुत्वे प्राग्वत् ॥ ८३८–३९ ॥ अथैतावत्कालादारब्धव्याख्यानस्य फलमाह–'केवल'मित्यादि ॥ केवलज्ञानं समाप्तं, तत्समाप्तौ नन्दी, तत्समाप्तावपि मंगलं समाप्तमिति ॥

## अथ समुदायार्थद्वारमभिधित्सुराह–

'केवलं नाण' मित्यादि ॥ 'अधुना' साम्प्रतं 'स' प्रकृतः प्रस्तुतोऽनुयोगोऽभिधीयते, किंविशिष्ट इत्याह–'मङ्गलार्थः' मङ्ग्यते हितमनेनेति मङ्गलं तस्यार्थः, मङ्गलसाध्य इत्यर्थः ॥ ८४० ॥ ( इत्थं. नि. ७९ ) साम्प्रतं स इति सामान्येनोक्तत्वादाचार्य एव प्रश्नं कारयन्नाह–

**सो मइनाणाईणं कयरस्स ?, सुयस्स, जं न सेसाइं । हौंति पराहीणाइं न य परबोहे समत्थाइं ॥ ८४१ ॥**

पागण पराहीणं दीवोव्व परप्पयोहयं जं च । सुयनाणं तेण परप्पबोहणत्थं तदणुओगो ॥ ८४२ ॥
सोऽहिगओ चिय आवस्सयस्स कयरस्स कित्थ चिंताए ? । तं चिय सुयंति साहइ सुयाणुयोगाभिहाणेण ॥८४३॥

'मो'इत्यादि ॥ सोऽनुयोगः ज्ञानपञ्चकमध्ये कस्य ?, उच्यते, श्रुतस्य, तस्य गुर्वायत्तत्वात् परप्रत्यायकत्वाच्च ॥८४१॥ तथाहि- 'पागणे'त्यादि ॥ प्रायोग्रहणं प्रत्येकबुद्धादेः स्वयमपि भावात्, येन कारणेनैवं तेन तदनुयोग आरभ्यते, किमर्थं ?, परप्रबोधार्थं, तथाहि- मर्व एव शास्त्रारम्भः परप्रबोधार्थमारभ्यते, न पुनरादोपुरुषिकया जनरञ्जनार्थं वा ?, यतः ख्यातिलाभनिरपेक्षत्वात् मुमुक्षूणामिति गाथार्थः ॥ ८४२ ॥ एवमुक्ते सत्याह-'सोऽहिगओ'इत्यादि ॥ 'सः' अनुयोगोऽधिकृत एवावश्यकस्य 'कयप्पवयणप्पणामो' इत्यादिना अतः 'कतरस्स'त्ति किमनानया चिन्तया ? येनोच्यते-'सो मतिनाणादीणं कतरस्स'त्ति ?, उच्यते, इह 'सुताणुयोगाभिहाणेण सुतस्स'त्ति उत्तरेण तदावश्यकं श्रुतमेव, नतन्यत् किञ्चित्क्रियादि इत्येतत् 'साधयति' कथयति को दोषः ?, तस्मात् प्रतिष्ठितमिदं 'कतरस्स ?, सुयस्स'त्ति गाथार्थः ॥ ८४३ ॥ आह-यद्येवमनुयोग इति कः शब्दार्थः ? इत्यत आह—

अणुजोयणमणुओगो सुयस्स नियएण जमभिहेएणं । वावारो वा जोगो जो अणुरूवोऽणुकूलो वा ॥ ८४४ ॥
अहवा जमत्थओ थोवपच्छभावेहिं सुयमणुं तस्स । अभिहेए वावारो जोगो तेणं व संबंधो ॥ ८४५ ॥

'अणु'इत्यादि । अनुयोजनमनुयोगः, किमुक्तं भवतीत्याह-सुयस्स नियएण जमभिधेयेण संबंधणं, 'वावारो वा योगो'त्ति 'वा' इत्यथवा योगो योजनं 'वावारो'त्ति जमुक्तं भवति, ततश्च योग एवानुयोगोऽनुशब्दलोपात्, पुनरपि किमुक्तं भवतीत्याह-योऽनुरूपोऽनुकूलो वा ग्रन्थस्यार्थेन सह यो व्यापारः सोऽनुयोग इति गाथार्थः ॥८४४॥ 'अहवे'त्यादि ॥ अथवा 'यत्' यस्मादर्थतः-अर्थतः सका-

शात् स्तोकपश्चाद्भावाभ्यां सूत्रं अणु, ततः किमित्यत आह-तस्य-अणोः सूत्रस्याभिधेये व्यापारः योगोऽनुयोगः, तेन वाऽणुना योगो यः सोऽणुयोग इति गाथार्थः ॥ ८४५ ॥ अतः 'आवस्सयस्स अणुओगो'त्ति स्थितम् ॥ अत्राह—

आवस्सयस्स जइ सो तत्थंगाईण अट्ठ पुच्छाओ । नं होइ सुयक्खंधो अज्झयणाइं च, न उ सेसा ॥ ८४६ ॥

नणु नंदीवक्खाणे भणियमणंगं इहं कओ संका ? । भण्णइ अकए संका तस्सानियमं च दाएइ ॥ ८४७ ॥

नाणाभिहाणमेत्तं मंगलमिठ्ठं न तीए वक्खाणं । इहमट्ठाणे जुज्जइ, जं सा वीसुं सुयक्खंधो ॥ ८४८ ॥

इह साणुग्गहसुइयं न उ नियमोऽयमहवाऽपवादोऽयं । दाइज्जइ कहणाए कयाइ पुरिसादवेक्खाए ॥ ८४९ ॥

'आव'इत्यादि ॥ यद्यसावावश्यकस्य तच श्रुतविशेषः, तत्राङ्गादीनामष्टौ पृच्छाः "आवस्सयं णं किं अंगं अंगाइं सुयक्खंधो सुयक्खंधा अज्झयणं अज्झयणाइं उद्देसो उद्देसा"? उत्तरमाह-"तं आवस्सयं सुयक्खंधो अज्झयणाइं च सेसपडिसेहो"त्ति गाथार्थः ॥८४६॥ अपर आह-'नणु'इत्यादि ॥ नन्वित्यसूयायां 'नन्दी' ज्ञानपञ्चकसरूपाभिधायी ग्रन्थः तद्व्याख्याने इदं भणितमनङ्गमङ्गानङ्गाधिकारे इह कुतः शङ्का येनाष्टौ प्रश्नाः प्रयुज्यन्ते ? इति, भण्यते, अकृते आदौ नन्दीव्याख्याने 'शङ्का' सन्देहो जायते, अपितु पृच्छयन् गुरुस्तस्यादौ नन्दीव्याख्यानस्यानियमं दर्शयतीति गाथार्थः ॥ ८४७ ॥ आह-मङ्गलार्थमवश्यमेव नन्दीव्याख्यानात् कथमनियमप्रदर्शनमिति, 'नाणा'इत्यादि ॥ इहादौ मङ्गलमिष्टं, किं ?, ज्ञानाभिधानमात्रम् अनभिमतप्रतिषेधमाह-न तस्या व्याख्यानम्, अस्थानत्वादुत्सर्गेणेत्यभिप्रायः, तथाहि-पथि गच्छन्नध्वगो दधि दृष्ट्वा मङ्गलमिति गृह्णाति, नतु भक्षयत्यपि, किमित्याह-यदसौ नन्दी पृथक्श्रुतस्कन्ध इति गाथार्थः ॥८४८॥ इह पाठे किमिति प्रपञ्चत उक्तेति चेत्, उच्यते, 'इहे'त्यादि ॥ 'इह'आवश्यकारम्भे 'सानुग्रहम्' अनु-

ग्रहार्थम्, 'उदितम्' उक्तं ज्ञानपञ्चकव्याख्यानं प्रपञ्चतः, नतु नियमोऽयं तद्व्याख्याने, अपितु अभिधानमात्रस्यैव नियमो, मङ्गलार्थत्वात्, अथवा इदमन्यत् परिहारान्तरम्–अपवादोऽयमिह नन्दीकथनेन कथ्यते, कथमित्याह–कदाचित् पुरुषाद्यपेक्षया अन्यारम्भेऽन्यदप्युत्क्रमेणाभिधीयते समस्तदध्युपयोगवदित्यतोऽष्टौ पृच्छा इति गाथार्थः ॥ ८४९ ॥ अत्र च—

आवस्सयसुयक्खंधो नामं सत्थस्स तस्स जे भेया । ताइं अज्झयणाइं नासो आवस्सयाईणं ॥ ८५० ॥
कज्जो पिहप्पिहाणं जहत्थमजहत्थमत्थसुण्णंति । नामे चेव परिच्छा गज्झं जइ होहिइ जहत्थं ॥ ८५१ ॥
नामाईओ नासो चउव्विहो मंगलस्स व स नेओ । विण्णेओ य विसेसो सुत्तगओ किंचि वुच्छामि ॥८५२॥
आगमओ दव्वावासयं तमावासयं पयं जस्स । सिक्खियमिच्चाइ तयं तयणुवउत्तो निगदमाणो ॥८५३॥
सिक्खियमंतं नीयं हिययम्मि ठियं जियं दुयं एइ । संखियवण्णाइ मियं परिजियमेत्तुक्कमेणंपि ॥८५४॥
जह सिक्खियं सनामं तह तंपि तहा ठियाइ नामसमं । गुरुभणियघोससरिसं गहियमुदत्तादओ ते य ॥८५५॥
नवि हीणक्खरमहियक्खरं च वोच्चत्थ रयणमालव्व । वाइद्धक्खरमेयं वधासियवण्णविण्णासं ॥८५६॥
न खलियमुवलहलंपिव अमिलियमसरूवधण्णमेलोव्व । वोच्चत्थगंथमहवा अमिलियपयवक्कविच्छेयं ॥८५७॥
नय विविहसत्थपल्लवविमिस्समट्ठाणछिन्नगहियं वा । विच्चामेलिय कोलियपायसमिव भेरिकंथ व्व ॥८५८॥
मत्ताइनिययमाणं पडिपुण्णं छंदसाऽहवऽत्थेणं । नाकंखाइसदोसं पुण्णमुदत्ताइघोसेहिं ॥८५९॥
कंठोट्ठविप्पमुक्कं नाव्वत्तं बालमूयभणियं व । गुरुवायणोवयातं न चोरियं पोत्थियाओ वा ॥८६०॥

आगमओऽणुवउत्तो वत्ता दव्वंति सिद्धमावासं। किं सिक्खियाइसुयगुणविसेसणे फलमिहऽब्भहियं?॥८६१॥
जइ सव्वदोसरहियंपि निगदओ सुत्तमणुवउत्तस्स। दव्वसुयं दव्वावासयं च तह सव्वकिरियाओ॥८६२॥
उवउत्तस्स उ खलियाइयंपि सुद्धस्स भावओ सुत्तं। साहइ तह किरियाओ सव्वाओ निज्जरफलाओ॥८६३॥
अहिए कुणालकविणो हीणे विज्जाहराइ दिट्ठंता। बालाउरातिभोयणभेसज्जविवज्जआ उभए॥८६४॥
चंदगुत्तपपुत्तो उ, बिंदुसारस्स नत्तुओ। असोगसिरिणो पुत्तो, अन्धो जायइ कागणिं॥८६५॥
जो जहा वट्टए कालो, तं तहा सेव वानरा!। मा वंजुल परिब्भट्टो, वानरा! पडणं सर॥८६६॥
विज्जाहर रायगिहे उप्पय पडणं च हीणदोसेण। कहणोसरणागमणं पयाणुसारिस्स दाणं च॥८६७॥
चित्तकडुभेसजाइं मा ण पीलेज्ज ऊणए देइ। पउणइ न तेहिं अहियेहिं मरइ बालो तहाहारे॥८६८॥
अत्थस्स विसंवाओ पयभेआओ तओ चरणभेओ। तत्तो मोक्खाभावो मोक्खाभावेऽफला दिक्खा॥८६९॥
नोआगमओ जाणयभव्वसरीराइरित्तमावासं। लोइयलोगुत्तरियं कुप्पावयणं जहा सुत्ते॥८७०॥
लोउत्तरे अभिक्खणमासेवालोयओ उदाहरणं। स रयणदाहगवाणियनाएण जईहुवालद्धो॥८७१॥
आगमओ भावावासयं तदत्थोवओगपरिणामो। नोआगमओ भावे परिणामो जाण किरियासु॥८७२॥
लोइयलोउत्तरियं कुप्पावयणं च तं समासेणं। लोउत्तरं पसत्थं सत्थे तेणाहिगारोऽयं॥८७३॥
'आवस्सए' त्यादि, 'कज्जो' इत्यादि, शास्त्रनाम आवश्यकश्रुतस्कन्धस्तद्भेदाश्चाध्ययनानि 'तम्हा आवस्सयं निक्खिवि-

स्सामि'इत्येवमादि, आह च—न्यासो निक्षेपः, आवश्यकादीनां पृथक् पृथक् कार्यः, किं कारणं ?, यतो नाम त्रिविधं भवति, यथार्थाऽयथार्थार्थशून्यताभेदात्, यथार्थं शिखी, अयथार्थं पलाशः,डित्थादि त्वर्थशून्यम्, अतो नाम्न्येवास्यास्माभिः परीक्षा कर्त्तव्या, ततश्च ग्राह्यं यदि यथार्थं स्यात्, तत्रैव समुदायार्थपरिसमाप्तेः,विवेचितकारित्वाद् भगवदर्हच्छासनप्रतिपन्नानामिति गाथाद्वयार्थः॥८५०–८५१॥ अथ भेदतत्त्वपर्यायैरभिदधदावश्यकनिक्षेपं तावदाह—'नामाई'त्यादि, आवश्यकस्य हि चतुर्विधो नामादिन्यासः सर्वं मङ्गलस्येव, तद्यथा नामावश्यकमित्येवमादि, विज्ञेयश्च विशेषोऽस्य सौत्रः-अनुयोगद्वारेपूक्तः, तथा च कञ्चिद्विशेषं वक्ष्यामि, अनुग्रहप्रवृत्तत्वादिति गाथार्थः ॥ ८५२ ॥ तत्र नामस्थापने क्षुण्णार्थे, द्रव्यावश्यकं द्वेधा—आगमनोआगमभेदात्, तत्र 'आगमतो' इत्यादि प्रश्नयति—'आगमओ' इत्यादि, आगमतो द्रव्यावश्यकं कियत् ?, उच्यते, 'जस्स णं आवस्सएत्ति पदं शिक्षितं ठितं जित'मित्येवमादि 'जाव णो अणुप्पेहाए', तथा चाह भाष्यकारः—'तमावासयं पद' मित्यादि, स्पष्टम्, एतच्च सांन्यासिकचोद्यबीजमित्यभिप्राय इति गाथार्थः ॥८५३॥ शिक्षितमिति किमुक्तं भवतीत्याह—'सिक्खिअ'मित्यादि, अन्तं नीतमधीतत्वात्,शेषं सुगममिति गाथार्थः ॥८५४॥ पञ्चानामपि पदानां दृष्टान्तमाह—'जहे'त्यादि, यथा हि स्वनाम शिक्षितं स्थितं जितं मितं परिचितमेवमेतदपीत्यस्यायमर्थः, वाचनाचार्याभिहितघोषैः सदृशं गृहीतं घोषसममुच्यते, ते चोदात्तादयः—उदात्तानुदात्तस्वरिताः ॥८५५॥ 'नवि हीण'मित्यादि अन्यूनाक्षरमहीनाक्षरं अनधिकाक्षरमनत्यक्षरं, तथा वाइद्धाक्षरमेवं भणंति यदुत वच्चासितवन्नविन्नासं, अन्यत्रान्यत्रापादितवर्णं, अत इदं वर्णमात्रत एव विचस्यते, न पदवाक्यतः,तस्यान्यविषयत्वात्, दृष्टान्तमाह 'चोचत्थरयणमालव्व' प्रत्यन्तनिवासाभिरीप्रोतरत्नमालावत्, एतद्विपर्ययेण 'अव्वाइद्धक्खरं'ति गाथार्थः ॥८५६॥ 'न खलिय'मित्यादि, न स्खलितमुपलाकुलभूमिलाङ्गलवत्, तथा न मिलितं, तत्र मिलितम्—असमान-

जातीयधान्यमेलकवत् सङ्कीर्णं यन्नैव तदमिलितम्, अस्यैव द्वितीयं व्याख्यानं कुर्वन्नाह–'वोच्चत्थगंथमइव'त्ति अथवा विपर्यस्त-ग्रन्थे मिलितं विपर्ययेण चामिलितं, तृतीयं व्याख्यान्तरमाह–'अहव'त्ति द्विशवर्त्यते, अथवाऽमिलितः–असंसक्तः पदवाक्यविच्छेदो यत्र तदमिलितपदवाक्यविच्छेदममिलितमिति गाथार्थः ॥ ८५७ ॥ 'अविच्चामेलिय'त्ति पदमाचिख्यासुराह–'नये'त्यादि' 'नय विच्चामेलिय'त्ति सम्बन्धः, किञ्च विच्चामेलियम्?,अत आह–विविधसत्थपल्लवविमिस्सं, यथा 'धम्मो मंगलमुक्किट्ठमत एकनवते कल्पे मत्तोऽन्ये मद्यांश्च गुणाः, न ह्याभ्यामधं परिच्छिद्य प्रवर्त्तमाने जीवा द्विविधाः'इत्येवमादि, तथा अस्थानच्छिन्नग्रथितं यथा–प्राप्तराज्यस्य रामस्य, राक्षसा निधनं गताः" इत्येवमादि, यद्वा कोलिकपायसवत्, यद्वा भेरीकन्थावत्, इति गाथार्थः ॥८५८॥ 'पडिपुन्नन्ति दुविहं–सुत्तओ अत्थओ य' तत्र सूत्रतः–'मत्ताइ'इत्यादि, मात्रादिनियतमानं अहवा छन्दसा–छन्देण पडिपुण्णं सूत्रतः, अत्थेण उ पडिपुण्णं किमत आह–'अत्थेण' नाकाङ्क्षादिसदोषं, न क्रियाध्याहारं यदपेक्षत इत्यर्थः, 'पडिपुण्णघोसं'इत्येतदाह–उदात्तादिघोषसम्भृतत्वात् प्रतिपूर्णघोषमिति गाथार्थः ॥ ८५९ ॥ 'कंठ'इत्यादि कण्ठ्या, नवरं वाक्शब्दात्कर्णाघाटितं, आह–आगमतोऽनुपयुक्तो द्रव्यावश्यकमित्येतावतैवाभिलषितार्थसिद्धेः किमनेन भणिएण 'जस्स णं आवस्सयत्ति पय'मित्यादिना?, आह च–'आगमओ'इत्यादि गताथां ॥८६०–१॥ 'जहे'त्यादि, यथोक्तगुणविशिष्टमपि निगदतः सूत्रम्–आवश्यकादिपदमनुपयुक्तस्य द्रव्यश्रुतं द्रव्यावश्यकं च, तथा सर्वा गमनागमनप्रत्युपेक्षणादिक्रिया द्रव्यं द्रव्यावश्यकं चेति ज्ञापनार्थम् । अस्य विपर्ययमाह–'उवउत्तस्से'त्यादि, उपयुक्तस्यावश्यकादिपदे स्खलितादिदोषदुष्टमपि पठतः शुद्धस्वभावत्वाद् भावतः सूत्रं कथयति यथा तथा सर्वाः क्रियाः निर्जराफलाः कथयति उपयुक्तस्य, तस्मात् उपयोगे दृढं यत्नः कार्यः प्रथममिति गाथाद्वयार्थः ॥८६२–८६३ ॥ 'अहिए'इत्यादि, अत्र च 'हीणक्खरे

अवायदंसणरयमिणमो उदाहरणं–"मगहम्मि य रायगिहं, सेणियराया जिणिंदभत्तिगओ । पुत्तो अभयकुमारो, बुद्धिएँ चउव्विहाएँ जुत्तो ॥ १ ॥ अह अन्नया जिणिंदो, वीरो तत्थेव गुणसिलुज्जाणे । सुरविज्जाहरचारणसंथुव्वंतो समोसरिओ ॥ २ ॥ धम्मकहा-अवसाणे, गच्छंतेसु सुरचारणाईसु । एगस्स एगअक्खरविस्सरणे ण वहइ विज्जा ॥३॥ तो तं मंडुक्कंपिव उप्फिडसंफिडणयं करे-माणं । दट्ठूणं निज्जाहरमिणमो राया विचिंतेइ ॥४॥ किं मन्ने एस एवं?, अहवा पुच्छामि जिणवरं गंतुं । वीरेणवि से कहियं पम्हुट्ठ-अक्खरं सेसं ॥५॥ तं च सुणेत्ता अभओ पयाणुमारी तयं भणइ गन्तुं । भो ! विस्सरियं तुहमेगमक्खरं अवहिओ सरसु ॥ ६ ॥ जइ य पुणो मम सामण्णसिद्धिमिह कुणसि तो तुहं अहयं । लहसि तयं पडिवन्ने कहिओ से साहणोवाओ ॥७॥ तो सो तस्सेवे-गमक्खरस्स लाभेण रयतगिरिसिहरे । संपत्तो परविज्जाहरंगणाकीडणसुहिल्लिं ॥ ८ ॥ अत्थोवक्खतो उ इहं, कायव्वो अधिय अक्खरे ऊणे । होइ विणासो सुत्ते, अत्थे किरियाऽफलियदिक्खा ॥ ९ ॥ अण्णे भणंति स तहा दिट्ठो अभएण पुच्छिओ कहियं । पढमयविज्जं पढिया लद्धं च तमक्खरं तेण ॥१०॥ पाठक्रममङ्गीकृत्येदमपूर्वं कथितमित्यभिप्रायः । अहिए कुणालमक्कडा तंजहा–"राया सुनंदउत्तो, पाडलिपुत्तंमि पुरवरे आसि । पुत्तो सि बिंदुसारो, तस्सवि पुत्तो असोगसिरी ॥१॥ निवमसोगाहिं तओ विसेसओ दोहिं अग्गमहिसीहिं । रज्जवरपुत्तरयणुज्जलाहिं सह भुंजती भोए ॥२॥ तस्स य एगाएँ सुओ बालो नामेण पुण कुणालोत्ति । दिन्ना से बालभुत्ती उज्जेणी तस्स राएणं ॥ ३ ॥ अह अन्नया कयाई कुणालबालस्स माइसवत्तीए । सहियस्स वासभवणे कहियं परकंजुइज्जेणं ॥४॥ भयवं ! कुणालबालो वट्टइ अट्ठेगअट्ठवासोत्ति । तेणवि लिहिओ लेहो, सयमेव अधीयओ कुमरो ॥ ५ ॥ तीएवि य सो गहिओ णयणंजणबिंदुयं अगारस्स । उवरिं दिण्णं रण्णो, छइछयाए मणं हरिउं ॥ ६ ॥ पडिअप्पिओ य रण्णो,

णयावि अनुराइओ पमत्तेणं। संवत्तिऊण मुद्दाएँ अंकिओ णीउ उज्जेणीं ॥ ७ ॥ वायाविओ य तेण य, ण लेहओ कहइ तं निरोहिति। सयमेव याइउं चिन्तियं कुणालेणिमं तत्थ ॥८॥ मोरियवंसाणऽम्हं, आणा अप्पडिहया तिहुयणंमि। ता किं तातस्साणं पढमं लंघिज्ज अहमेव ? ॥९॥ भो ! भो ! आणेह लहुं, जलंतजलणाफुलिंगवीभत्थं। तत्तं लोहसलागं, जेणं अंजेमि अच्छीणी ॥१०॥ तो अंजिऊण तीए हाहारवभरियदसदिसाभोयं। जाओ य णयणविरहेण सयलअत्थमियजियलोओ। ११॥ तो जाणिऊण रण्णा, दिण्णो से तुच्छजीवणो गामो। गंधव्ववेयणिउणो य तत्थ सो भुंजती भोए ॥१२॥ तो तस्सवि संसारस्स भावदोसेण दारओ आओ। तो सो अणअमाणो गायंतो वसुमतिं भमति ॥१३॥ पाडलिपुत्तं पत्तो, कहियं रण्णो इमेरिसो कोइ। उग्गाइ किंनरो इव, रण्णा हक्कारिओ तो सो ॥१४॥ रन्नो पुरओ गायइ, अंतरिओ जमणियाए रम्माए। तुट्ठेण य सो भणिओ, रन्ना मग्गाहि किं देमि ? ॥१५॥ सो भणति–चंदगुत्तपवोत्तो तु, बिंदुसारस्स णत्तुओ। असोगसिरिणो पुत्तो, अन्धो जायइ कागणीं ॥१६॥ तो उण रन्ना पुट्ठो कोऽसि तुमं ? तेण साहियं सव्वं। ओसारिया य पोत्ती, भणिओ य पुणोऽवि किं देमि ? ॥१७॥ सो भणति–कागणिं राइणावि तुच्छंति मग्गियं भणिओ। मंतीहि य से कहियं, रायसुए कागणी रज्जं ॥१८॥ रायावि भणति अन्धो, करेसि रज्जेण किं ? तओ आह। मम पुत्तो उप्पण्णो संपइ इइ राइणा भणिते ॥१९॥ संपति च्चिय से नामं, पतिट्ठियं तस्स रायपुत्तस्स। तं चेव य से रज्जं रण्णा पितिसंतियं दिण्णं ॥२०॥ सो चेव ठवणओत्ति। अहवा भावाहिए इमं लोइयं उदाहरणं– "कामियसरआसण्णे, वंजुलरुक्खो महालओ अत्थि। तत्थ य चडिऊण जले, जो पडइ तिरिक्खओ संतो ॥१॥ सो होइ किल मणूसो, अह मणुओ पडइ होइ तो देवो। अह बितियंपि पडेज्जा, पुव्विल्लो चेव तो होइ ॥२॥ एवं च ठिते सह वानरीए तत्थेव वानरो आओ। दिट्ठं च तत्थ पडियं, नरमिहुणं ताउ रुक्खा-

उ ॥३॥ जायं च देवमिहुणं, पडियाणि दुएऽवि नरजुयं जायं। सो भणति पुण पडामो, जा देवजुयं किल भवामो ॥४॥ तीए वरजुवतीए, पडिओ धरेंतीए सो नरो सलिले। जाओ पुणोऽवि सोचेव मक्कडो सिरिमतिच्छंतो ॥५॥ नारी रण्णा गहिया, सोऽविय माइंदजालपुरिसेहिं। रण्णो पुरओ णच्चंतएसु सो वानरो मुक्को ॥६॥ तं दट्ठूणं वरहाररयणपरिमंडियं नियं जुवइं। पत्थेइ तीएँ भणिओ, एम सिलोगोत्ति निउणाए ॥७॥ जो जहा वट्टए कालो, तं तहा सेव वानरा!। मा वंजुल पडिब्भट्ठो, वाणरा! पडणं सर ॥८॥" उवणओ एस एवेत्यधिकृतगाथापूर्वार्द्धार्थः। अथ भावहीणाहिए उदाहरणं, तथा चाह–'उभये'त्ति भावहीणे भावहिये य दृष्टान्तः, कः? इत्यत आह–'बालाउराइभोयणभेसज्जविवज्जओ' एतदुक्तं भवति–"तित्तकडुभेसयाइं मा णं पीलेज्ज ऊणये देति, पउणइ ण, तेहिं अहिएहिं मरति, ग्लान इति गम्यते, एवं बालोऽप्याहारमङ्गीकृत्येति गाथार्थः ॥ ८६४ ॥ 'चंदगुत्ते'त्यादि, गाथाः पञ्च ॥ ८६५–६९ ॥ इत्यागमतो द्रव्यावश्यकं गतं, द्वितीयभेदमधिकृत्याह–' नोआगमतो'इत्यादि। नोआगमतः ज्ञशरीरद्रव्यावश्यकं "परिणिव्वुयमुणिदेहं सिद्धसिलातलगयं मुणेयव्वं। अणुभूयभाववेक्खा, वइ तडवडिओ घयघडोव्व ॥१॥" तथा भव्यशरीरद्रव्यावश्यकं यच्छरीरमावश्यकमिति पदं ज्ञास्यति योग्यत्वात् घृतघटवदेव, उभयव्यतिरिक्तं तु त्रिविधं, कथमित्याह–'लोइय'त्ति जे इमे राईसरादि मुखादिप्रक्षालनमुपसि कुर्वंते, लोकोत्तरं च'जे इमे समणगुणमुक्कजोगी जाव उभओ कालं आवासयस्स उवट्ठायन्ति,' तथा कुप्पावणियं तिण्हं तिसट्ठाणं पासादुयसयाणं कोट्टकिरियादीणं उवलेवणसंमज्जणादि' एवं जहा सुत्ते अणुओगदारेसु तथा वन्नेयव्वंति गाथार्थः ॥८७०॥ "वसंतपुरे अगीयत्थसंविग्गपरिवारो तहाविहो चेव गणी गच्छो य परिवसति, तत्थ य एगो साहू दिवसदेवसियं उदउल्लाइअणेसणादि पडिगाहेत्ता रयणीए महयामहया संवेगेणालोएति, तस्स पुण गणी अगीयत्थत्तणओ पायच्छित्तं

देंतो इमं भणइ–अहो ! इमो धम्मसड्ढिओ !, सुहं पडिसेविउं दुक्खं आलोइउं, अओ असढत्तणओ सुद्धो'त्ति, इमं च दट्ठुं अन्ने भणंति–आलोइज्जइ चेव य, न एत्थ दोसोत्ति, वच्चइ कालो, अन्नया तत्थ संविग्गो साहू आगतो, तेण सा दिवसदेवसिया अविही दिट्ठा, चिंतियं च–'अहोऽणेण इमेण विणासिज्जन्ति, ततो तेण कहाणयं कहियं–"गिरिनगरे कोडीसरो नाम वाणियओ महल्लमोल्लरयणाणं घरं भरिऊण पलीवेइ, तं च लोगो पसंसइ–वइसाणरं तिप्पे हिंतिचि, एवं वरिसाणि वचंति, अन्नया तेण तं तहा पलीवियं वायवसेण य सव्वं नगरं दड्ढं, ततो राइणा हक्कारिऊण सव्वस्सहरणो कओ निद्धाडिओ य सविसयाउत्ति ॥ अन्नोऽवि महुराए एवं चेव करेइ,सो राइणा सुओ, सव्वस्सहरणो चेव काउं विसज्जिओ, भणिओ य–अडविंमि किं न पलीवसि ?, एवं भो ! जहा तेण वणिएण अवसेसा गेहा दड्ढा एवं तुमं पसंसंतो एए साहुणो मिगसंठाणिए सव्वे झामित्ता परिच्चयसि, जाहे य सो गणी ण ठाइ ताहे तेण साहुणो भणिया–भो ! भो ! एस अगीयत्थो निद्धम्मो य, अलमेयस्स वसवत्तित्तेण, सो तेहिं तओ निद्धाडिओ" आह च–'लोउत्तरे'इत्यादि । स इत्यगीतार्थः, शेषं स्पष्टम् ८७१ ॥ द्रव्यावश्यकं गतम्, भावावश्यकमपि द्वेधा-आगमतो नोआगमतश्च, तत्र पूर्वार्धं स्पष्टम् ॥ द्वारं ॥ नोआगमतो ज्ञानक्रियापरिणामो, मिश्रत्वादिति गाथार्थः ८७२ ॥ तदपि त्रेधा–'लोइयं' तथा । 'लोइयं' पुव्वण्हे भारहं अवरण्हे रामायणं 'कुप्पावणियं' इज्याञ्जल्यादि, लोकोत्तरं शास्त्रे प्रशस्तं, तेनैव चायमधिकार इति गाथार्थः ॥ ८७३ ॥

तस्साभिन्नत्थाइं सुपसत्थाइं जहत्थनिययाइं । अव्वामोहाइनिमित्तं आह पज्जायनामाइं ॥८७४॥

आवस्सयं अवस्सं करणिज्जं धुवनिग्गहो विसोही य । अज्झयणछक्कवग्गो नाओ आराहणा मग्गो ॥८७५॥

समणेण सावएण य अवस्सकायव्वयं हवइ जम्हा । अंतो अहो निसिस्स उ तम्हा आवस्सयं नाम ॥८७६॥

जदवस्सं कायव्वं तेणावस्सयमिदं गुणाणं वा । आवासयमाहारो आ मज्जायाभिविहिवाई ॥८७७॥
आ वस्सं वा जीवं करेइ जं नाण-दंसणगुणाणं । संनिज्झभावणच्छायणेहिं वा वासयं गुणओ ॥८७८॥
'तस्से'त्यादिना पर्यायत आह गाथाः पञ्च, अत्र च 'आवस्सयं' ति अवश्यंकरणादावश्यकं, किञ्च तत् ?, चक्रवालसा-
माचार्यनुष्ठानं, 'ध्रुवनिग्रहः' अनादिकालीनकर्म्मापनयनं, एवं च पदानि नव दश वेति, यतश्चाहोरात्रान्तः श्रमणादिना कर्त्तव्यमत
आवश्यकं, आपाश्रयो वेदं गुणानां, आङो मर्यादाभिविधिवचनत्वादापाश्रयं, ततश्च प्राकृतशैल्या लिङ्गव्यत्ययादावासयंति, गुणानां
वा वश्यमात्मानं करोतीति, यथाऽन्तं करोतीत्यन्तकः, गुणशून्यं वा आत्मानमावासयति गुणैरिति, गुणसान्निध्यमात्मनः करोती-
त्यर्थः, गुणैर्वा आवासकम्–अनुरञ्जकं वस्त्रधूपादिवदिति, गुणैर्वाऽऽत्मानमाच्छादयतीति 'वस आच्छादने' इतिकृत्वा ॥८७४-७८॥
तदेवं भेदतत्त्वपर्यायैरावश्यकमुक्तं, श्रुतस्कन्धपदयोरप्यतिदेशनं तावदाह–
एवं चिय सेसाइं विउसा सुयलक्खणाणुसारेण । कमसो वत्तव्वाइं तहा सुयक्खंधनामाइं ॥८७९॥
आगमओ दव्वसुयं वत्ता सुत्तोवओगनिरवेक्खो । नोआगमओ जाणयभव्वसरीराइरित्तमिदं ॥८८०॥
पत्ताइगयं सुत्तं सुत्तं च जमंडजाइ पंचविहं । आगमओ भावसुयं सुओवउत्तो तओऽणण्णो ॥८८१॥
नोआगमओ भावे लोइय लोउत्तरं पुराऽभिहियं । सम्मत्तपरिग्गहियं सम्मसुयं मिच्छमियरंति ॥८८२॥
आगमओ भावसुयं जुत्तं नोआगमे कहं होइ ? । जइ नागमो न सुत्तं, जइ सुत्तमणागमो किह णु ? ॥८८३॥
उवओगो जम्मत्ते तं तं जइ वाऽऽगमोऽवसेसं तु । नोआगमोत्ति एवं किमणुवउत्तम्मि दव्वसुयं ? ॥८८४॥

अविसुद्धनयमएण व जइ लद्धिसुयमणुवउत्तेऽवि। भावसुयं चिय पढओ, किमणुवउत्तस्स दव्वसुयं? ॥८८५॥
आगमसुओवओगो सुद्धो चिय न चरणाइसंमिस्सो। मीसेऽवि वा विवक्खा सुयस्स चरणाइभिन्नस्स ॥८८६॥
चरणाइसमेयम्मि उ उवओगो जो सुए तओ समए। नोआगमोत्ति भण्णइ नोसद्दो मीसभावम्मि ॥८८७॥
सव्वनिसेहे दोसो सव्वसुयमणागमो पसज्जेज्जा। होज्जा वाऽणागमओ सुयवज्जमणागमसुयं तु ॥८८८॥
देसनिसेहे सयलं नोआगमओ सुयं न पावेज्जा। भिन्नंपि व तं देसो चरणाईणं पसज्जेज्जा ॥८८९॥
होज्ज व नोआगमओ सुओवउत्तोऽवि जं स देसम्मि। उवजुज्जइ न उ सव्वे तेणायं मीसभावम्मि ॥८९०॥
आह नणु मीसभावे नाभिहिओ अभिहिओ य नोसद्दो। देसे तदन्नभावे दव्वे किरियाएँ भावे य ॥८९१॥
सच्चमयं देसाईसु तहवऽत्थवसेण सद्दविणिओगो। अमियत्था य निवाया जुज्जइ तो मीसभावेऽवि ॥८९२॥
अविसेसियसंमिस्सोवओगदेसुत्ति वा सुयं काउं। नोआगमभावसुए नोसद्दो होज्ज देसेऽवि ॥८९३॥
नोआगमओ कोई सद्दसहायमुवओगमिच्छंति। नणु सुतरमागमत्तं हि दव्वभावागमे जुत्तं ॥८९४॥
अह नागमोत्ति सद्दो नोआगमया य तदहियत्तणओ। आगमओ दव्वसुयं किह सद्दो नागमो जइ णो? ॥८९५॥
अन्ने नोआगमओ सामित्ताणासियं सुयं बेंति। जइ न सुयमणुवओगे नणु सुयरमणासियं नत्थि ॥८९६॥
सुय-सुत्त-गंथ-सिद्धंत-सासणे आण-वयण उवएसो। पण्णवण आगमोऽवि य एगट्ठा पज्जया सुत्ते ॥८९७॥
'एवं चिये'त्यादि स्पष्टार्था, नवरं 'सुयाणुसारेणं' अनुयोगद्वारानुसारेणेति गाथार्थः ॥८७९॥ अथ प्रपञ्चतः श्रुतपदमुच्यते–तच्चतुर्धा–

मङ्गलवत्, नामस्थापने प्राग्वत्, द्रव्यश्रुतमागमनोआगमभेदाद्, आद्यं प्रतिपादयन् गाथापूर्वार्द्धमाह, द्वितीयं च पश्चार्धं, प्रतीतार्थो ८८० ॥ किं तदिदमित्याह–पुस्तकपत्रकादिन्यस्तम् । "अहवा सुत्ते पंचविहे पन्नत्ते–अण्डए बोंडए वालए वागते किट्टिसे" इति, आहव– 'सुत्तं चे' त्यादि । तत् द्रव्यश्रुतं व्यतिरिक्तमिति प्रक्रमः । द्वारं । भावश्रुतं द्वेधा–आगमनोआगमभेदादेव, तत्रागमतो भावश्रुतं, कः इत्याह–'श्रुतोपयुक्तो' वक्ता, ततोऽनन्यत्वात् ॥ द्वारम् ॥ ८८१ 'भावे' भावविषयं नोआगमतो भावश्रुतं, किमत आह–लोइयं भारतादि, लोकोत्तरं चाचारादि क्षायोपशमिकविशेषात्, तच्च प्रागेवोक्तं, तच्च सम्यक्त्वादिपरिग्रहात् तथोच्यते । अत्राह–'आगमतो' इत्यादि । इह हि आगमतो भावावश्यकश्रुतं 'युक्तं' घटमानकम्, अविरुद्धत्वात् जनन्यवन्ध्यावत्, (किन्तु न) युक्तमित्याह–'नो आगमे' नोआगमतस्तु कथं भवति ?, न कथञ्चिद्विरोधात् जीवाचैतन्यवत्, तथा कोऽयं नोआगमो नाम ?–'जति' इत्यादि, यदि नोआगमो–न आगमः ततो 'न सुत्तं'ति न भावश्रुतम्, अथ श्रुतं कथं नोआगमो, जीवाचैतन्यवदिति, तस्मादयुक्तमेतत् द्वितीयं भावश्रुतमिति गाथार्थः ॥८८२–८३॥ स्यात् पठतः, 'उवओग' इत्यादि । 'उपयोगो' दत्तावधानता 'जंमत्ते'त्ति यावति २ तत्तद् यदि चागमो भवतामभिप्रेतः, अवसेसं तु उपयोगाविषयीकृतं श्रुतं नोआगमत इति, ततश्च सर्वमतिपेधात् 'नोआगमतो भाव- श्रुतं योज्यते इति चेद् उच्यते, एवमनया कल्पनया किं–कस्मात् अनुपयुक्ते पठति–वक्तरि 'दव्वसुयं' अधस्तादुक्तं येनोच्यते 'नो अ- णुप्पेहाए'त्ति, एतदुक्तं भवति–अनुपयोगत्त्वेन तत्रापि नोआगमत्त्वाद्, अनुपयोगत्त्वेन तत्रापि लब्धिसद्भावादित्यभिप्राय इति गा- थार्थः ॥८८४॥ अथैतत्परिजिहीर्षोः सूरेर्मतमाह चोदक एव–'अवी' त्यादि । यदि 'अविशुद्धनयमतेन' द्रव्यास्तिकनयमतेन यदि तल्लब्धिक्षत्रं श्रुतं सन्नोआगमरूपं अणुवउत्तेऽवि वक्तरि पठति सति 'भावसुत्तं चिय'त्ति भावश्रुतमेव वर्त्तेत इति, उच्यते, ननु

श्रुतस्य नि- क्षेपाः पर्या- याश्च.

तद्देयावर्जेते, तथाहि-यथेवं ततः पठतो किमणुवउत्तस्स दव्वसुयं ?, एतदुक्तं भवति- तदपि भावश्रुतमेवास्तु, लब्धिसद्भावात्, इति चोद्यार्थः, उच्यते-नैतच्चोद्यं, सिद्धान्तानभिप्रायात्, तथाहि-सर्वप्रतिषेधवचन एव नोशब्द इदं स्यात्, न मिश्रवचन इति, आह च-'आगमसुओवओगो' इत्यादि। आगच्छतीत्यागमः श्रूयत इति श्रुतं, आगमश्चासौ श्रुतं च आगमश्रुतं, तद्विषय उपयोगः आगमश्रुतोपयोगः, 'शुद्ध एव' केवल एव, किमुक्तं भवति इत्याह-'न चरणादिसन्मिश्रो' न चारित्रदर्शनाभ्यां संवलितः यदा 'इष्यते तदा' आगमत्वात् भावश्रुतमभिधीयत इति शेषः, ज्ञानदर्शनचारित्रमिस्सेऽवि 'वे'त्यथवा मिश्रेऽप्युपयोगे चरणादिभिन्नस्य श्रुतस्य विवक्षा क्रियते, ततश्चागमतस्तावदेवं भावश्रुतं भवतीति गाथार्थः ॥८८५-६॥ नोआगमतः पुनः कथं भवतीत्याह-'चरणाई' त्यादि। यः पुनः श्रुते उपयोगः, किंविशिष्टे श्रुते ? इत्याह-'चरणादिसमेते' चरणदर्शनाभ्यामनुविद्धे, स किमित्यत आह-तनोऽस्मो 'समये' सिद्धान्ते नोआगम 'इति' एवं भण्यते, नोआगमतो भावश्रुतं भण्यत इति भावना, किं कारणमित्याह-यतः नोशब्दोऽयं मिश्रभावे, मिश्रवचनो वर्तत इति, एवं चैतद्, अन्यथाऽयं सर्वनिषेधवचनो वा त्वयेष्यते देशनिषेधवचनो वेति द्वयी गतिः, किंचातः ?, तत्र प्रथमविकल्पे प्रसङ्गमापादयन्नाह-'सव्व' इत्यादि। 'सर्वनिषेधे' सर्वप्रतिषेधवचने नोशब्देऽभ्युपगते भवतो 'दोषः' अपराधः स्यात्, यत एवं सर्वं श्रुतमनागमः प्रसज्येत, आगमो न भवतीति नोआगमः, तत्प्राप्तिः श्रुतस्य मत्यादिचतुष्टयीभवनमित्यभिप्रायः, अनागमस्य वा श्रुतत्वीभवनमिति, आह च-'होज्जा वा' भवेद्वा, कः किमित्यत आह-'अनागमसुयं तु' अनागमो-मत्यादिचतुष्टयलक्षणः, उत्तरस्य लुप्तत्वात्, श्रुतमेव नान्यः, किंविशिष्टो य इत्याह-'सुतवज्ज' न्ति श्रुतवर्ज्जः, किं कारणमित्याह-'अनागमतो' अनागमाद्धेतोः, क्षमाश्रमणटीकाऽपीयं। 'सव्वणि'गाहा। निषेधवचनत्वे पुनर्नोशब्दस्य सर्वनिषेधो देशनिषेधो वा ग-

ष्यते, तत्र सर्वनिषेधे तावन्नोआगमतो भावश्रुतमिति सर्वश्रुतस्यानागमत्वप्रसङ्गः स्यात्, अश्रुतस्य वा मत्यादेः श्रुतत्वप्रसङ्ग इति गाथार्थः ॥८८७–८८॥ अथ ब्रूपे–न ब्रूमो नोशब्दस्य सर्वप्रतिषेधवचनत्वं येन 'सव्वसुयमणागमो पसज्जउ' किंतु देशे, अत आह–'देस'इत्यादि। इह नोशब्दे देशनिषेधे देशोऽस्यागमो न भवतीति वाचके सति भवतः सकलं श्रुतं 'नोआगमतो' नोआगमस्वरूपेण प्राप्नुयाद्, एकदेशे अनागमत्वात्, इष्यते च सर्वत्र नोआगमतया सर्वं श्रुतं, ज्ञानदर्शनचारित्रपर्यायानुविद्धत्वात्। 'भिन्नंपि वे-'त्यादि वा इत्यथवा एवं सति अपि सम्भावनार्थः, ततश्चायमर्थः–चरणादीनां भिन्नं सत् निःकृष्टं सत्तत्–श्रुतं देशः प्रसज्येत अनेनैव प्रकारेण, एदप्यसम्भावनीयं, सम्भाव्यते वा भिन्नदेशं घात्वंजनकपिसवर्णकवत्, अन्यथा संकरैकत्वादिदोषप्रसङ्गात्, तस्मात् पारिशेष्यान्मिश्रवचनेऽस्मिन्नोआगमतो भावश्रुतमिति भावः। 'होज्ज' इत्यादि। 'वा' इत्यथवा अपरयापि भङ्ग्या अयं नोशब्दो मिश्रवचन इत्युच्यते, कहं ?, 'होज्ज व णोआगमतो सुओवउत्तोवि' त्ति, एतस्याक्षरघटना–श्रुतोपयुक्तोऽपि सन् भवेन्नोआगमतो भावश्रुतं, उपयोगतद्वतोरभेदात्, कथमित्यत आह–'यत्' यस्मात् 'असौ' उपयोगवान् 'देशे उपयुज्यते' ज्ञानदर्शनचारित्रकलापैकभागश्रुतैकदेशे प्रणिहितो भवति, 'न उ सव्वे' एकसमय इत्थमुपयोगाभावात्, येन कारणेनैवं तेनायमनयाऽपि भङ्ग्या मिश्रभावे भवति, क्वचिदुपयोगानुपयोगप्रवृत्तेः पूर्वत्र तु मिश्र उक्त आसीद् भवेत् नो आगमतो भावश्रुतं चरणादिसमेते इह तु इत्येवमतो महान् विशेष इति गाथार्थः ॥८८९–९०॥ 'आहे-' त्यादि। ननु मिश्रभावे नोशब्दो न क्वचिदभिहितः, अभिहितश्च देशादौ, तथाहि–विवक्षया नोशब्दो देशवचन उक्तो द्रव्ये घटादौ, यथा–देशो नो घटः, यो घटः स देशो नोघटो, नतु सर्वत्र, अघटप्रसङ्गात्, तत्प्रसंगे च घटाभावप्रसङ्गात्, सर्वत्रैवमिति शून्यतापत्तिः। अथ पुनर्देशो घटस्तत एकघटे घटबहुत्वप्रसङ्गः, एवं पटादिष्वपीति व्यवहाराभावः, तथा तदन्यभावे नोघटः पटादिस्तत्संव्यवहार-

श्रुतस्य निक्षेपाः पर्यायाश्च.

व्यपदेशज्ञानदर्शनात्, द्रव्ये नोशब्दः घटैकदेशवचनादिरेव विवक्षयोक्तत्वात्, क्रियायां नो पचति नो पक्तव्यमस्ति, तथा भावे च नो श्रूयते नो स्थीयते इति गाथार्थः ॥८९१॥ उच्यते–'सच्च' मित्यादि। सत्यमयं देशादिषु पठितो, न मिश्रभावे, किन्तु तथाऽप्यर्थवशेन शब्दविनियोगः क्रियते, अपिच–अमितार्थाश्च निपाताः, द्योत्येनार्थेनार्थवत्त्वाद्, यत एव ततो युज्यते अयं मिश्रभावेऽपीति गाथार्थः ॥८९२॥ अस्तु वाऽयं भवदनुरोधेन देशादिनियत एव तथापि देशवचन एव तर्हि भविष्यतीति, आह च–'अविसेसिये' त्यादि। अविशेषितत्वेन सम्मिश्रोपयोगः तस्य श्रुतमेकदेश इतिकृत्वा, किमत आह–नोआगमतो भावश्रुते साध्ये देशवचनोऽपि नोशब्दः स्यात्, घटग्रीवाख्यैकदेशे नोघटाभिधानवद्, यथाहि–सामान्यैकघटस्यैको देशो नोघट इत्युच्यते, एवं ज्ञानादित्रयाद्युपयोगाच्छ्रुतोपयोगोऽपीति, नोआगमतो भावश्रुतमिदम्, एकदेशवचनत्वादिति गाथार्थः ॥८९३॥ अत्र च–'नो' इत्यादि। केचन नोआगमतो भावश्रुतमिच्छन्ति 'उपयोगं' प्रणिधानं, किंविशिष्टमित्याह–'शब्दसहायं' शब्दानुविद्धमित्यर्थः, शब्दोपयोगयोरैक्यं, नोपयोगमात्रं, अत्रोच्यते, ननु सुतरामेवागमतो भावश्रुतत्वं, द्रव्यभावागमसंयोगे 'युक्तं' घटते, कुतस्तत्रानागमतो ?, न हि तत्रोपलसंनिपातो भवतीत्यभिप्रायः, इदं सुकूटयिषोः परस्य मतमाशङ्कते–'अहे'त्यादि। अथ चेच्छब्दो–ध्वनिर्वर्ण आगम इतिकृत्वा, ततश्च 'तदधिकत्वात्' शब्दाधिकत्वादुपयोगस्य नोआगमतापत्तिः–नोआगमतैव, उपयोगमात्रस्य शब्दसाहाय्यात्, यदि नोआगमतो भावश्रुतमित्यर्थः, उच्यते, यद्यसावुपयोगसहायः शब्द आगमो न तत आगमतो द्रव्यश्रुतं कथं त्वयाऽप्यधस्तात् प्रतिपन्नमिति शेषस्तस्मात् 'णणि'त्यादि स्थितम् ॥८९४–९५॥ 'अण्णे'इत्यादि। अन्ये सूरयो व्याचक्षते–आगमतो भावश्रुतं स्वामित्वाश्रितमुपयोगं, तथा नोआगमत इत्यत्र तुशब्दलोपो द्रष्टव्यः, ततश्च नोआगमतः पुनः स्वामित्वानाश्रितमन्य इत्याद्यनुवर्त्तने,

श्रुतस्य निक्षेपाः पर्यायाश्च.

उच्यते, सम्बद्धमप्यनुपयोगेण 'सुयं'ति न भावश्रुतम्, अधीयानस्यानुपयुक्तत्वात्, ननु सुतरामनाश्रितं स्वामिनि नास्ति नोआगमतो भावश्रुतं, यदि सम्बद्धमपि द्रव्यश्रुतं प्रतिपन्नमसम्बद्धं तु कस्मात् प्रतिपद्यते ? क्व वा तदित्थंभूतमिति, तस्मादेतदपि परिफल्गिति गाथार्थः ॥ ८९६ ॥ तच्चं तु सूत्रयतीति सूत्रं, पर्यायशब्दानाह–'सुये'त्यादि स्पष्टा ॥८९७॥ द्वारं॥ स्कन्धोऽपि मङ्गलवचतुर्धा, द्रव्यत आह–

खंधपएऽणुवउत्तो वत्ताऽऽगमओ स दव्वखंधो उ। नोआगमओ जाणयभव्वसरीराइरित्तोऽयं ॥८९८॥

सचित्तो अचित्तो मीसो य समासओ जहासंखं। दुपयाइ दुपएसाइओ य सेणाइदेसाई ॥८९९॥

अहवा कसिणोऽकसिणो अणेगदव्वो स एव विण्णेओ। देसाऽवचिओवचिओ अणेगदव्वो विसेसोऽयं॥९००॥

आगमभावक्खंधो खंधपयत्थोवओगपरिणामो। नोआगमओ भावम्मि नाण-किरिया-गुणसमूहो ॥९०१॥

सामाइयाइयाणं छण्हऽज्झयणाण सो समावेसो। नोआगमोत्ति भण्णइ नोसद्दो मीसभावम्मि ॥९०२॥

गण-काए य निकाए खंधे वग्गे तहेव रासी य। पुंजे पिंडे नियरे संघाए आउल समूहे ॥९०३॥

'खंधे'त्यादि, पूर्वार्द्धं स्पष्टम् ॥ द्वारम् ॥ नोआगमतस्तु त्रिविध इत्याह–'नोआगमओ'इत्यादि, उत्तरार्धं स्पष्टं, व्यतिरिक्तंत्रैविध्यमाह–'सचित्तो'इत्यादि। स चायं यथासंख्यं द्विपदादिरसंख्येयात्मप्रदेशमात्रः नरहयस्कन्धादिः, द्विप्रदेशादिः प्रतीतः, 'सेणातिदेसो य'त्ति, सेणाए अग्गिमे खन्धे सेणाए मज्झिमे खन्धे' इत्येवमादीति गाथार्थः ॥८९८–९९॥ 'अहवे'त्यादि। अथवा त्रिविधः स्कन्धः–कृत्स्नोऽकृत्स्नोऽनेकद्रव्यश्च, तत्र कृत्स्नः स एव द्विपदादिरक्षतः, अकृत्स्नः स एव द्विप्रदेशादिरवयवत्वात्, तिपदेसियाउ

दुपदेसिओ अकसिणखंधो' इत्येवमादि, तथा 'अणेगदव्वो'त्ति स चानेकद्रव्यः सामान्येन जीवच्छरीरपिण्डः देशे नखादावपचितो–हीनो जीवतया, तथोपचितश्च, युक्तश्चायमस्यान्यतो विशेष इति ॥९००॥ भावस्कन्धमाह–'आगमे'त्यादि पुव्वद्धं कंठं ॥ द्वारं ॥ नोआगमतो ज्ञानक्रियासमूहः ॥९०१॥ कथमित्याह–'सामाइ'इत्यादि । 'सो'त्ति णोआगमतो भावस्कन्धः, शेषं स्पष्टम् ॥९०२॥ 'गणे'त्याद्येकार्थिकानि स्पष्टानि ॥ उक्तः स्कन्धोऽपि, साम्प्रतं व्यस्तस्य सतोऽस्यावश्यकादिपदत्रयस्यैकवाक्यता क्रियते, षण्णां श्रुतविशेषाणां समुदायः स्कन्ध उच्यते, आवश्यकं च तद् श्रुतस्कन्धश्चेत्यावश्यकश्रुतस्कन्ध इति, शास्त्राभिधानमेतदिति गाथार्थः ॥८०३॥ आह–

किं पुण छक्कज्झयणं ? जेण छलत्थाहिगारविणिउत्तं । सामाइयाइयाणं ते य इमे छ ज्जहासंखं ॥९०४॥

सावज्जजोगविरई उक्कित्तण गुणवओ य पडिवत्ती । खलियस्स निंदणा वणतिगिच्छ गुणधारणा चेव ॥९०५॥

दारक्कमागयाणं वीसुं वीसुमिहमोहनिप्फन्ने । अज्झयणाणं नासं वक्खामो लाघवनिमित्तं ॥९०६॥

आवस्सयस्स एसो पिंडत्थो वण्णिओ समासेणं । एत्तो एक्केक्कं पुण अज्झयणं वण्णयिस्सामि ॥९०७॥

तत्थऽज्झयणं सामाइयंति समभावलक्खणं पढमं । जं सव्वगुणाहारो वोमं पिव सव्वदव्वाणं ॥९०८॥

अहवा तब्भेयच्चिय सेसा जं दंसणाइयं तिविहं । न गुणो य नाणदंसणचरणब्भहिओ जओ अत्थि ॥९०९॥

'किं पुणे'त्यादि । किं पुनः कारणमिदमावश्यकमध्ययनषट्कमिति ?, आह–येन षड्भिरर्थाधिकारैर्नियुक्तं सामायिकादीनां, ते चामी अर्थाधिकाराः–'सावज्जे'त्यादि ॥ सामायिकाध्ययने सकलसावद्ययोगविरतिरर्थाधिकारः, द्वितीये त्वर्हतां गुणोत्कीर्त्तना, तृतीये गुणवतः प्रतिपत्तिः कृतिकर्मादिलक्षणा, श्रुतशीलस्खलननिन्दना चतुर्थे, पञ्चमे चारित्रात्मनो व्रणचिकित्सा, षष्ठे तु व्रतातिचा-

रेतरोपचितकर्मविशरणार्थमनशनादिगुणधारणमिति गाथार्थः ॥९०४-५॥ आह-उक्तमावश्यकश्रुतस्कन्धाऽध्ययनानीत्यतोऽध्ययननि-क्षेपोऽपीहैव कर्त्तव्योऽवसरप्राप्तत्वात् श्रुतानन्तरं स्कन्धवद्, उच्यते-'दारक्कमे'त्यादि। द्वाराणि-उपक्रमादीनि तेषां क्रमस्तेनागतानां प्रत्येकं २ इह-शास्त्रे ओघनिष्पन्ने निक्षेपे, शेषं स्पष्टम्। ॥९०६॥ उपसंहरन्नाह-'आवस्सयस्से'त्यादि। तद्व्याख्यावर्णनाचोक्त चतुर्थं मूलद्वारं 'तस्स फलयोगमङ्गलसमुदायत्थे'ति, इति गाथार्थः ॥९०७॥ प्रथममाह-'तत्थे'त्यादि, स्पष्टा, नवरं प्राथम्यमस्य सकलगुणाधारत्वात् ॥ ९०८ ॥ 'अहवे'त्यादि। अथवे'ति प्राथम्यकारणान्तरोपदर्शनार्थः, 'तद्भेदा एव' सामायिकविशेषा एव 'शेषाः' अध्ययनविशेषाः, यस्मात् तत्सामायिकं दर्शनादि त्रिविधं 'सामाइयंपि तिविहं सम्मत्त सुयं तहा चरित्तं च' त्ति वचनात् न चान्यो गुण एतद्विरहेणास्तीत्यतस्तदाधारत्वाचेदमाद्यमिति गाथार्थः ॥ ९०९ ॥

अणुओगदाराइं महापुरस्सेव तस्स चत्तारि। अणुओगोत्ति तदत्थो दाराइं तस्स उ मुहाइं ॥९१०॥

अकयद्दारमनगरं कएगदारंपि दुक्खसंचारं। चउमूलद्दारं पुण सपडिदारं सुहाहिगमं ॥९११॥

सामाइयमहपुरमवि अकयद्दारं तहेगदारं वा। दुरहिगमं चउदारं सपडिदारं सुहाहिगमं ॥९१२॥

ताणीमाणि उवक्कमनिक्खेवाणुगमनयसनामाइं। छत्तिदुदुविगप्पाइं पभेयओऽणेगभेयाइं ॥९१३॥

तस्य च सामायिकाध्ययनस्य-'अणुओग'इत्यादि। अनुयोगः कः? इत्यत आह-तदर्थः-अध्ययनार्थस्तत्प्रवेशस्थानानि तु द्वाराणि, नचैतत् परिकल्पनमनर्थकं, दृष्टान्तसिद्धत्वाद्, यथा हि पुरं-'अकये'त्यादि ॥ अकृतद्वारमनगरं भवति, सन्ततप्राकारवल-यादिवेष्टितत्वात्, तत्रैतत् स्याद्-एकद्वारं नगरं भविष्यतीत्याह-कृतैकद्वारमपि दुःखसञ्चारं भवति, संप्रभिन्नमदजलकरीन्द्रोष्ट्ररथवर-

पदातिस्त्रीजनादिसङ्कुलत्वात् कार्यातिपाति च स्यात्, चतुर्मूलद्वारं पुनः समतिद्वारं सुखनिष्काशप्रवेशं स्यात्, इष्टत्वात् ॥ दार्ष्टान्तिकोपसंहारमाह–'सामाइये'त्यादि, स्पष्टा, ॥९१०–१२॥ 'ताणी'त्यादि पूर्वार्द्धं । द्वारम् । 'छत्ती'त्याद्युत्तरार्द्धं । द्वारम् । अथैतेषां निरुक्तं, तत्र उप सामीप्ये 'क्रमु पादविक्षेपे' उपक्रमणमुपक्रमो–दूरस्थस्य सतो वस्तुनस्तैस्तैः प्रकारैः समीपापादनमित्यर्थः, निक्षेपणं निक्षेपः 'क्षिप प्रेरणे' इति निश्चितः क्षेपो निक्षेपः, मोचनं रचनं न्यास इतियावत्, अनुगम्यतेऽनेनेत्यादिनाऽनुगमनं वा अनुगमः, अणुणो वा–सूत्रस्य गमोऽणुगमः, अनुरूपार्थगमनं वाऽनुगमनः, सूत्रार्थानुगमः–सूत्रार्थानुसरणमित्यर्थः, 'णीञ् प्रापणे' वक्तैव सूत्रार्थप्रापणव्यापारोपयोगात् नयतीति नयः ॥९१३॥ अत उच्यते—

सत्थस्सोवक्कमणं उवक्कमो तेण तम्मि व तओ वा । सत्थसमीवीकरणं आणयणं नासदेसम्मि ॥९१४॥
निक्खिप्पइ तेण तहिं तओ व निक्खेवणं व निक्खेवो। नियओ व निच्छिओ वा खेवो नासोत्ति जं भणियं॥
अणुगम्मइ तेण तहिं तओऽणुगमणमेव वाऽणुगमो। अणुणोऽणुरूवओ वा जं सुत्तत्थाणमणुसरणं ॥९१६॥
स नयइ तेण तहिं वा तओऽहवा वत्थुणो व जं नयणं । बहुहा पज्जायाणं संभवओ सो नओ नाम ॥९१७॥
दारक्कमोऽयमेव उ निक्खिप्पइ जेण नासमीवत्थं ।अणुगम्मइ नाणत्थं नाणुगमो नयमयविहूणो ॥९१८॥
संबन्धोवक्कमओ समीवमाणीय नत्थनिक्खेवं । सत्थं तओऽणुगम्मइ नएहिं नाणाविहाणेहिं ॥९१९॥
गुरुभावोवक्कमणं का परिवाडी कइत्थमज्झयणं ? । भावम्मि कम्मि वट्टइ ? किमिदं दव्वं गुणो कम्मं ?॥
जीवगुणोऽजीवगुणो ? किं नाणं दंसणं चरित्तं वा ? । पच्चक्खं अणुमाणं ओवम्ममहागमो वाऽवि ? ॥९२१॥

उपक्रमादिस्वरूपम् ।

लोइयलोउत्तरिओ ? किं सुयमत्थोऽहवोभयं होज्जा ?। अप्पणओऽणंतरओ परंपरं वाऽऽगमो कस्स ? ॥९२२॥
किं दिट्ठिवाइयं कालियं व किं वा सुयत्थपरिमाणं ?। ससमय-परसमयोभयसिद्धंताण व को वचो ? ॥९२३॥
को व समएगदेसो समुदायत्थाहियार इह नियओ। अज्झयणोवक्कमणं कायव्वमिहेवमाईहिं ॥९२४॥

'सत्थस्से'त्यादि, 'निक्खिप्पई'त्यादि, 'अन्वि'त्यादि, 'स णयती'त्यादि सुप्रसिद्धमिति। द्वारम् ॥ अमीषामित्थं क्रमाभिधाने किं प्रयोजनमित्यत आह–'दारे'त्यादि ॥ नानुपक्रान्तं निक्षिप्यते अग्रुहस्थमोक्षणवत्, न चान्यस्तमनुगम्यते, नाननुगतं नयावसरं भवतीति गाथार्थः ॥९१८॥ यतश्च–'संबंधे'त्यादि ॥ सम्बन्धरूप उपक्रमः सम्बन्धोपक्रमः तस्मात्समीपमानीय शास्त्रं प्रथमं ततः पुनर्न्यस्तनिक्षेपं पुनरनुगम्यते नानाविधैर्नयैः, अतोऽयमेव क्रमोऽत्र एतावन्तमालोक्याह–'तस्स फलजोगमंगले'त्यादि ॥९१९॥ साम्प्रतमनुग्रहार्थमुपक्रमसङ्क्षेपाधिकारोपप्रदर्शनमिदं गाथापञ्चकमाह–'गुरुभावोवक्कमण' मित्यादि, इह सामायिकाध्ययनार्थं बुभुत्सुना विनेयेन गुरोर्भावोपक्रमः कर्त्तव्यः, कया पुनरयं भङ्ग्या सुप्रसन्नः स्यात् ?, तथा 'का परिपाटी'कयाऽऽनुपूर्व्येदं कतिथमिति वाच्यं, कथ वा भावे वर्त्तते ?, किंचेदं द्रव्यादीनां, जीवगुणत्वे च सति कतमो ज्ञानादेः ?, ज्ञानत्वे सति कतमत् प्रत्यक्षादेः, आगमत्वेऽपि च सति लौकिको लोकोत्तरो वा ?, लौकिकत्वेऽपि सूत्रमर्थं उभयं?, सर्वथा प्रतिषेधः, लोकोत्तरत्वे सूत्रार्थोभयस्वरूपः, तत्रापि 'अप्पयओ'त्ति कस्य कः आत्मागमः अनन्तरागमः परम्परागमो वेति, तथा किमिदं दृष्टिवादादिकमुत कालिकं ?, कालिकत्वेऽस्य किं सूत्रार्थप्रमाणं ?, स्वसमयोऽस्य वाच्यः, तत्त्वेऽपि कोऽस्य समयैकदेशः समुदायार्थत्वेनाधिक्रियते, एवमादिभी रूपैरध्ययनोपक्रमणं कार्यं, व्याख्यानाङ्गत्वात् गुरुभावोपक्रमवत्॥९२०–२४॥ तथा च—

नामाई छब्भेओ उवक्कमो दव्वओ सचित्ताई । तिविहो य पुणो दुविहो परिकम्मे वत्थुनासे य ॥९२५॥
परिकम्मं किरियाए वत्थूणं गुणविसेसपरिणामो । तदभावे य विणासो दव्वाईणं जहाजोगं ॥९२६॥
खेत्तमरूवं निच्चं न तस्स परिकम्मणा न य विणासो । आहेयगयवसेण उ करणविणासोवयारोऽत्थ ॥९२७॥
नावाएँ उवक्कमणं हल-कुलियाईहिं वावि खेत्तस्स । संमज्जभूमिकम्मे पंथतलागाइयाणं च ॥९२८॥
जं वत्तणाइरूवो कालो दव्वाण चेव पज्जाओ । तो तक्करणविणासे कीरइ कालोवयारोऽत्थ ॥९२९॥
छायाएँ नालियाए व परिकम्मं से जहत्थविन्नाणं । रिक्खाईचारेहि व तस्स विणासो विवज्जासो ॥९३०॥
जं परहिययाकूयावधारणमुवक्कमो स भावस्स । तस्सासुभस्स मरुइणिगणियामच्चावओऽभिहिया ॥९३१॥
सीसो गुरुणो भावं जमुवक्कमए सुहं पसत्थमणो । सहियत्थं स पसत्थो इह भावोवक्कमोऽहिगओ ॥९३२॥
को वक्खाणावसरे गुरुचित्तोवक्कमाहिगारोऽयं ? । भण्णइ वक्खाणंगं गुरुचित्तोवक्कमो पढमं ॥९३३॥
गुरुचित्तायत्ताइं वक्खाणंगाइं जेण सव्वाइं । तो जेण सुप्पसन्नं होइ तयं तं तहा कज्जं ॥९३४॥
जो जेण पगारेणं तुस्सइ करणविणयाणुवत्तीहिं । आराहणाएँ मग्गो सो च्चिय अव्वाहओ तस्स ॥९३५॥
आगारिंगियकुसलं जइ सेयं वायसं वए वुज्जा । तहवि य सिं नवि कूडे विरहम्मि य कारणं पुच्छे ॥९३६॥
निवपुच्छिएण गुरुणा भणिओ गंगा कओमुही वहइ ? । संपाइयवं सीसो जह तह सव्वत्थ कायव्वं ॥९३७॥
जुत्तं गुरुमयगहणं को सेसोवक्कमोवओगोऽत्थ ? । गुरुचित्तपसायत्थं तेऽवि जहाजोगमाओज्जा ॥९३८॥

परिकम्मनासणाओ देसे काले य जा जहा जोग्गा । ताओ दव्वाईणं कज्जाऽऽहाराइकज्जेसु ॥९३९॥
उवहियजोग्गदव्वो देसे काले परेण विणएणं । चित्तण्णू अणुकूलो सीसो सम्मं सुयं लहइ ॥९४०॥
अहवोवक्कमसामण्णओ मया पगयनिरुवओगावि । अण्णत्थ सोचओगा एवं चिय सव्वनिक्खेवा ॥९४१॥
गुरुभावोवक्कमणं कयमज्झयणस्स छव्विहमियाणिं । । तत्थऽणुपुव्वाईसुं इदमज्झयणं समोयारे ॥९४२॥
अणुपुव्विसमोयारो कज्जो सामाइयस्स संभवओ । नियमावतारणं पुण कित्तणगणणाणुपुव्वीसु ॥९४३॥

'णामादी'त्यादि । इह प्रथम उपक्रमाख्यो द्वारविशेषो द्वेधा–शास्त्रीय इतरश्च, तत्रेतरः षोढा–नामस्थापनाद्रव्यक्षेत्रकालभावभेदात्, नामस्थापने प्राग्वत्, द्रव्यतः आगमनोआगमभेदात्, तत्र नोआगमे व्यतिरिक्तः 'सचित्तादी तिविहो'त्ति सचित्तद्रव्योपक्रमः अचित्तद्रव्योपक्रमः मिश्रद्रव्योपक्रमश्च, तत्र सचित्तद्रव्योपक्रमः द्विपदचतुष्पदापदानां, पुनरेकैको द्वेधा–परिकर्मणि वस्तुनाशे चेति गाथार्थः ॥९२५ ॥ परिकर्म किमुच्यते ? इत्याह–'परिकम्म'मित्यादि पुव्वद्धं कण्ठं, यथा कुष्माण्डघृतरसायनाद्युपयोगात् पुरुषस्य वर्णवयोऽवस्थापनं भण्डसकलप्रोतनादिभिर्वा कर्णादिवार्धक्यादिकरणमिति, अन्ये तु शास्त्रपरिज्ञानगन्धर्वनृत्यादिकलासम्पादनमपि द्रव्योपक्रममित्याचक्षते, तन्न, भावत्वादस्य, स्यादपि च आत्मद्रव्यसंस्कारविवक्षायामिति, एवं शुकसारिकादावपि भावनीयं, चतुष्पदेषु हस्त्यादिषु, अपदेषु चाम्रतरुकेतक्यादिषु वृक्षायुर्वेदात्, तत्रैतस्यात्–तरोर्वार्धक्याद्युपक्रमणं युक्तं, कालान्तरे स्वयं भावित्वात्, न तु पुंसो वर्णादिसम्पादनं, कालान्तरेऽपि विवक्षितहेतुजालमन्तरेणानुपपत्तेः, तन्न, कालान्तरेऽपि विवक्षितहेतुजालमन्तरेणानुपपत्त्यसिद्धेः; वर्णस्य नामकर्मविपाकित्वेन स्वयमपि भवनस्वभावत्वात्, विभ्रमविलासादीनां तु यूनोऽवस्थायां दर्शनात्, अत उक्तं–'प-

रिकम्मं किरियाए वत्थूणं गुणविसेसपरिणामोत्ति', 'तदभावे च' वस्त्वभावापादने च विनाश उपक्रम्यते कालान्तरभावित्वात्, आह— अनयोर्न विशेषः, उभयत्र पूर्वरूपपरित्यागेनोत्तररूपावस्थानात्, उच्यते, नैतत्, एकत्र प्रत्यभिज्ञादिदर्शनात्, अन्यत्र त्वदर्शनाद्, अथवैकत्र नाशस्यैव विवक्षितत्वात्, केषामिमावित्याह—द्रव्यादीनां, द्रव्यस्य द्विपदापदचतुष्पदलक्षणस्य चैतन्यवतः खड्गदशनजिह्वादिभिः अचेतनस्य च पद्मरागमणेः क्षारमृत्पुटपाकादिना परिकर्म, विनाशस्त्वयोघनघातादिभिः, मिश्रितस्य तस्यैव द्विपदादेरलङ्कारादिसहितस्य, आदिशब्दात् क्षेत्रकालपरिग्रहः, खड्गप्रहारगजबन्धनाङ्केन भेदादिभिरिति गाथार्थः ॥ ९२६ ॥ एवमुक्ते सत्याह—'खेत्तम्मि'त्यादि ॥ क्षेत्रं त्वरूपित्वान्नित्यमतस्तस्य नेमौ, उच्यते, सत्यं, किं त्वाधेयद्रव्यगतिवशेनैव करणविनाशोपचारावत्र, मञ्चाः क्रोशन्ति यथेति । आह— 'नावाए'इत्यादि, इह क्षेत्र(स्य)जलाधारस्य नावुडुपतरण्डकादिभिरुपक्रमणं क्रियते, इतरस्य च हलादिभिः, एवं संमार्जनभूपन्यस्तडागादिकरणेन च क्षेत्रोपक्रम इति गाथार्थः ॥९२७-२८॥ 'जन्नि'त्यादि । यतः कालो हि वर्तनादिरूपो द्रव्यपर्यायो वा चन्द्रोपरागादिलक्षणो वा अवस्तरकरणविनाशे कालोपचारः क्रियत इति गाथार्थः ॥९२९॥ अस्य च कालस्य—'छायाए'इत्यादि प्रतीतार्था ॥९३०॥ अथ भावोपक्रमस्य तल्लक्षणमाह—'जं परे'त्यादि ॥ यत्परहृदयाकूतानधारणमभिलापितार्थपरिपुष्टयेऽसौ भावस्योपक्रमः, स द्वेधा—आगमत उपक्रमपदार्थज्ञस्तत्रोपयुक्तः, नोआगमतो द्वेधा—प्रशस्तोऽप्रशस्तश्च, तत्र तस्याशुभस्य भावोपक्रमस्य स्वरूपप्रतिपादका मरुकिणिगणिकाऽमात्यादयो दृष्टान्ता अभिहिता इति गाथार्थः॥९३१॥ "पाडलिपुत्ते कपिलत्ति माहणी तीऍ तिन्नि धूयाओ । सा चिंतेइ—कहं पुण एयाओ होज्ज सुहियाओ ॥१॥नाओ मए उवाओऽत्थ तीऍ परिणाविया धुया पढमा। सिक्खाविया तई भवणतलंमि जइया ठिओ होइ॥२॥ तुह भत्तारो तइया सन्नायासेण कइवि वाराओ। चरनेउरेण चलणेण मत्थए देज्ज दढपण्हिं ॥३॥ ताएवि तह कए सो हा हा! दुक्खावियम्हि

य वयन्तो। मलिऊणं आढत्तो तीए कमलोवमे चलणे ॥४॥ तो सा वसिउं गोसे साहइ माऊएँ पुच्छियं तीए। तीएऽवि णाउ जामाउयस्स भावो उवाएणं ॥५॥ भणिया य पुत्ति! जं जं करेसि विणयं च अविणयं वावि। तं तं ते भत्तारो अमयं व वयं च मन्नेही ॥६॥ ता तेण समं पुत्तिय! दुल्लहलंभंमि माणुसे जम्मे। भुंजसु सच्छंदमती भोए एसो तुहं दासो ॥७॥ वितियाएवि तहच्चिय, भणियाए खीलपण्हि-धिक्काहिं। परिपिट्टिउ भत्तारो खणमेत्तं झिखिउं थक्को ॥८॥ सावि य तीए भणिया जणणीए पुत्ति! तुज्झ भत्तारो। परिझिंखणओ होहिति कएऽकए यावि कज्जंमि ॥९॥ झिंखणओ च्चिय नवरं ण तु धाडेहिति तओऽवराहेऽवि। भुंजसु तुमंपि भोए नियतवलद्धेण वरएणं ॥१०॥ तइयाएवि तहच्चिय आढप्पंते कुसीलदुहियाए। अभिमाणधणवरेणं तेण हक्कासि जं दिण्णा ॥११॥ भीया सा महिवट्ठे पडिया सहसा पुणोवि उट्ठेउं। आढत्ता दाउं जे, पण्ही भत्तारसीसंमि ॥१२॥ तत्तो पुणोवि हक्काएँ थरहरंती महीयले पडिया। जणणीएँ वयणकारी तहेव काउं समाढत्ता ॥१३॥ तो तेणवि खरभिउडीभीमनिडालेण रोसरत्तच्छं। णूणं गहेण गहियत्ति तेण तीए समं दिण्णा ॥१४॥ तो तेण सासुयारोसप(सरपग्घट्टमाण)अधरेण। ओयारेऊण भवणा बाहिरे थंभये वद्धा ॥१५॥ सिसिरमासदूसहसी-ततुसारेण भिन्नसव्वंगा। हेट्ठिमनरएव्व कहंचि जीविया तत्थ रयणीए ॥१६॥ मुक्का य सासुयाए धरिज्जमाणीवि रोसपसरेणं। रोयंती जणणीए गया समीवंमि सा भणति ॥१७॥ पुत्तग! जइ तस्सुट्ठियणिसण्णगसुट्ठिया णिसन्ना य। होहिसि तुमं ततो से, मोच्छिसि भत्तं च पोत्तं च ॥१८॥ तो मम वयणाओ तुमं अणुयत्तसु दसविहाए जुत्तीए। मम जामाउयमेयं अणुयत्तसु देवदुल्लहयं ॥१९॥ इयाणिं गणियत्ति—पाडलिपुत्ते नयरम्मि देवदत्तत्ति दारिया अत्थि। विच्छड्डभित्तिमहाविमलधवलपासायदुल्ललियरा ॥१॥ सव्वालंकारधरी णवजोव्वणमाणतिहुयणब्भहिया। कोट्टीयकाणकुंटय सत्तागारोव्व परिभोज्जा ॥२॥ तीए य चिंतियमिदं मज्झ गिहं विविहवेस-

पुरिसाणं। अट्ठारसपगइब्भंतराण को सो न जो एइ?॥३॥ तो णियणिया दिजाई मग्गेहि समुच्चरंतवन्नड्ढा। विद्दालिहणसुसिक्खियचित्तकरेणं सभाभित्ती॥४॥ चित्ताविया मणोज्जा, तीए घडकारलोहकारेहिं। तुन्नायकड्ढभारयणिवसेट्ठिसुयातिचरियड्ढा॥५॥ सा आगयस्स नरवण्णदायिणो पढमगं पयत्तेणं। दाइज्जइ जेण तओ, णज्जइ को एस पुरिसोत्ति॥६॥ सोऽवि य तं दट्ठूणं, विसेसओ संसती नियं जाइं। लट्ठं लट्ठंति इमो घडकारो भामती चक्कं॥७॥ इय तस्स तई भावं, चिंधेणमिमेण जाणिउं कुसला। अणुयत्तइ तहचेव य जह सो तुट्ठो धणं देइ॥८॥ 'अमच्चे'त्ति॥—"महुराए जउणसेणो राया चित्तप्पिओ य से मन्ती। सो अन्नया य बाहिं विणिग्गतो आसवाहणियं॥१॥ तत्थ य गोप्पयमज्झंमि मुत्तियं वेसरेण तं च तओ। झल्लमलंतं दट्ठुं, चिरकालं चिंतई इणमो॥२॥ होइ थिरोदगमित्थं उदगनिवाणंति वाहिउं तुरगं। वोलीणो सो राया, मंतीणवि तं वियाणेउं॥३॥ काराविंयं तलायं सहसंबवणुव्व रम्मपालीयं। दिट्ठं च तयं रन्ना, दसमाओ नवरि वरिसाओ॥४॥ पडिपुच्छियं च रण्णा केण खणावियमियं कया किं वा?। कहियं चागारिंगियकुसलेण य मे अमच्चेणं॥५॥ रन्नावि विचिहचिंतणणाणसंकाये भीयहियेयेणं। पूयात्थामलयेच्चिय, (पूया धामधणेहि य) (ववहारो) से कओ घणि ॥६॥ इति गाथार्थः॥९३१॥ साम्प्रतं प्रशस्तलक्षणमाह—'सीसो'इत्यादि, 'शिष्यः'श्रोता 'गुरोः' व्याख्यातुः 'भावम्' अनङ्गं मनो यदुपक्रमते तद्वत्सल्लीनतयाऽतीन्द्रियं सत् यदिङ्गिताकारज्ञत्वेन प्रत्यक्षमिव करोति, किंविशिष्टमित्याह—'शुभं' शुभभावहेतुत्वात् शुभस्तं, किंविशिष्टः सन्?—प्रशस्तमनाः, किमर्थमित्याह—स्वहितार्थं, स एव प्रशस्तः इह च स एवाधिकृत इति गाथार्थः॥९३२॥ एवमुक्ते सत्याह—'को' इत्यादि॥ कोऽध्ययनोपक्रमावसरेऽनेनाधिकारः?, उच्यते, प्रथमव्याख्याङ्गत्वादध्ययनोपक्रमवत्, एतदुक्तं भवति—यथाऽध्ययनोपक्रमादृते व्याख्यानं कर्तुं न शक्यते एवं गुरोश्चेतःसमाधानमन्तरेण श्रोताऽपि न श्रोतुं पार्यत इति, आह च—'गुरु' इत्यादि सुबोध्या॥९३४॥

तस्मात्–'जो' इत्यादि। 'आगारिंगिते' त्यादि, शिष्यविशेषणमाद्यपदे इति ॥९३५–३६॥ 'निवे' त्यादि सुबोध्या ॥९३७॥ कथानकं च
ग्रहीतव्यम्। यद्येवम्–'जुत्त' मित्यादि। युक्तमेवं गुरुषु भावोपक्रमणमिति, किं शेषैः?, उच्यते, गुरोर्द्रव्याद्युपक्रमो हरति चेतः। तथा-
हि–'परिकम्मे' त्यादि। परिकर्म्म गुडशुण्ठ्यादिना द्रव्यादेः संस्करणं, नाशनं त्वम्लभावादेः देशे अजाङ्गले विषये जाङ्गले वा काले
ग्रीष्मादौ ताः कुर्यात् गुरोः, ततश्च 'उवहिये' त्यादि सुचर्चमिति गाथार्थः ॥९३९–४०॥ 'अहवे' त्यादि। अथवा द्रव्योपक्रमादय उप-
क्रमसामान्यादिह प्ररूपिताः सन्तोऽन्यत्र सोपयोगा भविष्यन्तीति लाघवार्थं, एवमेव सर्वनिक्षेपाः। तदेवं लौकिकोपक्रमव्यावर्णनप्र-
संगेन–'गुरुभावो' इत्यादि। गुरुभावोपक्रमणं कृतमध्ययनस्येदानीं शास्त्रीयमुपक्रममङ्गीकृत्य क्रियते, कतिविधमित्याह–षड्विधं–षोढा
आनुपूर्वी नाम प्रमाणं वक्तव्यताऽर्थाधिकारः समवतार इति, पच्छद्धं कंठं ॥९४१–४२॥ तथाहि–'अणि' त्यादि। आनुपूर्व्यां सामायिक-
स्यावतारः कार्यः, कथं?, 'सम्भवतो' यत्र सम्भवति, एवं सामान्येनाभिधाय विशेषमाह–नियमावतारणं पुनरुत्कीर्णनगणनानुपूर्व्योः–
"नामं ठवणादविते, खेत्ते काले य गणण अणुपुव्वी। (उक्कित्तण संठाणे) सामायारी य भावे य ॥१॥" त्ति गाथार्थः ॥९४३॥ त-
त्रोत्कीर्त्तनानुपूर्व्यां सामायिकमुत्कीर्त्यते, गणनानुपूर्व्यां तु कथमिति चेत्, उच्यते–सा त्रिविधा, तद्यथा–"पुव्वाणुपुव्वी पच्छाणुपु-
व्वी अणाणुपुव्वी" त्ति, तत्र–

पुव्वाणुपुव्विओ तं पढमं पच्छाणुपुव्विओ छट्ठं। जायइ गणिज्जमाणं अनियमियमणाणुपुव्वीए ॥९४४॥

एगादेगुत्तरया छग्गच्छगया परोप्परब्भत्था। पुरिमन्तिमदुगहीणा परिमाणमणाणुपुव्वीणं ॥९४५॥

पुव्वाणुपुव्वि हेट्ठा समयाभेएण कुण जहाजेट्ठं। उवरिमतुल्लं पुरओ नसेज्ज पुव्वक्कमो सेसे ॥९४६॥

'पुव्वा' इत्यादि स्पष्टा । अणाणुपुव्वीणं चेयं करणगाथा–'एगा' इत्यादि । एकाद्या एकोत्तरा आनुपूर्वीप्रक्रममङ्गीकृत्य संख्या- माह–'छगच्छगया' पदसमूहप्रतिबद्धा, सा च परस्पराभ्यस्ता, पूर्वत उत्तरेण गुणिता इत्यर्थः, या अङ्कावली भवति सा पुनः 'पुरि- मंतिमदुगहीणा कीरइ' आनुपूर्वीपश्चादनुपूर्वित्वात् तस्य द्वयस्य, ततश्च परिमाणमनानुपूर्वीणां सिद्धयति, कथं चेत् ?, उच्यते, 'पुव्वाणु' इत्यादि । स्पष्टा, नवरमनुपूर्व्यानयनकरणगाथेयं–'पुव्वाणुपुव्वि हेट्ठा समयाभेएण कुण जहाजेट्ठं । उवरिमतुल्लं पुरओ नसेज्ज पुव्वक्क- मो सेसे ॥१॥' तथाहि–पुव्वाणुपुव्वी, सा च क्रमाङ्करूपा, ततश्च हेट्ठा कुण–अधस्तात् न्यसेत् ज्येष्ठं–पूर्वमङ्कं, न क्रमं विगणय्य ?, नेत्याह–'समयाभेदेन' पङ्क्त्यविनाशेन, उक्तं च–"जहियंमि तु निक्खित्ते पुणरवि सो चेव होइ दायव्वो । सो होइ समयभेदो, वज्जे- यव्वो पयत्तेणं ॥१॥" तत उपरिमतुल्यं पुरतः–अग्रतः न्यसेत्, यादृगुपरि लक्ष्यत इत्यर्थः, पृष्ठतः का वार्तेत्यत आह–पूर्वक्रमः शेषे, शेषांश्च पूर्वक्रमं यथास्ते तत्परिपाट्या न्यसेत्, सिद्धमेतत्प्रमाणं ७१८, तत्र यदुक्तं परस्पराभ्यस्तेति, तत्रेदं करणगाथाद्वयम्–"दो एक्क- गाइं दोन्नि उ तिन्नि दुगा छत्ति चउ छ चउवीसा । एतेवि पंच गुणिया, विसुत्तरं होइ सयमेगं ॥१॥ एयंपि य छग्गुणियं, सत्त सया होंति वीस अब्भहिया । एए य दुरूवूणा सत्तसयट्ठारसा होंति ॥२॥ अत्र चासम्मोहार्थं वितत एव दृश्यते–'दंसणं नाणं चरित्तं १ तत्थ दंसणस्स जेट्ठो णत्थित्ति तो नाणस्स हेट्ठा णाणजेट्ठो दिज्जइ, एवमेव समयाभेदात्, "पुरओ उवरिमतुल्लो सेसे उ पुव्वक्क- मो' ततो नाणे हेट्ठे दंसणे ठविज्जमाणे समयभेदो होइ उवरिमतुल्लणसणओ, ततो किं दंसणहेट्ठा णाणं धरिज्जतु ?, उच्यते–एवं- पि समयभेय एव, अतो चारित्तस्स हेट्ठा णाणं ठविज्जउ, पुव्वकमो सेसे २ ततो दंसणहेट्ठा दंसणेवि ठविज्जमाणे सो च्चिय दोसो, चारित्राधश्चारित्रन्यासप्राप्तेः अतश्चारित्राधो दर्शनम्, उवरिम० पुव्वक्कमो ४, ततो चारित्तहेट्ठे दंसणे ठविज्जमाणे सो चेव दोसो, तो

किं दसणहेट्ठा णाणं ठविज्जउ ?, उच्यते, एवंपि सो चेव दोसो, ज्ञानलाभो ज्ञानदानप्राप्तेरतो ज्ञानलाभो दर्शनं दीयते, पुव्वक्कमो प ततो नाणहेट्ठे दंसणे दिज्जमाणे सो चेव दोसो, ततो चरणहेट्ठा णाणं ठविज्जउ, ठव० पुव्वा० ६ । अत्र चतस्रः अनानुपूर्व्य इति गाथार्थः ॥९४५-४६॥ द्वारं ॥ नामाह—

जं वत्थुणोऽभिहाणं पज्जयमेयाणुसारि तं नामं । पइभेयं जं नमए पइभेयं जाइ जं भणियं ॥९४७॥

छव्विहनामे भावे खओवसमिए सुयं समोयरइ । जं सुयताणावरणक्खओवसमजं तयं सव्वं ॥९४८॥

'ज'मित्यादि यद्वस्तुनः अभिधानं ज्ञानरूपादिपर्यायमभेदानुसरणस्वभावं तन्नाम, किमुक्तं भवतीत्याह-णम् प्रह्वत्वे इति भेदं भेदं प्रति यन्नमति-प्रतिप्रभेदं याति, यद्वाचकत्वेनेति भणितं भवति, तच्चैकादि दशान्तमतः-'छव्विहे' त्यादि । 'छव्विहनामे' षड् भावाः-औदयिकः १ औपशमिकः २ क्षायिकः ३ क्षायोपशमिकः ४ पारिणामिकः ५ सान्निपातिकः ६, अतो भावेऽधिकृते 'खयोव' इत्यादि, स्पष्टम् । द्वारम् ॥९४७-४८॥ अथ प्रमाणम्—

दव्वाइचउब्भेयं पमीयए जेण तं पमाणंति । इदमज्झयणं भावोत्ति भावमाणे समोयरइ ॥९४९॥

जीवाणण्णत्तणओ जीवगुणे बोहभावओ नाणे । लोउत्तरसुत्तत्थोभयागमे तस्स भावाओ ॥९५०॥

सुयओ गणहारीणं तस्सिस्साणं तहाऽवसेसाणं । एवं अत्ताणंतरपरम्परागमपमाणम्मि ॥९५१॥

अत्थेण उ तित्थंकरगणहरसेसाणमेवमेवेदं । मूढणयंति न संपइ नयप्पमाणेऽवयारो से ॥९५२॥

आसी॑ पुरा सो नियओ अणुओगाणमपुहुत्तभावम्मि। संपइ नत्थि पुहुत्ते होज्ज व पुरिसं समासज्ज ॥९५३॥

**संखामाणे कालियसुयपरिमाणे परित्तपरिमाणं । सुयओ तदत्थओ पुण भणियं तमणंतपज्जायं ॥९५४॥**

'दव्वाइ' इत्यादि । प्रमीयतेऽनेनेति प्रमाणं, तच्चतूरूपं द्रव्यादिविषयत्वात्, ततश्चेदमध्ययनं द्रव्यादित्रयव्यपोहेन भाव इतिकृत्वा भावप्रमाणे समवतरतीति गाथार्थः ॥९४९॥ ननु च भावप्रमाणं त्रेधा–गुणनयसंख्याभेदात्, ततश्च कतमदेतदिति, उच्यते, गुणप्रमाणं, ननु चेदमपि द्वेधा–जीवाजीवभेदादिति, उच्यते, जीवगुणप्रमाणमिति, आह च–'जीवाणण्ण' मित्यादि । आत्मभावानर्थान्तरत्वात् जीवगुणप्रमाण एवास्य समवतारः, ननु च तदपि त्रेधा–ज्ञानदर्शनचारित्रभेदादतः क्वास्य समवतारः ? इत्याह–बोधस्वभावत्वात् ज्ञाने, ननु च चतुर्धा ज्ञानं–प्रत्यक्षानुमानोपमानागमभेदात्, उच्यते, आगमेऽस्य समवतारः, ननु चासौ द्वेधा- लौकिक–लोकोत्तरभेदात्, उच्यते–'लोगुत्तरे'त्ति लोकोत्तरे, ननु चायं त्रेधा–सूत्रार्थोभयरूपत्वात्, अत आह–'सुत्तत्थोभयागमे'त्ति सूत्रागमेऽर्थागमे उभयागमे वाऽस्य समवतारः, किं कारणमित्याह–तत्स्वभावत्वात्, ॥९५०॥ ननु च सूत्रागमस्त्रिविधः–आत्मानन्तरपरम्परभेदात्, एवमर्थागमोऽप्यतः कथं केषां कः ? इत्यत आह–'सुयओ' इत्यादि । 'अत्थेण उ' इत्यादि गाहद्धं, तत्र श्रुतमङ्गीकृत्य गणधारिणां तथा तच्छिष्याणां जम्बूस्वाम्यादीनामदशेषाणां च तच्छिष्याणां प्रभवादीनाम्, 'एवं' अनेनैव क्रमेण, किमत आह–'जहासंखं' 'अत्ते' त्यादि, स्पष्टम्। तथा एवमेवेदमध्ययनमर्थमङ्गीकृत्य तीर्थकर–गणधर–जम्बूनां किम् 'अत्ते' त्यादि अनुवर्त्तते ॥ द्वारं ॥ 'नय' इति मूढनयमिदमितिकृत्वा नास्याधुनाऽस्मिन् समवतारः ॥९५१–५२॥ तथा च–'आसी' त्यादि । 'सो'त्ति समोतारो, शेषं स्पष्टं, स्याद्वा पुरुषमाश्रित्यासावपीति गाथार्थः ॥९५३॥ द्वारं ॥ संख्या नामस्थापनाद्रव्यक्षेत्रकालौपम्यपरिमाणभावभेदभिन्ना, तत्र–'संखे'त्यादि । ग्रन्थतो नियतपरिमाणं "संखेज्जा अक्खरा" इत्यादिवचनात्, अर्थतस्त्वनन्तम् 'अनन्ता गमा' इत्यादि वचनादिति

गाथार्थः ||९५४|| द्वारं || अथ वक्तव्यता, सा च त्रिविधा, स्वसमयवक्तव्यतादिभेदाद्, आह च—

समओ जो सिद्धंतो सो सपरोभयगओ तिविहभेओ। तत्थ इमं अज्झयणं ससमयवत्तव्वयानिययं ||९५५||
परसमओ उभयं वा सम्मद्दिट्ठिस्स ससमओ जेणं। तो सव्वज्झयणाइं ससमयवत्तव्वनिययाइं ||९५६||
मिच्छत्तमयसमूहं सम्मत्तं जं च तदुवगारम्मि। वट्टइ परसिद्धंतो तो तस्स तओ ससिद्धंतो ||९५७||
सावज्जजोगविरई अज्झयणऽत्थाहिगार इह सो य। भण्णइ समुदायत्थो ससमयवत्तव्वयादेसो ||९५८||
अहुणा य समोयारो जेण समोयारियं पइद्दारं। सामइयं सोऽणुगओ लाघवओ नो पुणो वच्चो ||९५९||

'समओ' इत्यादि सुगमा ||९५५|| केन कारणेनेत्यत आह—'पर' इत्यादि पूर्वार्द्धमसकृद् भावितभावार्थं 'तो' इत्यादि स्पष्टम् ||९५६|| अपि च—'मिच्छत्ते' त्यादि स्पष्टा ||९५७|| द्वारम्। (अर्थाधिकारः) 'सावज्जे' इत्यादि। इहाध्ययनार्थाधिकारः सावद्ययोगविरतिः, स च सावद्ययोगविरतिलक्षणोऽर्थाधिकारः समुदायार्थो भण्यते, असावपि च स्वसमयवक्तव्यतैकदेशः संपूर्णाया इति शेषः ||९५८|| द्वारम्। 'अहुणे' त्यादि। साम्प्रतं समवतारः, स चानुगत इति सम्बन्धः, चकारश्चोक्तवद् भिन्नक्रम इति, सम्भृतः प्रतिद्वारं समवतारितत्वात् तस्य, तत्रैतत्स्यात्—पुनरप्येतद् ग्रन्थावर्त्तनेन समवतार्यतां, तन्न, यतो 'लाघवार्थं' ग्रन्थगौरवपरिहाराय, न पुनरसौ वाच्योऽन्याय्यत्वात्, तदेवमयं क्षयोपशमत उत्क्रामितः ||९५९|| इत्युपक्रमः समाप्तः। अथ निक्षेपः—किमर्थं पुनरयं भण्यते? इत्यत आह—

भण्णइ धिप्पइ य सुहं निक्खेवपयाणुसारओ सत्थं। ओहो नामं सुत्तं निक्खेत्तव्वं तओऽवस्सं ||९६०||

ओहो जं सामण्णं सुयाभिहाणं चउव्विहं तं च । अज्झयणं अज्झीणं आओ झवणा य पत्तेयं ॥९६१॥
नामाइचउब्भेयं वण्णेऊणं सुयाणुसारेणं । सामाइयमाउज्जं चउसुंपि कमेण भावेसु ॥९६२॥
जेण सुहप्पज्झयणं अज्झप्पाणयणमहियमयणं वा । बोहस्स संजमस्स व मोक्खस्स व जं तमज्झयणं ॥
अज्झीणं दिज्जंतं अव्वोच्छित्तिनयओऽत्थिकायव्व । आओ नाणाईणं झवणा पावाण कम्माणं ॥९६४॥
सामाइयंति नामं विसेसविहियं चउव्विहं तं च । नामाइं निरुत्तीए सुत्तप्फासे य तं वोच्छं ॥९६५॥
इह जइ कीस निरुत्ते तत्थ व भणिएह भण्णए कीस ? । निक्खेवमित्तमिहइं तस्स निरुत्तीएँ वक्खाणं ॥
तो कीस पुणो सुत्ते ? सुत्तालावो तओ न तन्नामं । इह उण नामं नत्थं तं वक्खायं निरुत्तीए ॥९६७॥
इह पुण कीस न भण्णइ ? जं निक्खेवो इमो स निज्जुत्ती । निज्जुत्ती वक्खाणं निक्खेवो नासमेत्तं तु ॥९६८॥
नणु निज्जुत्तिअणुगमे भणिया एसावि नासनिज्जुत्ती । सच्चमियं निज्जुत्ती इयं तु निक्खेवमित्तस्स ॥९६९॥
निक्खेवमित्तमहवा अत्थवियारो य नासजुत्तीए । सद्दगओ य निरुत्ते सुत्तप्फासम्मि सुत्तगओ ॥९७०॥
जो सुत्तपयन्नासो सो सुत्तालावयाण निक्खेवो । इह पत्तलक्खणो सो निक्खिप्पइ न उण, किं कज्जं ? ॥९७१॥
सुत्तं चेव न पावइ इह सुत्तालावयाण कोऽवसरो ? । सुत्ताणुगमे काहिइ तण्णासं लाघवनिमित्तं ॥९७२॥
इह जइ पत्तोवि तओ न नस्सए कीस भण्णए इहइं ? । दाइज्जइ सो निक्खेवमेत्तसामण्णओ नवरं ॥९७३॥
संपयमोहाईणं संनिक्खित्ताणमणुगमो कज्जो । सोऽणुगमो दुविगप्पो नेओ निज्जुत्तिसुत्ताणं ॥९७४॥

**निज्जुत्ती तिविगप्पा नासोवग्घायसुत्तवक्खाणं। निक्खेवस्साणुगया उद्देसाईदुवग्घाओ ॥९७२॥**

'भण्णइ' इत्यादि। 'भण्यते' व्याख्यायते व्याख्यात्रा 'गृह्यते च' आदीयते च श्रोत्रा 'सुखं' अक्लेशेनैव 'नि-
क्षेपपदानुसारतो' निक्षेपाख्यानुयोगद्वारोपष्टम्भेन 'शास्त्रं' सामायिकाध्ययनादि यतस्ततः 'अवश्यं' नियमेन ओघो
नाम ध्रुवं च निक्षेप्तव्यम्, ओघनामनिष्पन्नसूत्रालापकभेदेन त्रिविधित्वादिति गाथार्थः ॥९६०॥ तत्रौघनिष्पन्न इति कि-
मुक्तं भवतीत्याह–'ओहो' इत्यादि॥ ओघो यत्सामान्यं श्रुताभिधानं तच्चतुर्विधं, तद्यथा–'अज्झयण'मित्यादि पदचतु-
ष्टयन्यास इति गाथार्थः ॥९६१॥ 'नामादी'त्यादि॥ अत्र चैकैकं नामादिना चतुर्भेदं व्याख्यायानुयोगद्वारानुसारेण, किमत्र
आह–'सामायिकं' सामायिकाध्ययनम् 'आयोज्यं' वक्तव्यं चतुर्ष्वपि 'क्रमेण' आनुपूर्व्या 'भावेसु'त्ति भावाध्ययने भावाक्षीणे
भावाये भावक्षपणायां चेत्यर्थः, इति गाथार्थः ॥९६२॥ एकैकस्याध्ययनादेर्निरुक्तमाह–'जेणे'त्यादि॥ येन कारणेन शुभं-प्रशस्तं
अध्यात्मं-चेतः, ततश्च शुभं अध्यात्मं जनयतीति 'सुहज्झप्पयणं' प्पकारलोपः प्राकृतशैल्या, ततो 'समज्झयणं'ति सम्बन्धः, अथवा 'अज्झ-
प्पाणयणं'ति पकाराकारणकारलोपात्, शेषं प्राग्वत्, 'वा' इत्यथवा 'अधिकं' विशेषेण 'अयनं' गमनं प्रापणं, कस्येत्याह–बोधस्य
संयमस्य वा, कारणत्वान्मोक्षस्य वेति गाथार्थः ॥९६३॥ 'अज्झीणं' मित्यादि स्पष्टा इत्ययमोघनिष्पन्न उक्तः॥९६४॥ साम्प्रतं
नामनिष्पन्नः, तत्र–'सामाइये'त्यादि॥ सामायिकमित्येतन्नाम विशेषविहितं, न सामान्यकृतं, तच्चास्य विशेषनाम कतिविधमित्यत
आह–'चतुर्विधं' चतूरूपं, तच्चास्य वर्त्तते, कथमित्यत आह–'नामादि' नामसामायिकादि, इदं च निक्षेपमात्रं, निक्षेपश्च क्वचिद्
व्याख्येय इति भावनीयं, ततः किमत्र आह–'तं' ति तदस्य नामादिनिक्षेपं 'वोच्छं' वक्ष्ये, क्वेत्याह–'निरुत्तीए'त्ति अनुगमाख्य-

द्वारमतिद्वारे, तथा सूत्रस्पर्शे च-अनुगमाख्यद्वारविशेष एव, सुत्तफासगयं नामादि सौत्रं निक्षिप्तं कृत्वा तद्व्याख्यानादिति गाथार्थः ॥९६५॥ इदानीमतिगहनद्वारकलापविवेचनार्थं चोद्यं कारयन्नाह-'इहे'त्यादि ॥ इह-अस्मिन्नवसरप्राप्ते नामनिष्पन्नेऽपि निक्षेपे यदि सामायिकं नाम प्राप्तं ततः 'कीस निरुत्ते'त्ति किमिति निरुक्तौ वक्ष्यते ?, अथ तत्रेदं वक्ष्यते इह किमिति भण्यते ?, उच्यते, 'निक्खेवमेत्तमिहइं तस्स'त्ति तस्य-सामायिकनामादेरिह-नामनिष्पन्ने 'निक्षेपे' निक्षेपद्वारांशे निक्षेपमात्रमधिक्रियते, तच्च 'कृतमेव' नामसामायिकमित्येवमादिवचनात्, 'निरुत्तीए वक्खाणं'ति निरुक्तौ तु व्याख्यानं तस्याधिक्रियते, निक्षेपव्याख्यानयोश्च महान् विशेष इति गाथार्थः ॥९६६॥ आह-यद्येवं 'तो कीस' इत्यादि ॥ यदि निक्षेपद्वारन्यस्तं सामायिकनाम निरुक्तौ व्याख्यायते ततः किमिति 'पुनः' भूयो द्वितीयां वारां 'सूत्रे' सूत्रस्पर्शिकायां तद्वक्ष्यते, येनोच्यते 'सुत्तफासे व तं वोच्छं'ति, करोमि भदंत ! सामायिकमिति प्रबन्धेन, तस्मात् सर्वमेतदसम्बद्धमिति, उच्यते, न, अभिप्रायापरिज्ञानात्, तथाहि-सूत्रालापकः खल्वसौ त्रुटिमात्रसमाननिर्देशभावी, अनभिमतमतिषेधमाह-'तओ न तं नाम'न्ति तन्नाम, 'सूत्रालापकव्याख्या'सा, न तु नाम्नो व्याख्या सा, तस्या निरुक्तिविषयत्वात्, असम्बद्धतां परिहरन्नाह-इह तु नामनिक्षेपे सामायिकनाम न्यस्तं, तद्व्याख्यानं तु निरुक्तौ,अतः सुव्यवस्थितमादिप्रतिज्ञागाथासूत्रमिति गाथार्थः ॥९६७॥ आह-परिहृतं नामैतत्, तथापि-'इहे'त्यादि ॥ 'इह पुण'त्ति इहैव निक्षेपद्वारे तन्नाम निक्षेपमात्रं कृत्वा लाघवार्थमध्ययननामार्थनिरूपणमपि 'कीस ण भण्णइ ?' किमिति न क्रियत इत्यर्थः, उच्यते, यत्-यस्माद्यं-तन्नामादि निक्षेपो-निक्षेपद्वारं 'सा णिज्जुत्ति'त्ति सा निरुक्तिः निर्युक्तिर्वर्त्तते, ततो निक्षेपमात्रे व्याख्याऽनवसरः, व्याख्यावसरः कः ?, तथा चाह-'निज्जुत्ती वक्खाणं' उपोद्घातस्येति शेषः, निक्षेपस्तु 'न्यासमात्रं'रचनामात्रमिति महदन्तरमिति गाथार्थः ॥९६८॥ अत्रैवान्येन कारणेनाह-'नणु'इत्यादि ॥

नन्वेषाऽपि-न्यासनिर्युक्तिः नन्वेषाऽपि निक्षेपस्य व्याख्या 'भणिता' प्रतिपादिता, क्वेत्याह-'निज्जुत्तिअणुगमे' अनुगमाख्यद्वार-स्यावयेदे, कः प्रत्ययः ? इति चेत्, उच्यते, यतः श्रूयन्ते गायन्तो निक्षेपनिर्युक्त्यनुगमोऽनुगतो यदिदमधो निक्षिप्तम्, अत इहैव निक्षे-पार्थव्याख्याऽप्यस्तु, किमुच्यते तस्य निर्युक्त्यादौ व्याख्येति ?, उच्यते, सत्यमियं निर्युक्तिन्यासस्य, निक्षेपस्येत्यर्थः, किं त्वियं 'नामा-दिनिक्षेपमात्रस्यैव' नामादिन्यासस्वरूपनिरूपणमात्रार्थैवेयं, न तु निक्षेपशब्दार्थनिरूपणार्थाऽपि, तस्य निरुक्तिविषयत्वादिति गाथार्थः ॥९६९॥ पुनरपीदं प्रकरणं विषयविभागे व्यवतिष्ठापयिषुराह-'निक्खेव' इत्यादि ॥ अथवा निक्षेपद्वारे सामायिकस्य 'निक्खेवमेत्तं' तस्य अत्थं भासिज्जइ, तथा तदर्थविचारमात्रं तु 'न्यासनिर्युक्तं' निक्षेपनिर्युक्तौ यथा 'जस्स जीवस्स वेरयेवमादि', निरुक्तौ तु शब्द-विचारः, सूत्रस्पर्शे च सूत्रगत एव भविष्यति, सूत्रार्थपर्यालोचनारूपत्वात्, नतु सामायिकनाम्न इति ॥९७०॥ नामनिष्पन्नो गतः, सूत्रालापकनिष्पन्नमाह-'जो' इत्यादि ॥ 'सुत्त'मित्यादि ॥ यः सूत्रपदानां नामादिन्यासः सोऽयं, स चेह प्राप्तावसरोऽपि न निक्षि-प्यते, आह-किं कारणं ?, उच्यते, इह सूत्राभावात्तदालापकानामविभागः, यत एवं तस्माल्लाघवार्थे सूत्रानुगमे न्यासं करिष्यत इति गाथार्थः ॥९७१-७२॥ अत्राप्याह-'इहे'त्यादि ॥ इह यद्यसौ प्राप्तोऽपि तत्र न्यस्यते किं तेनोक्तेन ?, तद्यथा-सूत्रालापकनिष्पन्नश्चेति, उच्यते, निक्षेपमात्रमङ्गीकृत्योपदर्श्यत एव, नवरं केवलं, न तून्यस्यते, ग्रन्थगौरवप्रसङ्गात्, इत्युक्तः सूत्रालापकनिक्षेपः, तदुक्तौ च निक्षेप इति ॥९७३॥ अथ तृतीयद्वारसम्बन्धनार्थमाह-'संपय'मित्यादि ॥ साम्प्रतमोघादीनां निक्षिप्तत्वादनुगमः कार्य इत्यनुगमः प्राप्तः, स चानुगमो द्वेधा-सूत्रानुगमो निर्युक्त्यनुगमश्चेति गाथार्थः ॥९७४॥ तत्र तावन्निर्युक्त्यनुगमस्त्रिविधः-निक्षेपनिर्युक्त्यनुगमः उपोद्घात-निर्युक्त्यनुगमः सूत्रस्पर्शनिर्युक्त्यनुगमश्चेति। आह च-'निज्जुत्ती'त्यादि पूर्वार्द्धमुक्तार्थं, तत्र 'निक्षेपस्यानुगता' निक्षेपमात्रस्यावसिता,

सैवास्य व्याख्या यन्न्यासमात्रमितिकृत्वा । द्वारम् । तथोद्देशादिभिर्द्वारैः 'उपोद्घातः' शास्त्रोत्पत्तिरनुगम्यत इत्यध्याहारः॥९७५॥तद्यथा-

उद्देसे निद्देसे य निग्गमे खेत्त काल पुरिसे य । कारण पच्चय लक्खण नए समोयारणाऽणुमए (नि. ७९)

किं कइविहं कस्स कहिं केसु कहं केचिरं हवइ कालं । कइ संतरमविरहियं भवाऽऽगरिस फासण निरुत्ती (८०)

'उद्देस' इत्यादि ॥ 'किमि'त्यादि ॥

अज्झयणं उद्देसोऽभिहियं सामाइयंति निद्देसो । सामण्णविसिद्धाणं अभिहाणं सत्थनामाणं ॥९७८॥
दारोवन्नासाइसु निक्खेवे ओहनामनिप्फन्ने । उद्देसो निद्देसो भणिओ इह किं पुणग्गहणं ? ॥९७९॥
इह विहियाणमणागयगहणं तत्थऽन्नहा कहं कुणउ ? । तेसिं गहणमकाउं दारन्नासाइकज्जाइं ? ॥९८०॥
अहवा तत्थुद्देसो निद्देसोऽविय कओ इहं तेसिं । अत्थाणुगमावसरे विहाणवक्खाणमारद्धं ॥९८१॥
अन्ने उ विसेसमिहं भणंति नोद्देसयद्धमेयंति । जाणावियमज्झयणं समासदारावयारेणं ॥९८२॥
अंगाइपण्हकाले कालियसुयमाणसमवयारे-य । तमणुद्देसयबद्धं भणियं चिय इह किमब्भहियं ? ॥९८३॥
नणु निग्गमो गउ चिय अत्ताणंतरपरंपरागमओ । तित्थराईहिंतो आगयमेयं परंपरया ॥९८४॥
इह तेसिं चिय भण्णइ निद्देसो निग्गमो जहा तं च । उवयातं तेहिंतो खेत्ताइविसेसियं बहुहा ॥९८५॥
अज्झयणलक्खणं नणु खओवसमियं गुणप्पमाणे वा । नाणागमाइगहणे भणियं किमिहं पुणो गहणं? ॥९८६॥

निद्देसमेत्तमुत्तं वक्खाणिज्जइ सवित्थरं तमिह । अहवा सुयस्स भणियं लक्खणमिह तं चउण्हंपि ॥९८७॥
भणिया नयप्पमाणे भण्णंतीहं नया पुणो कीस ? । मूलद्दारे य पुणो एयंमि को णु विणिओगो ? ॥९८८॥
जे चिय नयप्पमाणे ते चिय इहइं सवित्थरा भणिया । जं तमुवक्कममेत्तं वक्खाणमिणं अणुगमोत्ति ॥९८९॥
अहवा तत्थ पमाणं इहं सरूवावहारणं तेसिं । तत्तो वक्कंता वा इह तदणुमयावतारोऽयं ॥९९०॥
सामाइयसमुदायत्थमेत्तवावारतप्परा एए । मूलद्दारनया पुण सुत्तप्फासोवओगपरा ॥९९१॥
जीवगुणो नाणंति य भणिए इह किंति का पुणो संका ? । तं चिय किं जीवाओ अण्णमणन्नंति संदेहो ॥९९२॥
भणिए खओवसमियंति किं पुणो लब्भए कहं तंति ? । इह सो चिय चिंतिज्जइ किह लब्भइ सो खओवसमो ? ९९३
किं बहुणा ? जमुवक्कमनिक्खेवेसु भणियं पुणो भणइ । अत्थाणुगमावसरे तं वक्खाणाहिगारत्थं ॥९९४॥
सत्थसमुत्थाणत्थो पायेणोवक्कमो तहाऽयंपि । सत्थस्सोवग्घाओ को एएसिं पइविसेसो ? ॥९९५॥
उद्देसमेत्तनियओ उवक्कमोऽयं तु तव्वियोहत्थं । पाएणोवग्घाओ नणु भणिओऽयं जओऽणुगमो ॥९९६॥
नासस्स य संबंधणमुवक्कमोऽयं तु सुत्तवक्खाए । संबंधोवग्घाओ भण्णइ जं सा तदंतम्मि ॥९९७॥

'अज्झे'त्यादि । इह शास्त्राध्ययनमिति सामान्याभिधानमुद्देश उच्यते, सामायिकमिति च विशेषोक्तिर्निर्देशः । अमुमेवार्थं पश्चाद्र्धेनाह–'सामण्णे'त्यादि, तत्र 'अभिहाणं' इत्यभिधानं उद्देशनिर्देशौ, कयोरित्यत आह–'सत्थनामाणं'ति शास्त्रं च नाम च शास्त्रनामनी तयोः, किंविशिष्टयोः ?, सामान्यविशिष्टयोः, ओघविशेषविशिष्टयोरित्यर्थ इति गाथार्थः ॥९७८॥ आह–यद्येवं

उद्देशादिषु पुनरुक्तत्वे-निरासः ॥३०५॥

न वाच्यमेतद् द्वारद्वयं, प्रागेव गतार्थत्वाद्, अनुयोगद्वारप्रारम्भवेलायामेव अस्य च सामायिकाध्ययनस्य चत्वारीत्याद्युक्तत्वात् ॥ आह च चोदकः—'दार' इत्यादि ॥ द्वारोपन्यासादावेतौ भणितौ, 'अस्य च सामायिकाध्ययनस्ये'ति वचनात्, ओघनामनिष्पन्ननिक्षेपयोश्चतानुक्तौ, 'अध्ययनं सामायिक'मिति वचनात्, अत इह—उपोद्घाते किं पुनरनयोर्ग्रहणमिति गाथार्थः ॥९७९॥ उच्यते—'इहे'त्यादि, इहोपोद्घातस्वस्थाननिहितयोः सतोस्तयोः सूत्रद्वारोपन्यासादौ अनागतग्रहणमकारि, इत्थं चैतद्, अन्यथा कथं करोतु तयोरध्ययनसामायिकरूपयोरुद्देशनिर्देशयोर्ग्रहणमकृत्वा द्वारोपन्यासादौ 'कार्याणि'उपक्रमादिद्वारन्यासादीनि, आकाशस्येवेति प्रतीतिः स्यादिति गाथार्थः ॥९८०॥ 'अहवे'त्यादि। अथवा तत्र द्वारोपन्यासादौ अनयोःसूत्रमात्रतैव पठिआ, इह तूपोद्घातनिर्युक्तौ तयोर्विधानतो लक्षणतश्च व्याख्यानं प्रारब्धं, किमिति ?,अर्थानुगमावसरत्वात् साम्प्रतकालस्य,तदनेन कालक्रमेणाध्ययनं व्याख्यातुं पार्यते न हेलयैवेत्येतदाहेति गाथार्थः ॥९८१॥ 'अन्ने उ'इत्यादि ॥ अन्ये तु व्याख्यातार इह उपोद्घाते द्वारोपन्यासाद्युक्तयोरप्यनयोर्विशेषं भणन्ति, किंविशिष्टमित्याह—इदमध्ययनं नोद्देशक्रमतिबद्धमिति ज्ञापितं भवति, केनेत्याह 'समासद्वारावतारेण' अङ्गश्रुतस्कन्धाध्ययनसमासद्वारावतारेण, इहोद्देशनिर्देशाभिधानेनेत्यर्थ इति गाथार्थः ॥९८२॥ आह—अस्त्वयं न्याय्य इति, तत्र, पौर्वापर्यानवबोधात्, तथाहि—'अंगादी'त्यादि। 'अंगादिपण्हकाले तमणुद्देसयबद्धं भणियं चिय तं णो उद्देसो णो उद्देसत्ति वचनात्, तथा 'कालियसुयसमोयारे जं भणियं' अर्थात् 'न संखेज्जा उद्देसा' इह किमभ्यधिकमज्ञातं ज्ञाप्यते ?, संस्मार्यत इति चेत्, न त्वतिप्रसङ्ग इति गाथार्थः ॥९८३॥ तदेवमाद्यं द्वारद्वयं शोधितमिदानीं तृतीयशुद्धये माह, आह—'नणिव'त्यादि ॥९८४॥ नन्वागमद्वारे निर्गमोक्तेः किमितीह भूय उच्यते ?, उत्तरमाह—'इहे'त्यादि। इह निर्गमे उपोद्घाते वा तेषामेव जिनगणधराणां 'भण्यते' प्ररूप्यते, क इत्यत आह—निर्देशः, क एते जिनादय

इति, तथा 'निर्गमो' निष्कामो मिथ्यात्वतमसः, तच्च सामायिकं यथा तेभ्यः प्रसूतं, किंविशिष्टम् ? 'क्षेत्रादिविशेषितं' द्रव्यक्षेत्रकालपुरुषकारणप्रत्ययादिविशिष्टं 'बहुधा' नानेति गाथार्थः ॥९८५॥ लक्षणमधिकृत्याह—'अज्झयण' मित्यादि । नन्वध्ययनलक्षणं क्षायोपशमिकमुक्तमेवास्ति इह किं भूयो लक्षणग्रहणे ?, तथा गुणप्रमाणे वा 'णाणमिदं भणियं' तत्राप्यागमादिग्रहणे भणितमिदमतः किमितीह लक्षणमिति गाथार्थः ॥९८६॥ उच्यते—'निद्देस' इत्यादि । तस्य लक्षणस्याधस्तान्निर्देशमात्रमुक्तमिह तु तत्सविस्तरं व्याख्यायत इति को दोषः ?, अथवाऽधस्तात् सुत्तमामाइयस्स तल्लक्षणमुक्तम्, इह तु चतुर्णामपि सामायिकानामुच्यते, 'सम्मत्त सुयं देसे सव्वे तह होइ सामइयं'ति गाथार्थः ॥९८७॥ नयानङ्गीकृत्याह—'भणिया' इत्यादि 'गुणनये'ति वचनात् भणिता नयद्वारे नया इह किमुच्यन्ते ?, तथा मूलद्वारे चतुर्थे भणिताः, को वाऽनयोर्द्वारयोर्विनियोगः ? इति गाथार्थः ॥९८८॥ उच्यते—'जे' इत्यादि । आवश्यया एवेह सविस्तरमुच्यन्ते, द्वितीयं परिहारमाह—यस्मात्तत्र तेषामुपक्रमणमात्रमुक्तमिह तु तैर्व्याख्यानं—कः किमिच्छतीत्येवमादीति गाथार्थः ॥९८९॥ 'अहवे'त्यादि। अथवा तत्र मूलद्वारे प्रमाणं भणितं यथा सप्त ते नया इति, इह तु तेषामेव स्वरूपनिरूपणम्, अथवा तत्रोपक्रान्तानामिह तदनुमतावतारोऽयं चिन्त्यत इति गाथार्थः ॥९९०॥ तथा—'सामाइये'त्यादि। नयप्रमाणोक्ता उपोद्घातोक्ताश्च नयाः सामायिकसमुदायार्थमात्रव्यापारपराः, न सूत्रार्थविनियोगिनः, मूलद्वारनयास्त्वेतरमिति गाथार्थः ॥९९१॥ आह—'जीवगुणो' इत्यादि पृच्छा, उच्यते, स एव हि गुणो गुणिनोऽर्थान्तरमनर्थान्तरं वेति सन्देहात् किमित्याहेति गाथार्थः ॥९९२॥ आह—'भणिए' इत्यादि । षड्विधनाम्नि क्षायोपशमिकमेतदिति भणिते पुनः कथं लभ्यत इति कोऽस्य विभागो ?, ननु तदावरणक्षयोपशमाल्लभ्यत इति को न जानाति ?, उच्यते, इह स एवास्य कथं लभ्यत इति चिन्त्यत इति

जगदि'त्येवमादि, उपघातजनकं-सत्त्वोपघाती, यथा-वेदविहिता हिंसा हिंसा न भवति, निरर्थकं वर्णक्रमनिर्देशवद् ददरादिवत् डित्थादिवद्वा, पौर्वापर्यायोगादप्रतिसम्बन्धार्थमपार्थकं, यथा-दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डस्त्वर कीटिके दिशमुदीचीं स्पर्शनकस्य पिता प्रतिसीन इत्येवमादि, वचनविघातोऽर्थविकल्पोपपत्त्या छलं वाक्छलं, यथा-नवकम्बलो देवदत्त इत्येवमादि, द्रोहस्वभावं द्रुहिलं, यथा-"यस्य बुद्धिर्न लिप्येत, हत्वा सर्वमिदं जगत्" इत्येवमादि, कलुषं वा द्रुहिलं, येन पुण्यपापयोः समता आपाद्यते, यथा-"एतावानेव पुरुषो, यावानिन्द्रियगोचरः" इत्येवमादि, निःसारं परिफल्गु वेदवचनवत्, वर्णादिभिरभ्यधिकमधिकं, तैरेव हीनं न्यूनम्, अथवा हेतूदाहरणाधिकमधिकं, यथाऽनित्यः शब्दः कृतकत्वप्रयत्नानन्तरीयकत्वाभ्यां घटपटवदित्येवमादि, एताभ्यामेव न्यूनं हीनं, यथा-अनित्यः शब्दः घटवद् अनित्यः शब्दः कृतकत्वादित्येवमादि, शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात्, तथा अर्थापन्नस्य स्वशब्देन पुनर्वचनं च, तथाहि-शब्दपुनरुक्तमिन्द्र इन्द्र इति, अर्थपुनरुक्तमिन्द्रः शक्र इति, अर्थादापन्नस्य स्वशब्देन पुनर्वचनं यथा-(पीनो)देवदत्तो दिवा न भुङ्क्ते इत्यर्थादापन्नं रात्रौ भुङ्क्ते इति, तत्र यो ब्रूयात् दिवा न भुङ्क्ते रात्रौ भुङ्क्ते इति स पुनरुक्तमाह, व्याहतं नाम यत्र पूर्वेणापरं विहन्यते यथा-"कर्म्म चास्ति फलं चास्ति, कर्त्ता नास्ति तु कर्मणा"मित्येवमादि, अयुक्तम्-अनुपपत्तिक्षमं यथा-"तेषां कटतटभ्रष्टैर्गजानां मदबिन्दुभिः। प्रावर्तत नदी घोरा, हस्त्यश्वरथवाहिनी ॥१॥"इत्येवमादि 'क्रमभिन्न'मित्यादि, क्रमभिन्नं यत्र यथासंख्यमनुदेशो न क्रियते, यथा-स्पर्शनरसनघ्राणचक्षुःश्रोत्राणामर्थाः स्पर्शरसगन्धवर्णशब्दा इति वक्तव्ये स्पर्शरूपशब्दगन्धरसा इति ब्रूयादित्येवमादि, 'वचनभिन्नं' वचनव्यत्ययो यथा-वृक्षावेतौ पुष्पिताविति वक्तव्ये वृक्षावेते पुष्पितावित्येवमादि, 'विभक्तिभिन्नं' विभक्तिव्यत्ययः यथैष वृक्ष इति वक्तव्ये एष वृक्षमित्याह, लिङ्गव्यत्ययः यथेयं स्त्रीति वक्तव्ये अयं स्त्रीत्याह, अनभिहितम्-अनुप-

दिष्टं स्वसिद्धान्ते, यथा–सप्तमः पदार्थो दशमं वा द्रव्यं वैशेषिकस्य, प्रधानपुरुषाभ्यां अधिकं सांख्यस्य, चतुःसत्यातिरिक्तं च शाक्यस्येत्येवमादि, अपदं पद्यविधानन्यच्छन्दोऽधिकारेऽन्यच्छन्दोऽभिधानं यथाऽऽर्यापदे वैतालीयादिपदाभिधानं, स्वभावहीनं यद्वस्तुनः स्वभावतोऽन्यथावचनं, यथा–शीतोऽग्निः मूर्तिमदाकाशमित्येवमादि, व्यवहितम्–अन्तर्हितं, तथाहि–यत्र प्रकृतमुत्सृज्याप्रकृतं व्यासतोऽभिधाय पुनः प्रकृतमधिक्रियते, यथा–हेतुकथामधिकृत्य सुप्तिङन्तपदलक्षणप्रपञ्चमर्थशास्त्रं वाऽभिधाय पुनर्हेतुवचनमित्येवमादि, 'काले'त्यादि 'कालदोषः' अतीतादिकालव्यत्ययः, यथा–रामो वनमनुप्रविशति वक्ष्यते कर्ण इत्येवमादि । 'यतिदोषः' यतिव्यत्ययः, यतिः–विच्छेदः तस्याकरणमस्थानकरणं वा यथा–स्रग्धरायास्त्रिसप्तकेष्वकरणमन्यत्र वा करणमित्येवमादि, 'छविदोषः' छविविहीनता, छविर्ह्यलङ्कारविशेषस्तेजस्विता, समयविरुद्धं यत् स्वसिद्धान्तविरुद्धं, यथा–सांख्यस्यासत्कारणे कार्यं, सद्वैशेषिकस्येत्येवमादि, वचनमात्रमहेतुकं, यथेष्टभूदेशलोकमध्याभिधानवत्, अर्थापत्तिदोषो यत्रार्थादनिष्टापत्तिर्यथेह ब्राह्मणो न हन्तव्य इति, अर्थादब्राह्मणघातापत्तिः, 'असमासदोषः' समासव्यत्ययः, यत्र वा समासविधौ सत्यसमासवचनं यथा–राज्ञः पुरुषोऽयमित्येवमादि, उपमादोषो–हीनाधिकोपमानुपमाभिधानं, यथा मेरुः सर्षपोपमः सर्षपो मेरूपमो, मेरुः समुद्रोपम इत्येवमादि, रूपकदोषः–स्वरूपावयवव्यत्ययो यथा–पर्वतरूपावयवानां पर्वतेऽनभिधानं समुद्रावयवानां चाभिधानमित्येवमादि, अनिर्देश्यदोषो यत्रोद्दिश्यपदानामेकवाक्यभावो न क्रियते, यथेह देवदत्तः स्थाल्यामोदनं पचतीति वक्तव्ये पचतिशब्दानभिधानं, पदार्थदोषो यत्र वस्तुपर्यायवाचिनः पदार्थस्यार्थान्तरपरिकल्पनमाश्रीयते, यथेह द्रव्यस्वरूपपर्यायवाचिनां सत्तादीनां द्रव्यादर्थान्तरपरिकल्पनमुलूकस्य, सन्धिदोषो विश्लिष्टसंहितत्वं व्यत्ययो वेति, एभिर्विमुक्तं द्वात्रिंशद्दोषरहितं लक्षणयुक्तं सूत्रं, तदिति वाक्यशेषः, द्वात्रिंशद्दोषरहितं यच्चेति वचनात्तच्छब्दनिर्देशो गम्यते ॥ तथाऽष्टाभिश्च गुणैरुपेतं तत्, लक्षण-

युक्तमिति वर्त्तते, ते चेमे गुणाः–'निद्दोस'मित्यादि, निर्दोषमुक्तवत् सारवद्-बहुपर्यायं गोशब्दवत् सामायिकाभिधानवद्वा हेतुयुक्तं उपपत्त्युपेतं अलङ्कृतं उपमादिभिः उपनीतं उपनयोपसंहृतं सोपचारं-अग्राम्याभिधानं मितं–वर्णादिनियतपरिमाणं मधुरं श्रवणहारीति श्लोकार्थः ॥१००१–३॥ तथा–'अप्पक्खरे'त्यादि, असंदिग्धं असंशयं न यथा सैन्धवाभिधानेऽश्वलवणपुटपुरुषाभिधानादिसंशयः 'अल्पाक्षरं सारवचोक्तं, अन्यपरिपाट्या चेदमित्यचोद्यं 'विश्वतोमुखं' अनेकमुखं, अनुसूत्रं अनुयोगचतुष्टयाभिधानात्, सारवत्तु–प्रतिमुखमनेकार्थाभिधायकमिति, अपुनरुक्तं, वैहिहकारादयोऽनर्थकाः पदच्छिद्रपूरणायैवोपादीयमानाः स्तोभका इत्युच्यते, स्तोभकः–क्षेपकस्तद्विरहादस्तोभकः अनवद्यं अगर्हमित्यादिलक्षणं इत्यल्पग्रन्थमहार्थमित्यादिग्रहणकगाथार्थः ॥१००४॥

सुत्तेऽणुगए सुद्धेत्ति निच्छिए तह कए पयच्छेए । सुत्तालावयनासे निक्खित्ते सुत्तफासो उ ॥१००५॥
एवं सुत्ताणुगमो सुत्तालावगओ य निक्खेवो । सुत्तप्फासियनिज्जुत्ती नया य वच्चंति समयं तु ॥१००६॥
सुत्तं पयं पयत्थो संभवओ विग्गहो वियारो य । दूसियसिद्धी नयमयविसेसओ नेयमणुसुत्तं ॥१००७॥
पयमत्थवायगं जोयगं च तं नामियाइ पंचविहं । कारग-समास-तद्धिय-निरुत्तवच्चोऽविय पयत्थो ॥१००८॥
परवोहहिओ वऽत्थो किरिया-कारगविहाणओ वच्चो । पज्जायवयणओऽविय तह भूयत्थाभिहाणेणं ॥१००९॥
पच्चक्खओऽहवा सोऽणुमाणओ लेसओ व सुत्तस्स । वच्चो व जहासंभवमागमओ हेउओ चेव ॥१०१०॥
पायं पयविच्छेओ समासविसओ तयत्थनियमत्थं । पयविग्गहोत्ति भण्णइ सुद्धपए सो न संभवइ ॥१०११॥
सुत्तगयमत्थविसयं व दूसणं चालणं मयं तस्स । सद्दत्थण्णायाओ परिहारो पच्चवत्थाणं ॥१०१२॥

एवमणुसुत्तमत्थं, सव्वनयमयाववयारपरिसुद्धं। भासेज्ज निरवसेसं, पुरिसंव पडुच्च जं जोग्गं ॥१०१३॥
होइ कयत्थो वोत्तुं, सपयच्छेयं सुयं सुयाणुगमो। सुत्तालावगनासो, नामाइन्नासविणिओगं ॥१०१४॥
सुत्तप्फासियनिज्जुत्तिनिओगो सेसओ पयत्थाई। पायं सोच्चिय नेगमनयाइमयगोयरो होइ ॥१०१५॥
पायं पयविच्छेओऽवि सुत्तफासोचसंहिओ जेण। कत्थइ तयत्थकारगकालाइगई तओ च्चेव ॥१०१६॥
अणुओगद्दाराणं परूवणं तप्पओयणं जं च। इय चेव परिसमाणियमव्वामोहत्थमत्थाणे ॥१०१७॥
अणुओगद्दाराणं परूवणं तप्पओयणं जं च। इय चेव परिसमाणियमव्वामोहत्थमत्थाणे ॥१०१८॥
दाइयदारविभागो, संखेवेणेह वित्थरेणावि। दाराणं विणिओगं, नाहिइ काउं जहाजोग्गं ॥१०१९॥
संपयमत्थाणुगमे, सत्थोवग्घायवित्थरं वोच्छं। कयमंगलोवयारो, सोऽतिमहत्थोत्तिकाऊणं ॥१०१९॥

'सुत्ते' इत्यादि, तदेवं सूत्रानुगमतः सूत्रे अनुगते उच्चरिते सति यथा 'करेमि भंते! सामाइय'मित्येवमादि, तथा 'शुद्धे इति' एवं विनिश्चिते, तथा सूत्रानुगमादेव पदच्छेदे कृते, यथा करोमि भदन्त! इत्येवमादि, तथा सूत्रालापकनिक्षेपात् सूत्रालापकन्यासे च निक्षिप्ते नामकरणमित्यादिना संभवतः, ततः किमित्यत आह—'सुत्तफासो' त्ति ततः पुनः सूत्रस्पर्शो व्यापार्यत इति ॥१००५॥ ततश्च—'एव' मित्यादि। एवं 'सूत्रानुगमः' अनुगमद्वितीयभेदः, तथा सूत्रालापककृतश्च निक्षेपः' निक्षेपतृतीयभेदः, तथा 'सूत्रस्पर्शनिर्युक्तिः' निर्युक्त्यनुगमतृतीयभेदः 'नयाश्च' मूलद्वारविहिता 'व्रजन्ति' गच्छन्ति 'समकं' युगपत्, प्रतिसूत्रमित्य-ध्याहारः ॥१००६॥ एते चैवं व्याख्यायमाने सति गच्छन्तीत्यतो व्याख्यालक्षणमाह—'सुत्त'मित्यादि। सूत्रमिति प्रथममुक्तलक्षणं सूत्रं पठनीयं, पुनः पदच्छेद इत्यादि द्वारगाथासूत्रं कण्ठ्यं, नवरमेवं ज्ञेयमनुसूत्रं व्याख्यानं, नयमतादिति। पदमधिकृत्याह—'पद'मि-

त्यादि । इहार्थस्य वाचकं पदं भवति द्योतकं च, तत्र वृक्षस्तिष्ठतीत्येवमादि वाचकं, प्रादयश्चादयश्च प्रायेण द्योतकं, एवं सामान्येन, न पुनर्विशेषतः, विशेषतः प्राह-तत्पुनर्नामिकादि पञ्चविधं, तत्राश्व इति नामिकं, खल्विति नैपातिकं, परीत्यौपसर्गिकं, धावतीत्याख्यातिकं, संयत इति मिश्रम् । पदार्थश्चतुर्विधस्तद्यथा-कारकवाच्यः कारकविषयो, [redacted] पचतीति पाचकः, समासविषयो यथा राज्ञः पुरुषो राजपुरुषः, तद्धितविषयो वसुदेवस्यापत्यं वासुदेवः, निरुक्तविषयो भ्रमति च रौति च भ्रमर इति गाथार्थः ॥१००७-८॥ 'पर'इत्यादि । अथवा परबोधहितः पदार्थस्त्रिविधो वाच्यः, तद्यथा-क्रियाकारकविषयो यथा-घट चेष्टायामिति, घटते असाविति घटः, तथा पर्यायवचनतोऽपि यथा घटः कुटः कुम्भः इति, तथा भूतार्थाभिधान श्च ऊर्ध्वकुण्डलौष्ठायतवृत्तग्रीवत्वाद् घट इति यथेति गाथार्थः ॥१००९॥ अत्रैव प्रकारान्तरमाह-'पच'इत्यादि । अथवाऽसौ पदार्थो वाच्यः सूत्रस्य कथं ?-'प्रत्यक्षतः' यथाश्रुतित एव, सम्यग्दर्शनादीनि मोक्षकारणं 'अहवाऽणुमाणतो सो वचो सुत्तस्स' अनुमानं-अर्थापत्तिः, ततश्च मिथ्यादर्शनादीनि तु न, 'लेसतो व' त्ति अथवा लेशतोऽसौ सूत्रस्य वाच्यः, किमुक्तं भवति ?-समस्तपदोपादानात्, न व्यस्तानीत्यर्थः, तथा-'वच्चो वे'त्यादि, अथवा यथासंभवं वाच्यस्तद्यथा-आगमतो भव्याभव्याभिधानादिवत्, हेतुतो न सर्वगतोऽयमात्मा. कर्तृत्वात् कुलालादिवत्, आह-मूर्तोऽपि स्यात्तत एव हेतोस्तद्वद्,उच्यते, इष्यत एव संसारीति गाथार्थः॥१०१०॥ 'पाय' मित्यादि । इह बाहुल्यतः 'पदविच्छेदः' पदविश्लेषः 'समासविषयः' समासाव्यभिचारी सदाऽनेकार्थो बहुव्रीहिविशेषणसमासादिप्रकारेण अतस्तदर्थनियमार्थः 'पदविग्रहो भण्यते' पदयोः पदानां वा समासः क्रियते, यथा राज्ञः पुरुषः राजपुरुषः श्वेतः पटोऽस्येति श्वेतपटः, स च शुद्धपदे न संभवत्येवेति गाथार्थः ॥१०११॥ 'सुत्त'इत्यादि ॥ 'सूत्रगतं' सूत्रेण न्यायेन 'अर्थगतं' (विषये) आर्थेन न्यायेन यच्छिष्यचोदकाभ्यां दूषणमारभ्यते तच्चा-

लनं मतं, तस्य 'शब्दार्थन्यायतः परिहारः प्रत्यवस्थानं' मतमिति, यथा करोमि भदन्त ! सामायिकमित्यत्र गुर्वामन्त्रणवचनो भदन्तशब्द इति, अत्रश्चोद्यते—गुरुविरहे तदभिधानमयुक्तं, अनर्थकत्वात्, न, आचार्याभावेऽपि स्थापनाचार्यक्रियोपस्थापनज्ञापनार्थत्वात् तद्, यथाऽर्हत्प्रतिमोपसेवनं, गुरुगुणज्ञानोपयोगाद्वा विज्ञातमात्राचार्यामन्त्रणवचनाद्वा आचार्यगुणनिबन्धनाद् विनयमूलधर्मोपदर्शनात् स्वातन्त्र्यप्रतिषेधार्थं चेति गाथार्थः ॥१०१२॥ उपसंजिहीर्षुराह—'एव'मित्यादि । एवं सूत्रं सूत्र प्रति सर्वनयमतावतारपरिशुद्धमर्थं भाषेत निरवशेषं योऽस्याईदृभिरुक्तः सत्यां शक्तौ, कुरूपं वा नयमतानभिज्ञं प्रतीत्य यथायोग्यं वस्तु तद्भिदध्यादिति गाथार्थः ॥१०१३॥ इह च—'होई'त्यादि 'सुत्ते'त्यादि 'सुबोधार्थम् ॥१०१४–१५, किन्त्वाद्यगाथावयवापवादमाह—'पाय' मित्यादि । 'प्रायः' बाहुल्यतः 'पदविच्छेदोऽवि' त्ति सूत्रानुगमोऽपीत्यर्थः 'सुत्तफासोवसंहिओ'त्ति सूत्रस्पर्शे अर्थप्रत्यायनफले उपसंहृतः—उपक्षिप्तो वर्तते, केन कारणेनेत्याह—'जेण कत्थई तओ च्चेव' त्ति येन क्वचित् देशे तत एव—पदविच्छेदात् 'तदत्थ' त्ति तस्य पदस्यार्थस्तदर्थस्तस्मिन् गतिः—परिच्छेदो भवति, तथा कारकगतिश्च, तथा कालगतिः, आदिशब्दः स्वभेदप्रख्यापकः, कालश्च वर्तमानो वृत्त एष्यंश्चेत्यनुयोगद्वारप्रघट्टकपरिसमाप्तिरिति गाथार्थः ॥१०१६॥ न तत्स्याद्—अस्थानमस्येह, अध्ययनपरिसमाप्तिविषयत्वादिति, तन्न, यतः—'अणु'इत्यादि । इह व्यवधानभयादेतत्प्ररूपणादि अस्थान एवोक्तं अव्यामोहार्थत्वाच्च, तथाहि—'दाइते'त्यादि स्पष्टा, तदेवं नन्दीअनुयोगद्वारप्रघट्टश्च शोधित इति गाथार्थः ॥१०१७–१८॥ ॥पेढबंधो समत्तो ॥ नमः श्रुतदेवतायै भगवत्यै ॥ अथ यथाविवक्षितमापूरयन्नाह भाष्यकारः—'संपद'मित्यादि, 'साम्प्रतं' अधुना 'अर्थानुगमे' अर्थानुगमद्वारे सामान्ये स्थितः शास्त्रस्याधिकृतस्योपोद्घातविस्तर इति समासस्तं 'वोच्छं' वक्ष्ये, किंविशिष्टः सन्नित्यत आह—'कृतमङ्गलोपचारः

एतदेवमित्यत आह–'दसे'त्यादि ॥ दशकालिकादिनिर्युक्तिआरम्भोऽयमिति, वक्ष्यति 'आवस्सयस्से' त्येवमादि, यतश्चोपरिष्टाद्प्युपोद्घातस परिसमाप्तौ भणितं–यदुत 'सेसेसुवी'त्यादि गाथार्थः ॥१०२६॥ अत्राप्याह–'सामाइय'इत्यादि ॥ सामायिकव्याख्याने कोऽमीषां भागो येनोच्यते 'दसगालियस्स तहे'त्येवमादि ?, उच्यते, किमिदमसकृज्झंक्षसे ? । 'ज'मित्यादि स्पष्टं, प्रायोग्रहणं दशकालिकस्य शय्यम्भवस्वामिनो निर्गतत्वात्, तथा चाह–'इहे'त्यादि॥ 'इहे'ति सामान्योपोद्घाते 'तेषां'आवश्यकादीनां 'तस्मिन्' उपोद्घाते 'गते' अतिक्रान्ते 'वीसुं वीसुं'पत्तेयं २'विसेसमेत्तायं' विशेषमात्रं यथाऽमुकादमुकं निर्गतमिति ग्रहीष्यति 'सुगं' सुखेन अप्रयासेन, तदपि लघु शीघ्रमेव, अतो लाघवाथमिह तद्ग्रहणं, लाघवार्थोऽयमधिकार इति गाथार्थः ॥१०२७-२८॥ तम्हा' इत्यादि ॥ तस्माद् येन कारणेन महार्थमिदं उपोद्घातारव्यं शास्त्रं सर्वानुयोगव्यापकत्वाद्, येन वेदं शास्त्रान्तरं तेन भूयोऽप्यस्य मङ्गलग्रहणं क्रियते ॥१०२९॥ तद्यथा–

तित्थयरे भगवंते अणुत्तरपरक्कमे अमियनाणी । तिण्णे सुगइगइ गए सिद्धिपहपएसए वंदे (नि. ८१)॥१०३०॥

तिज्जइ जं तेण तहिं तओ व तित्थं तयं च दव्वम्मि। सरियाईणं भागो निरवायो तम्मि य पसिद्धे ॥१०३१॥
तरिया तरणं तरियव्वयं च सिद्धाणि तारओ पुरिसो। बाहोडुवाइ तरणं तरणिज्जं निन्नयाईयं ॥१०३२॥
देहाइतारयं जं बज्झमलावणयणाइसत्तं च। णेगंताणच्चंतियफलं च तो दव्वतित्थं तं ॥१०३३॥
इह तारणाइफलयंति ण्हाणपाणावगाहणाईहिं । भवतारयंति केई, तं नो जीवोवघायाओ ॥१०३४॥
सूणंगं पिव तस्सुदूहलं व न य पुण्णकारणं ण्हाणं । न य जइजोगं तं मंडणं व कामंगभावाओ ॥१०३५॥

देहोवगारि वा तेण तित्थमिह दाहनासणाईहिं । महु-मज्ज-मंस-वेस्सादओऽवि तो तित्थमावन्नं ॥१०३६॥
भावे तित्थं संघो सुयविहियं तारओ तहिं साहू । नाणाइतियं तरणं तरियव्वं भवसमुद्दोऽयं ॥१०३७॥
जं नाणदंसणचरित्तभावओ तव्विवक्खभावाओ। भवभावओ य तारेइ तेण तं भावओ तित्थं ॥१०३८॥
तह कोह-लोह-कम्ममयदाहतण्हा-मलावणयणाइं। एगंतेणऽच्चंतं च कुणइ य सुद्धिं भवोघाओ॥१०३९॥
दाहोवसमाइसु वा जं तिसु थियमहव दंसणाईसु। तो तित्थं संघोच्चिय, उभयं व विसेसणविस्सेसं॥१०४०॥
कोहग्गिदाहसमणादओ व ते चेव जस्स तिण्णऽत्था। होइ तियत्थं तित्थं, तमत्थसद्दो फलत्थोऽयं ॥१०४१॥
अहवा सम्मद्दंसणनाणचरित्ताइं तिन्नि जस्सऽत्था । तं तित्थं पुव्वोइयमिह अत्थो वत्थुपज्जाओ ॥१०४२॥
इह सम्मं सद्धाणोवलद्धिकिरियासभावओ जेणं। तित्थमभिप्पेयफलं सम्मपरिच्छेयकिरियव्व ॥१०४३॥
णाभिप्पेयफलाइं तयंगवियलत्तओ कुतित्थाइं । वियलनयत्तणओऽविय, विफलाइं वियलकिरियव्व॥१०४४॥
अहव सुहोतारुत्तारणाइ दव्वे चउव्विहं तित्थं । एवं चिय भावम्मिवि, तत्थाइभयं सरक्खाणं ॥१०४५॥
तच्चणियाण वितियं, विसयसुहकुसत्थभावणाधणियं। तइयं च बोडियाणं, चरिमं जइणं सिवफलं तु ।१०४६।
नणु जं दुहावयारं दुक्खुत्तारं च तं दुरहिगम्मं। लोयम्मि पूइयं जं सुहावयारं सुहुत्तारं ॥१०४७॥
एवं तु दव्वतित्थं, भावे दुक्खं हियं लहइ जीवो। मिच्छत्तऽन्नाणाविरइविसयसुहभावणाणुगओ ॥१०४८॥
पडिवण्णो उण कम्माणुभावओ भावओ परमसुद्धं। किह मोच्छिइ जाणंतो परमहियं दुलहं च पुणो॥१०४९॥

अइकक्खडं च किरियं रोगी दुक्खं पवज्जए पढमं। पडिवन्नो रोगक्खयमिच्छंतो मुंचए दुक्खं ॥१०५०॥
इय कम्मवाहिगहिओ संजमकिरियं पवज्जए दुक्खं। पडिवन्नो कम्मक्खयमिच्छंतो मुंचए दुक्खं ॥१०५१॥

'तित्थगरे भगवंते'इत्यादि ॥ इह हि तीर्थकरणशीलास्तीर्थकरास्तान् वन्द इति क्रिया, तत्र तृ प्लवनतरयोरित्यस्य 'पातृतुदिवचिरिचिसिचिभ्यस्थगि'ति (उ० २-७) थक्प्रत्यये अनुबन्धलोपे च कृते 'ऋत इद्धातो'रिति (पा० ७-१-१००) इत्वे रपरत्वे 'हलि चे'ति (पा० ८-२-७७) दीर्घत्वे परगमने च तीर्थ इति स्थिते 'डुकृञ् करणे' इत्यस्य चरेष्टः (३-२-१६) इत्यस्मात् सूत्राद् टप्रत्ययाधिकारेऽनुवर्तमाने 'कृञो हेतुताच्छील्यानुलोम्येष्वि'ति (३-२-२०) टप्रत्ययेऽनुबन्धलोपे च कृते गुणे रपरत्वे परगमने च तीर्थकर इति स्यात्, शेषं भाष्य एव व्याख्यास्यामः, तच्चेदम्-'तिज्जती'त्यादि। तत्र तीर्थकरणात्तीर्थकराः, अथ तीर्थमिति कोऽर्थः? इत्यत आह-'तिज्जति जं तेण' त्ति तीर्यतेऽनेनेति तीर्थं, अयमात्मा परं पारं प्राप्यत इत्यर्थः, 'तहिं'त्ति तीर्यतेऽस्मिन्निति वा, 'तओ व'त्ति तीर्यते अस्मादिति वेति तीर्थं, 'तयं च'त्ति तच्च तीर्थं नामादि यावद् व्यतिरिक्तं 'दव्वम्मि' द्रव्येऽधिकृते, किमत आह-सरिदादीनां समो भूभागो निरपायश्च द्रव्यतीर्थं, तत्र [द्रव्य]तीर्थे सिद्धे सति कानि सिद्धानि सम्बन्धिशब्दतया प्रसिद्धानि भवन्तीत्यत आह-'तरिता'इत्यादि प्रतीतार्था ॥१०२०-२॥ किं पुनः कारणमिदं द्रव्यतीर्थमित्यत आह-'देहादी' त्यादि। यस्मादिदं देहादिमात्रं तारयति-परं कूलं नयति, न त्वात्मानं, मोक्षस्य परमार्थेन परकूलत्वेन व्यवस्थितत्वात्, बाह्यमलापनयनादिशक्तत्वाच्च, एतदुक्तं भवति-'तण्हाइयं वितण्हीकरेइ अवणेइ बाहिरं पंकं, नान्तरं' तस्य प्राणातिपातादिमहापातकपञ्चकजनितत्वात्, तस्य च तद्विनिवृत्तिमन्तरेणोत्पत्तिनिरोधाभावात्, प्रागुपात्तस्य च विशिष्टक्रियासव्यपेक्षाध्यवसायजन्यस्य तत्प्रत्यनीकक्रियासहगताध्यवसायतः क्षयोपपत्तेः, अलं चर्चयेति। तथा नैकान्तिकफलत्वाच्च, तथा

हि–अनेन कदाचित्तीर्यते कदाचिच्च म्रियत इति, तीर्णमपि च पुनस्तीर्यत इति प्रसिद्धं, 'तो' इति ततो द्रव्यतीर्थं तत्, स्वयमपिच द्रव्यत्वादिति गाथार्थः ॥१०३३॥ एतदेव केनचिद्विशेषेण भिन्दत् भावयन्नाह–'इहे'त्यादि । इह केचिदुदकसूकराः प्रलपन्ति–'ण्हाणपाणावगाहणादीहिं विधीए सेविज्जंतं उदयं भवाओऽवि तारेइ' कुतः ? इत्याह–'तारगादिफलदं'ति शरीरसंतारणादिफलं दृष्टमेतत्, दृष्टेन परोक्षानुमानादिति भावना, तदेतत् न, कुतः ? इत्याह–जीवोपघातसद्भावादिति गाथार्थः ॥१०३४॥ 'सूण'मित्यादि । अयमिह पौर्वापर्येण प्रयोगः–स्नानं पुण्याय न भवति, जीवोपघातनान्तरीयकत्वात्, जालवदुदूखलवद्वा, न च दृष्टमात्रेण परोक्षसिद्धिर्नियामकाभावात्, प्रत्यक्षसिद्धप्राण्युपमर्दबाधितत्वादित्येवमादि स्वधियोत्प्रेक्ष्य असकृद्वक्तव्यं, दलत्वात्, अथवा किं बहुनोक्तेन ?, 'ण चे'त्यादि गाहापच्छद्धं स्पष्टं, नवरं व्यतिरेकेण ज्ञानम् । 'देहो' इत्यादि । अथ चेद्दाहनाशनादिभिर्देहोपकारीति तीर्थं स्यात् उत्तरं पश्चार्द्धेनाह–मद्यादयोऽपि तीर्थं, देहोपकारित्वाविशेषादिति गाथार्थः ॥१०३५–३६॥ द्वारम् । 'भावे'त्यादि । भावे–भावविषयं तीर्थं, कः ? इत्यत आह–'संघः' साध्वादिसमुदायो गुणसंघातत्वात्, किंविशिष्टमत आह–श्रुतविहितं, उक्तञ्च–'तित्थं भंते ! तित्थं ?, तित्थकरे तित्थं ?, गोयमा ! अरहा ताव (नियमा) तित्थंकरे, तित्थं पुण चाउव्वन्नो समणसंघो" तत्र संघे तद्विशेषः सूरिसाधुः, ज्ञानादित्रयं तु तरणं, तरणीयं भवोदन्वानिति । इह च तीर्थादीनां परस्परतोऽन्यताऽनन्यता च विवक्षातोऽवसेया, तत्र सम्यग्दर्शनादिपरिणामानन्यत्वात् संघस्तीर्थं, तारणात्तदन्तर्भावित्वात्तद्विशेष एव तरिता (तारयिता) साधुः, स्वातन्त्र्येण सम्यग्दर्शनाद्यनुष्ठानात्, तस्य च करणभावापन्नस्य साधकतमत्वेन करणत्वात् तरणत्वं, तरणीयं आत्मन एवौदयिकादिसंसारपरिणामस्तत्परित्यागादिति गाथार्थः ॥१०३७॥ किमित्ययं भावः ? इत्याह–'ज' मित्यादि । 'यस्मात्' ज्ञानादिस्वाभाव्याद्धेतोः तद्विपक्षात्–मिथ्यात्वादिलक्षणात्

'तारयति' उत्तारयति, तथा भवसत्त्वायाश्च, अतस्तद् भावतीर्थमिति, उक्तञ्च—"रागाद्यम्भाः प्रमादव्यसनशतचलद्दीर्घकल्लोलहेलः, क्रोधेर्ष्याबाडवाग्निर्मृतिजननमहानक्रचक्रौघरौद्रः। तृष्णापातालकुम्भो भवजलधिरयं तीर्यते येन सद्यस्तद् ज्ञानादिस्वभावं कथितमिह सुरेन्द्रार्चितैर्भावतीर्थं ॥१॥ इति गाथार्थः ॥१०३८॥ 'तहे' त्यादि। 'तथे' त्युपपत्त्यन्तराकर्षणार्थः, क्रोधश्च लोभश्च कर्म च क्रोधलोभकर्माणि तन्मया दाहतृष्णामलाः क्रोधलोभकर्मदाहतृष्णामलाः, क्रोधात्मको दाहः परितापरूपत्वात्, लोभात्मिका तृट् आशंसारूपत्वात्, कर्मात्मको मलो मलिनस्वभावत्वात्, तेषामपनयनानीति समासः, तानि एकान्तेन—नियमेन अत्यंतं च—सर्वात्मना करोति यतः शुद्धिं च भवौघात् 'तेण तं भावओ तित्थं' ति गाथार्थः ॥१०३९॥ त्रिषु स्थितत्वात्त्रिस्थमिति, आह च—'दाहे' त्यादि। "दाहोवसमे तण्हाएँ छेयणे मलपवाहणे चेव। जं तिसु वत्तइ तित्थं, भावत्थो वन्निओ चेव॥१॥" आव० १०७७। अहवा दंसणादीसु तिसु जं ठियं 'तो' ततः त्रिस्थं भण्यते, पुनश्च तित्थं स्यात्, तत्तु संघः एवेति, उभयं वा त्रिस्थसंघलक्षणं विशेषणविशेष्यं स्यात्, तद्यथा—कः संघः? इति प्रश्ने त्रिस्थविशेषणविशिष्टो य इत्युत्तरं, कः त्रिस्थ इति च प्रश्ने संघत्वविशेषणविशिष्टो य इत्युत्तरमिति गाथार्थः ॥१०४०॥ त्र्यर्थत्वास्त्रिफलत्वाद्वा तित्थमित्याह—कोह(ग्गी)तीत्यादि गतार्था। त्रिपर्यायत्वाद्वा तित्थमित्याह—'अहवे' त्यादि गतार्था। प्रमाणमाह—'इहे' त्यादि। इह जैनमेव तीर्थमभिप्रेतेनार्थेनार्थवत्, सम्यक्श्रद्धानोपलब्धिक्रियासद्भावात्, सम्यक्परिच्छेदक्रियावद्, यथाहि—नैपुण्यवतो वैद्यस्यासाधारणश्रद्धापरिज्ञानक्रियाभिश्चिकित्सा अभिप्रेतार्था—अर्थवती, एवमिदमपीति, वैधर्म्येण कूटवैद्य इति गाथार्थः ॥१०४१-४३॥ तथाहि—'ण' इत्यादि। न कुशासनानि क्षायोपशमिकत्वे सत्यभिप्रेतफलानीति प्रतिज्ञा, ज्ञानादिविकलत्वाद्विकलक्रियावत्, मधानैहिकविकलक्रियावत्, तथा विकलनयत्वादपि च-एकनयान्तराधिष्ठितत्वादपि च विकलानि तानिएकोप-

यरहितविवक्षितद्रव्यसंघातवदिति गाथार्थः॥१०४४॥ एवं तावद्द्रव्यभावतीर्थद्वन्द्वं चर्चितम्।'अइच सुद्दोयार'इत्यादि॥ सुहोयारं सुहु-त्तारं॥ 'तच' इत्यादि सुगमम्॥ एवमुक्ते सत्याह-'णणु' इत्यादि सुगमा, नवरं तस्मादाद्यभङ्गो ज्यायान् नचरम इति, लोकप्रसिद्धिवा-धितत्वाद्, उच्यते-'पच'मित्यादि। एवं पूजितं भवति द्रव्यतीर्थमेव, प्रथमभङ्गव्यवस्थितत्वात्, भावे तु भावमङ्गीकृत्य दुःखं कथञ्चि-द्धितं संसारसमुद्रतरकाण्डं 'लभते' प्राप्नोति 'जीवः' प्राणी, किं कारणमित्याह-मिथ्यात्वानुगतत्वाद्, उक्तश्च-"जह जरियस्स न रुचइ, मक्करपित्तवसेण। तह जिणवयणु न रुचइं, जीवहु कम्मवसेण॥१॥" तथा अज्ञानानुगतत्वाद्, उक्तश्च-"विवरीयदिट्ठिपसरा चंपक-फुल्लंति मन्नि मन्नंता। अग्गीं कीडपयंगा, पडंति अन्नाणदोसेण॥१॥" तथा अविरत्यनुगतत्वाद्, उक्तश्च-"पावट्ठाणेहिंतो अप्पडिविरओ निरंकुसो जीवो। णस्सइ हियाउ करिणीविमोहिओ वणगइंदो व्व॥१॥" विषयसुखभावनानुगतत्वाच्च-आलजालचिन्ताव्यामूढमनस्त्वाचेति गाथार्थः॥१०४५-४८॥ अभिलषितमर्थं प्रतिपादयन्नाह-'पडी'त्यादि॥ 'पडिवन्नो पुण मिच्छत्तादीणि जिणिउं' अत एवाह-'कम्मा-णुभावओ' कथं?-'भावतः परमार्थेन, जिणवयणंति सामर्थ्याद्गम्यते, किंविशिष्टमित्याह-'परमसुद्धं' अलियादिदोसरहियं, एतदुक्तं भवति-भावतित्थे उअरिय पव्वइओत्ति यदुक्तं भवति 'किह मोच्छिई पुणो' कहं उत्तरिही?, कहं उण्णिक्खमिहित्ति भणियं होइ, जाणंतो परमभइदुलहं पव्वज्जं। लद्धं जं सामण्णं, सचहु भवेहिं नेइ निव्वाणं। तं इह जावज्जीवं मण को जेणं न निव्वहइ?॥१॥" अविय-"इह माणुसजम्मं चिय, दुलहं जीवस्स होइ संसारे। किं पुण पंचमहव्वयगुणगणमगहारि सामण्णं॥१॥" इति गाथार्थः॥१०४९॥ दृष्टा-न्तान्तरमाह-'अति'इत्यादि॥ 'इये'त्यादि॥ सुचर्चं, तस्मात्सुष्ठु संभवति चरमभङ्ग इति॥१०५०-५१॥ एवं तीर्थं निरूप्य तीर्थकरमाह-

अणुलोमहेउतरसीलयाय जे भावतित्थमेयं तु। कुव्वंति पगासंति य, ते तित्थयरा हियत्थकरा॥१०५२॥

ईसरियरूवसिरिजसधम्मपयत्ता मया भगाभिक्खा। ते तेसिमसामण्णा संति जओ तेण भगवंते ॥१०५३॥
विरियं पक्कमो इह परेऽरयो वा जओ तदक्कमणं। सोऽणुत्तरो वरो सिं अणुत्तरपरक्कमा तो ते ॥१०५४॥
अमियमणंतं नाणं तं तेसिं अमियणाणिणो तो ते। तं जेण नेयमाणं, तं चाणंतं जओ नेयं ॥१०५५॥
तिण्णा समइक्कंता भवण्णवं कं गइं गया तरिउं ?। सुगईण गइं पत्ता, सुगइगइगया तओ होंति ॥१०५६॥
सच्चिय सुगईण गई सिद्धी सिद्धाण जो पहो तीसे। तद्देसया पहाणा सिद्धिपहपएसया तो ते ॥१०५७॥
सिद्धिपहो पुण सम्मत्तनाणचरणाइं वक्खमाणाइं। भवहेउविवक्खाओ तिठाणपडिकूलकिरियव्व ॥१०५८॥
वंदेऽभिवादयेऽभित्थुणामि वा ते तिलोगमंगल्ले। सामण्णवंदणमिणं तित्थयरत्ताविसिट्ठाणं ॥१०५९॥
पत्तेयवंदणमिओ संपइ तित्थाहिवस्स वीरस्स। सुयनाणत्थप्पभवो, सविसेसेणोवगारित्ति ॥१०६०॥
तुल्लगुणाणं परिसं, नमिऊण जहेव साभियं नमइ। तह तुल्लगुणेऽवि जिणे नमिउं तित्थाहिवं नमइ ॥१०६१॥

'अणुलोमे'त्यादि ॥ 'ये' इत्यनिर्दिष्टस्वरूपाः परमपुरुषविशेषाः 'तुः' पुनःशब्दार्थो, ये पुनर्भावतीर्थमिदं-श्रमणसङ्घलक्षणं 'कुर्वन्ति' निष्पादयन्ति तथा 'प्रकाशयन्ति' केवलज्ञानज्योत्स्नयोज्ज्वालयन्ति च, कथं कुर्वन्तीत्यत आह-अनुलोमहेतुताच्छील्यतया तत्र 'कृञो हेतुताच्छील्यानुलोम्येष्विति (पा. ३-२-२०) करोतेर्हेतौ ताच्छील्ये आनुलोम्ये(च)टप्रत्ययो भवति, तत्र हेतौ सद्धर्मतीर्थक्रियाहेतवः यद्वद् यशस्करी विद्येति, ताच्छील्ये कृतिनोऽपि सन्तस्तीर्थकरनामकर्मोदयाद् भव्यसत्त्वानुकम्पापरतया सद्धर्मतीर्थदेशनाकरणशीलाः कुलकरनृपवत्, आनुलोम्ये स्त्रीपुरुषबालवृद्धस्थविरजिनकल्पिकानामुत्सर्गापवादविधानानुरूप्यतः सद्धर्मतीर्थानुलोमका-

रिणो, वचनकरवत्, इत्थंभूतास्तीर्थकरा उच्यन्ते, अत एवाह–'हितार्थकराः' हितमर्थं कुर्वन्ति भव्यसत्त्वानामिति हितार्थकराः, निर्वाणकरा इत्युक्तं भवति, तदेवं तीर्थकर इति पदं व्याख्यातं। अथवा 'पङ्कदाहपिपासाना' मित्येवमादि, 'पङ्कस्तावत्पाप'मित्येवमादि, तीर्थकरः पुनः 'यः कालत्रयवर्त्तिभि'रित्येवमादीति गाथार्थः॥१०५२॥ 'भगवंते'त्ति, अथ केऽमीषां मता भगाभिख्याः? इत्यत आह–'ईसरिये'त्यादि॥ तत्र त्रिविंशातिशेषमयमैश्वर्यं १ निरुपमा रूपसम्पत् २ श्रीः–तपस्तेजोविभूतिः ३ यशः अचिन्त्यगुणाविर्भूतिः भुवनव्यापि ४ धर्मः उत्तमक्षमादिः, अशेषचारित्रमोहनीयमलापगमादक्षत इत्यर्थः ५ प्रयतनं प्रयत्नः–अप्रमादः ६, त एते भगसञ्ज्ञाः, शेषं स्पष्टम्॥१०५३॥ 'विरिय'मित्यादि॥ अशेषवीर्यान्तरायप्रक्षयात्पराक्रमो वीर्यं, शेषं स्पष्टम्॥ अमितेत्यादि स्पष्टा, बहुव्रीहिः॥ 'तिण्णे'त्यादि सुगमा, नवरं तरन्ति स्म–तीर्णाः॥ 'सचिये'त्यादि॥ तस्या एव सुगतीनां गतेः सिद्धेः पन्थाः २ प्रधानाः प्रगताः प्रशस्ता आदौ वा देशकाः प्रदेशकाः सिद्धिपथस्य प्रदेशकाः सिद्धिपथप्रदेशकास्तान्। 'सिद्धि'त्यादि स्पष्टा॥१०५४-५८॥ 'वंदे' इत्यादि॥ 'वदि अभिवादनस्तुत्योः' इति वन्दे–अभिवादयेऽभिष्टुवे वाऽहमित्युक्तं भवति, सामान्यवन्दनमिदं मङ्गलार्थं, तीर्थकरता(द)विशिष्टानामृषभादीनामिति मूलगाथार्थः॥१०५९॥ उत्तरगाथासम्बन्धमाह—'पत्तेये'त्यादि, 'तुल्ले'त्यादि, सुखोन्नेयम्॥१०६०-१०६१॥

**वंदामि महाभागं महामुणिं महायसं महावीरं। अमरनररायमहियं तित्थयरमिमस्स तित्थस्स (नि. ८२)**

**भागोऽचिंता सत्ती स महाभागो महप्पभावोत्ति। स महामुणी महंतं जं मुणइ मुणिप्पहाणो वा॥१०६३॥**

**तिहुयणविक्खायजसो महाजसो नामओ महावीरो। विक्कंतो व कसायाइसत्तुसेनप्पराजयओ॥१०६४॥**

ईरेइ विसेसेण व खवेइ कम्माइं गमयइ सिवं वा । गच्छइ य तेण वीरो स महं वीरो महावीरो ॥१०६५॥
अमरनररायमहियंति पूइयं तेहिं किंसुय सेसेहिं ॥ संपइ तित्थस्स पहू मंगल्लमहोवगारिं च ॥१०६६॥

एक्कारसऽवि गणहरे पवायए पवयणस्स वंदामि । सव्वं गणहरवंसं वायगवंसं पवयणं च ॥१०६७॥[नि.८३]

पुज्जो जहऽत्थवत्ता सुयवत्तारो तहा गणहराविं । पुज्जा पवायगा पवयणस्स ते बारसंगस्स ॥१०६८॥
जह वा रायाऽऽणत्तं रायनिउत्तपणओ सुहं लहइ । तह जिणवरिंदविहियं गणहरपणओ सुहं लहइ ॥१०६९॥
जह मूलसुयप्पभवा पुज्जा जिणगणहरा तहा जेहिं । तदुभयमाणीयमिदं तेसिं वंसो किह न पुज्जो ? ॥१०७०॥
जिणगणहरुग्गयस्सवि सुयस्स को गहण-धरण-दाणाइं । कुणमाणो जइ गणहरवायगवंसो न होज्जाहि?॥१०७१॥
सीसहिया वत्तारो गणाहिवा गणहरा तयत्थस्स । सुत्तस्सोवज्झाया वंसो तेसिं परंपरओ ॥१०७२॥
पगयं पहाणवयणं पवयणं बारसंगमिह तस्स । जइ वत्तारो पुज्जा तंपि विसेसेण तो पुज्जं ॥१०७३॥

ते वंदिऊण सिरसा अत्थपुहत्तस्स तेहिं कहियस्स । सुयनाणस्स भगवओ निज्जुत्तिं कित्तइस्सामि [नि. ८४]

ते तित्थयराईएऽभिवंदिउं सुकयमंगलायारो । निविग्घमओ वोच्छं, पगयमुवग्घायनिज्जुत्तिं ॥१०७५॥
अत्थो सुयस्स विसओ तत्तो भिन्नं सुयं पुहुत्तंति । उभयभिदं सुयनाणं नियोजणं तेसि निज्जुत्ती ॥१०७६॥
अत्थस्स य पिहुभावो पुहुत्तमत्थस्स वित्थरत्तंति । इह सुयविसेसणं चिय अत्थपुहुत्तं व से सण्णा ॥१०७७॥

अत्थाओ व पुहुत्तं जस्स तओ वा पुहुत्तओ जस्स । जं वा अत्थेण पिहुं अत्थपुहुत्तंति तब्भावो ॥१०७८॥

'वन्दामी'त्यादि सभाष्या गाथाः सुखोन्नेया इति, नवरं 'भागः' अचिन्त्या शक्तिः, अथवा 'भज सेवाया'मिति भजनं भागो, भक्तिरित्यर्थः, महान् भागोऽस्येति महाभागः-महातिशेषभजनम्, अथवा महद्भिः-इन्द्रादिभिर्भागो-भजनं सेवेति, 'मन ज्ञाने' इति मन्यतेऽसाविस्येरमादि, वन्दे वन्दामीति च प्राकृते सर्वत्रोभयपदोपदर्शनार्थमिति ॥१०६२-६६॥ अथ वक्तुर्मङ्गलार्थं वन्दनमभिधायाधुना सूत्रकर्तृप्रभृतीनामप्याह-'एक्कारसऽवी'त्यादि ॥ एकादशेति संख्या, 'अपिः' समुच्चये, अनुत्तरज्ञानदर्शनादिधर्मगणं धारयन्तीति ते गणधरास्तान्, प्रकर्षेण प्रधाना आदौ वा वाचकाः प्रवाचकास्तान्, कस्य ?-'प्रवचनस्य' आगमस्य, किं ?, वन्दामि, एवं तावन्मूलगणधरवन्दनं, तथा 'सर्वं' निरवशेषा गणधरा-आचार्यास्तेषां प्रवाहो वंशस्तं, तथा वाचकाः-उपाध्यायास्तेषां वंशस्तं, तथा 'प्रवचनं च' आगमं च वंदामीति सम्बन्धः, तत्रैतत्स्याद्-वंशद्वयस्य प्रवचनस्य च कथं वन्द्यतेति ?, उच्यते, यथा अर्थसूत्रप्रणेतारस्तीर्थकरगणधरा वन्द्याः एवं यैरिदमर्थसूत्ररूपं प्रवचनमानीतं तद्वंशोऽप्यानयनद्वारेणोपकारित्वाद्वन्द्य एवेति, प्रवचनं तु साक्षादुद्धन्यैवोपकारीति गाथार्थः ॥१०६७॥ 'पुज्जो' इत्यादि भाष्यगाथाः षडेतदनुसारेणानुसर्त्तव्याः ॥१०६८-७३॥ प्रकृतमुपदर्शयन्नाह-'ते' इत्यादि ॥ 'ते तित्थे'त्यादि ॥ ते तित्थगरादीएऽभिवंदिउं सिरसा, सुकृतमङ्गलोपचार इत्यर्थः, किमत आह-प्रकृतामुपोद्घातनिर्युक्तिं वक्ष्ये, कस्येत्यत आह-श्रुतज्ञानस्य भगवतः, स्वरूपं चैतत्, किंविशिष्टस्येत्यत आह-तैः-तीर्थकरादिभिः कथितस्य, पुनरपि किंविशिष्टस्येत्यत आह-'अत्थपुहुत्तस्स'त्ति सूत्रार्थोभयरूपस्य, अर्थाद्वा पृथग्भूतस्येत्येवमादीति गाथार्थः ॥१०७४-७५॥ सांप्रतं-'अत्थपुहुत्तस्स निज्जुत्तिं' इत्येतद् व्याचिख्यासुराह-'अत्थो'इत्यादि ॥ अर्थ्यत इत्यर्थः, असावर्थः श्रुतस्य विषयो, वाच्यत्वात्तस्य, करत्येत आह-'श्रुतस्य' श्रुतज्ञान-

स्य वाचकत्वात्, ततश्चानेन 'अत्थ' त्ति व्याख्यातं, तच्च श्रुतं ततो भिन्नं, ततोऽर्थादर्थान्तरं सत्किमित्यत आह- 'पुहुत्त' त्ति पृथक्त्वमाख्यायते, विषयविषयिणोर्भेदात्, ततश्चार्थश्च पृथक्त्वं चेति द्वन्द्वः, इह चोभयमिदं 'सुयनाणं' न्ति उभयमिदमर्थपृथक्त्वलक्षणं श्रुतज्ञानं भगवदभिधीयते, निर्युक्तिस्तु का अभिधीयते ? इत्याह- 'नियोजनं' निश्चितं सम्बन्धनं तयोर्विषयविषयिणोर्निर्युक्तिरभिधीयत इति गाथार्थः ||१०७६|| 'अत्थस्स वे' त्यादि || 'वा' इत्यथवा 'पृथु विस्तार' इति, अर्थो हि प्राङ्निरूपितशब्दार्थः तस्य 'पृथुभावः' विस्तरभावः पृथुत्वमुच्यते, अत एवाह- 'अत्थस्स वित्थरत्तं' ति, ततश्च 'इह' व्याख्याने 'सुयविसेसणं चिय' त्ति श्रुतस्यैव भगवतो विशेष्यस्येदमर्थविस्तरत्वं विशेषणं वर्तते, तद्यथा-घटस्य लक्षणं कीर्त्तयिष्यामि, किंविशिष्टस्य ?-रक्तस्स, तत्र रक्तस्येति वक्तव्ये रक्तत्वस्येति जातं, एवमत्रापि श्रुतज्ञानस्य निर्युक्तिं वक्ष्ये, किंविशिष्टस्य ?- 'अत्थपुहुत्तस्स' त्ति तत्रार्थपृथोरिति वक्तव्येऽर्थपृथुत्वस्येत्युच्यते, अर्थविस्तरस्येति जायते स्थापना लक्षण घट रक्त / निर्युक्ति श्रुत अर्थ आह-एवमत्र घट इव सामानाधिकरण्यं न प्राप्नोति, भावप्रत्ययश्रवणाद्, उच्यते, न दोषः, प्राकृतशैल्या भावप्रत्ययश्रवणस्यानादृतत्वाद् बहुव्रीहिर्वा, अर्थपृथोर्भावो यस्मिंस्तदर्थपृथु श्रुतं तद्भावोऽर्थपृथुत्वं तस्यार्थपृथुत्वस्य श्रुतज्ञानस्य निर्युक्तिं वक्ष्य इति, 'अत्थपुहुत्तं व से सण्ण' त्ति 'से' तस्यार्थपृथक्त्वं वा सञ्ज्ञा वर्तते, ततश्चार्थपृथक्त्वसञ्ज्ञितस्य-अर्थपृथक्त्वनाम्नः श्रुतस्य निर्युक्तिं वक्ष्य इति गाथार्थः ||१०७७|| 'अत्थाओ वे' त्यादि || अर्थाद्वा सकाशात् 'पृथक्त्वं' नानात्वं यस्य श्रुतस्य तदर्थपृथक्त्वं तस्येति, 'तओ वा' असौ वाऽर्थः 'पुहुत्ततो' भेदेन वर्त्तते यस्य तत्तथा तस्येति, 'जं वे' ति यद्वा, किमत आह-अर्थेन पृथु अर्थपृथु तद्भावोऽर्थपृथत्वं तस्य निर्युक्तिं, किं?, कीर्त्तयिष्यामीति गाथार्थः ||१०७८|| किमविशेषेण ?, न, तद्विशेषाणामिति, आह च-

आवस्सयस्स दसकालियस्स तह उत्तरज्झमायारे। सुयगडे निज्जुत्तिं वोच्छामि तहा दसाणं च (नि. ८५)
कप्पस्स य निज्जुत्तिं ववहारस्सेव परमनिउणस्स। सूरियपण्णत्तीए वोच्छं इसिभासियाणं च (नि. ८५)
एएसिं निज्जुत्तिं वोच्छामि अहं जिणोवएसेण। आहरणहेउकारणपयनिवहमिणं समासेणं (नि. ८७)

हेऊ अणुगमवइरेगलक्खणो सज्झवत्थुपज्जाओ। आहरणं दिट्ठंतो कारणमुववत्तिमेत्तं तु ॥१०८२॥
एवं पयाण निवहो हेऊदाहरणकारणत्थाणं। अहवा पयनिवहोच्चिय कारणमाहरणहेऊणं ॥१०८३॥
इय सव्वसंगहाईए जेणमावासयं अहिकयं च। सामाइयं च तस्सवि तो पढमं तस्स वोच्छामि ॥१०८४॥

'आवस्सग'त्यादि। 'कप्पस्स ये'त्यादि। 'एएसिं'मित्यादि पाठसिद्धम् ॥ तृतीयगाथापश्चार्द्धमाह—'हेऊ'इत्यादि ॥ हिनोति-गमयति जिज्ञासितधर्मविशिष्टानर्थानिति हेतुः, स चानुगमलक्षणः, सकलसपक्षव्यापित्वात्, व्यतिरेकलक्षणश्चैकान्तेन विपक्षव्यावृत्तत्वात्, किं द्विरूप एव ?, नेत्याह—साध्यवस्तुपर्यायः, मिसाधयिषितधर्मविशिष्टधर्मिधर्म इत्यर्थः, आहरणं तु दृष्टान्तः, साधर्म्येतरो द्वेधा, क्रमेण चैसौ भाष्यकृतोक्तौ, प्रयोगक्रमस्याङ्गीकृतत्वात्, सूत्रकृता त्वादावाहरणमभ्यधायि तथाविधन्यायोपदर्शनार्थं, तथाहि—अस्त्यसावपि न्यायो यत्र हेतुमनभिधायापि दृष्टान्त उच्यते, तद्यथा-गतिलक्षणो धर्मास्तिकायो मत्स्यजलवदित्येवमादि, क्वचिच्च हेतुरेव केवलोऽभिधीयते, यथाऽस्ति धर्मास्तिकायः जीवपुद्गलयोर्गत्यन्यथाऽनुपपत्तेः, 'कारणमुपपत्तिमात्रं' यथा निरुपमसुखः सिद्धः, ज्ञानानाबाधाप्रकर्षात्, उपपत्तिमात्रताऽस्याऽऽविद्वदङ्गनादिलोकप्रसिद्धोपमानासंभवात्, तदाहरणार्थाभिधायकं पदमाहरणपदं, एवं हेत्वर्थपदं कार-

पदं, पुनश्च द्वन्द्वस्तेषां निवहः-सङ्घातो यस्यां सा तथोच्यते तामिति गाथार्थः ॥१०७९-८२॥ अमुमेवार्थमाह-'एव'मित्यादि ॥ एवं पदानां बहूनां, किमर्थानामित्याह-(हेतूदाहरणकारणार्थानां) 'निवहः' सङ्घातो यस्यां सा हेतूदाहरणकारणपदनिवहा तां वक्ष्ये, अथवा आहरणं च हेतुश्च तौ तयोः कारणं आहरणहेतुकारणं २ चासौ पदनिवहश्च २ स विद्यते यस्यां सा तथोच्यत इति गाथार्थः ॥१०८३॥ एवं तावदुपन्यस्तगाथात्रयमाख्याय यथोद्देशं निर्देश इति न्यायमाश्रित्याभिप्रेतार्थविवेचनार्थमुत्तरगाथा स्वन्धमाह-'इय'इत्यादि ॥ अथवा आह-अशक्यैषा प्रतिज्ञा, युगपद्वक्तुमशक्यत्वाद्, अत्रोच्यते-'इय'इत्यादि सुगमा, नवरं तो तस्स पढमं वोच्छामि उवग्घायनिज्जुत्ति' न्ति ॥१०८४॥

**सामाइयनिज्जुत्तिं वोच्छं उवएसियं गुरुजणेणं । आयरियपरंपरएण आगयं आणुपुव्वीए ॥१०८५॥ नि.८८॥**

जिणगणहरगुरुदेसियमायरियपरंपरागयं तत्तो । आयं च परंपरया पच्छा सयगुरुजणुद्दिट्ठं ॥१०८६॥

उज्जेणीओ नीया जहेट्टगाओ पुरा परंपरया । पुरिसेहिं कोसंबिं तहाऽऽगएयं परंपरया ॥१०८७॥

दव्वस्स परंपरओ जुत्तो भावसुयसंकमो कत्तो ? । सद्दोऽवि नागओऽयं स एव जिणगणहरुच्चरिओ ॥१०८८॥

आगयमिवागयं तं तत्तो जत्तो समुब्भवो जस्स । स परंपरओ य जओ तमागयमिओ तदुवयारो ॥१०८९॥

'सामाइए'त्यादि ॥ सामायिकं-वक्ष्यमाणशब्दार्थं तस्य निर्युक्तिः वक्ष्यमाणशब्दार्थैव तस्य निर्युक्तिस्तां 'वोच्छं' वक्ष्ये उपसामीप्येन देशितां 'गुरुजनेन' तीर्थकरावल्यादिलक्षणेन, पुनश्चोपदेशकालादारभ्याचार्यपारंपर्येणागतां, स च परंपरको द्वेधा-द्रव्यतो भावतश्च, दव्व परंपरओ इट्टाणं, भावओ एसचिय उवग्घायनिज्जुत्ती, कथमायातामित्याह-'आनुपूर्व्या' परिपाट्या,तथाहि-'जंबूओ पभ-

वेणं तत्तो सेज्जंभवेग आणीया' इत्येवमादि, अथवाऽऽचार्यपारंपर्येणायातां पुनश्च स्वगुरुभिराख्यातामिति ॥ दव्वपरंपरए उदाहरणं—

सागेयं नगरं, जियसत्तू राया, सयलरायंगपडिपुण्णो, तस्स पुरत्थिमे दिसीभाए आराममज्झे आययणं, तत्थ सुरप्पिओ नाम जक्खो वसइ, सन्निहियपाडिहेरत्तणेण मंडलप्पसिद्धो, सो य वरिसे वरिसे चित्तिजइ, महो य से कीरइ, चित्तिओ य चित्तयरं मारेइ, अह न चित्तिज्जइ जणं मारेइ, ततो राया अप्पवहुयं आलोएउं चित्तावेइ, चित्तयरा य पलायंता रन्ना नाया, संकलियापाडहुयाय काउं रुद्धा, णामाणि य लिहिउं कलसे पक्खित्ताणि, ततो वरिसे २ जस्स नामं उच्छलइ सो चित्तेउं मरइ, तत्थ य एगा थेरी, तीसे पुत्तो सोमडओ नाम सयलचित्तसेणिओऽन्नरिउत्ति, वच्चइ कालो, अन्नया य कोसंवीओ दारओ चित्ताण (विन्नाण) निमित्तं सोमदेवो नाम आगओ, तस्स गिहे ओयरिओ, सिक्खइ, वच्चइ कालो, अन्नया य सा थेरी वगरक्खस (वारऽक्खम) वारयागमणसंकाए रुयंती तेण भणिया—किं अम्मो! रुयसि?, सा भणइ—पुत्त! नियवावारं कुरु, 'जो य ण दुहिए०' गाहा, तीए कहियं, सो भणइ—अहं चित्तिस्सं, सा भणइ—सरिसं चेव रोवणयं, तुमंपि मे पुत्तोत्ति, तओ तेण सा वोहिया, तहाऽहं एईए जत्ताए चित्तिस्सं जहा न मरिस्संति, तीएऽवि पडिवन्नं, कयाइ एयंपि भवइत्ति, तओ तहिं चेव वरिसे उच्छलियं सोमदेव(डय)स्स नामयं, खेडिओ वारओ, तत्तो सोमदेवो छट्ठभत्तं काऊग गतो जक्खगिहं, ण्हायसुइभूएणाणाहयं वत्थजुयलं परिहियं, अट्ठगुणाए य पोत्तीए मुहकमलमावरियं, णवयेहिं ण्हवणकलसेहिं मज्जिओ जक्खो, णवयेहिं कुच्चएहिं उग्घुट्ठो, सुईए मछए पोंडवद्धणियाए सेडियाए अल्लेसं धवलिओ, पवित्तोदगरायवट्टगादीहिं वण्गएहिं चित्तिऊग पाएसु पडिओ, भणितो "फुडमरगयदलसामल विवुद्धवरकमलपत्तसरिसच्छ!। जक्ख! तुमे खमियव्वो तुम्ह कओ जो मए दोसो ॥१॥" जक्खोऽवि भणति—तुट्ठो वरेहि वरंति, तेण भणियं-सत्ताणमभयं देहि, जक्खो भणति—दिण्णं चेव जं तुमं न मउत्ति, किमेयेण?, अन्नं

वरेहि, सो भणति–जइ एवं तो जस्स सचेयणाचेयणस्स दुपयचउप्पयाइयस्स एगावयवंपि पस्सेज्जा तस्साहं विद्धाणयं लिहेज्जा, जक्खेण दिण्णो वरो, तत्तो सो ते चित्तगरे खरंटेत्ता सिद्धकज्जोत्ति कोसंबिं गओ। तत्थ य सयाणिओ णाम राया, सो अन्नया कयाइ सुहासणगओ दूयं पुच्छइ–जं अन्नेसिं राईणं अत्थि तं ममं किं नत्थि?, दूयेण भणियं–चित्तसभा, मणसा देवाणं वायाए पत्थिवाणं, तक्खणमेत्तमेव आणत्ता चित्तकरा, तेहिं सभाओवासा विभइत्ता चित्तिया, तस्स वरदिन्नगस्स जो रन्नो अन्तेउरकीडा (पएसो) सो पएसो दिन्नो, तेण तत्थगयाणुरूवेसु निम्मिएसु कया उ मिगावईए जालकीडगंतरेण पायंगुट्ठओ दिट्ठो, उवमाणेणं णायं जहा मिगावईएत्ति, तेण तयंगुट्ठगाणुसारेण देवीए रूवं निव्वत्तियं, तीसे चक्खुंमि उम्मिल्लंते एगो मसिबिंदू ऊरूअन्तरे पडिओ, तेणं पुञ्छिदो, ण य सा सोहइ, पुणोवि उम्मिल्लिज्जंतेसु पडिओ, एवं तिन्नि वारा, पच्छा तेण नायं–एएण एवमेव भवियव्वं, तओ चित्तसभा निम्माया, तत्तो राया चित्तसभं पलोएंतो तं पएसं पत्तो जत्थ सा देवी लिहिया, तन्निव्वण्णंतेण सो बिंदू दिट्ठो, तं दट्ठूण रुट्ठो, एएण मम पत्ती धरिसियत्तिकाऊण वज्झो आणत्तो, तओ चित्तकरसेणी उवट्ठिया, सामि! एस वरलद्धोत्ति, तओ से खुज्जाए मुहं दाइयं, तेण सा तयाणुरूवा लिहिया, तहवि तेण संडासओ छिंदाविओ निव्विसओ य आणत्तो, सो पुणोऽवि तस्सेव जक्खस्स उववासेण ठिओ, भणिओ य–वामेण चित्तेहिसि, तओ सो सयाणियस्स पओसं गओ, तेण चिंतियं–पज्जोओ एयस्स पीढिं पियेज्जा, तओऽणेण मिगावईए रूवं फलए चित्तेऊण पज्जोयस्स उवट्ठावियं, तेण दिट्ठं, पुच्छियं, तेण दूओ पेसिओ, जइ न पट्ठवेसि तत्तो एमि, तेण असक्कारिओ निद्धमणेण निच्छूढो, तेण सिट्ठं, इमोऽवि तेण दूयवयणेण रुट्ठो सव्वबलेण कोसंबिं एइ, तं आगच्छंतं सोऊण य सयाणिओ अप्पबलो अतिसारेण मओ, ताहे मिगावईए चिंतियं–मा इमो बालो मम पुत्तो विणस्सिहित्ति, एस खरेण न सक्कइ, पच्छा दूओ पट्ठ-

त्रिओ, भगिणीओ-एस कुमारो वालो, अम्हेहिं गतेहिं मा सामन्तराइणा केणइ अन्नेण वा पेल्लिज्जिहित्ति, सो भणति-अहं भलामि, को पेल्लेइ ?, सा भणइ-उस्सीसये सप्पो जोयणए वेज्जो किं कीरिहिइ ?, तो नगरिं दढं करेहि, तो भणति-आमं करेमि, ताए भण्णइ-उज्जेणीए इट्ठाओ चलियाओ, ताहिं कीरउ, आमंति, तस्स य चोद्दसराइणो नमवत्तिणो, तेण ते सवला ठविया, पुरिसपरंपरएण तेहिं आणियाओ इट्टगाओ कयं (दढ) नगर, ताहे ताए भण्णइ-इयाणिं धन्नस्स भरेहि नगरिं, तेण भरिया, जाहे नगरी रोहगसज्जा जाया ताहे सा विसंवइया, चिंतियं च णाए-धन्ना णं ते गामागरनगरजावसंनिवेसा जेसु णं सामी विहरइ, जइ य सामी इहं एज्जा तओ अहं पव्वज्जं गेण्हेज्जा, तओ भगवं विहरंतो आगंतूण तत्थेव बाहिरियाए समोसढो, तओ वेरा पसमंति, मियावई निग्गया अब्भितरियाओ, इओ य-सामी समोसढोत्ति सोउं एगो पच्चंतमाहणतणओ संसयावन्नो आगंतूण पच्छण्णं मणसा पुच्छइ, तवो सामिणा भणिओ-वायाए पुच्छ देवाणुप्पिया ! वहवे सत्ता संबुज्झंतित्ति, एवमवि भणिते तेण भणियं-भगवं ! जा सा सा सा ?, तत्थ भगवया भणियं-आमंति, तेणं भणिए गोयमसामिणा भणियं-किमेएण जा सा सा सत्ति भणियं ?, एत्थ तीसे उट्ठाणपरियाणियं सव्वं भगवं परिकहेतित्ति । तेणं कालेणं तेणं समएणं चंपानामाए नयरीए, तत्थेगो सुवन्नगारो इत्थीलोलो, पंच सुवन्नसयाणि दाऊण जा पहाणा कन्ना तं परिणेइ, एवं तेण पंचसया पिंडिया एक्केक्काए तिलगचोद्दसं अङ्गाभरणं करेइ, जद्दिवसं च जाए समं भोगे भुंजिहिइ तद्दिवसं देइ अलङ्कार, सेसकालं न देइ, सो इस्सालुओ तं घर न कयाइ मोकलं मुयइ, न वा अन्नस्स अल्लिउं देइ, सो अन्नया मित्तेहिं पगए वाहित्तो अणिच्छंतो बला णीओ, तं च निप्पगिट्ठं, तओ तहिं गओत्ति नाऊण ताहिं चिन्तियं-किं अम्हाणं एएणं सुवन्नएणंति, अज्ज पइरिक्कं ण्हासो समालभामो आविद्धामो य, ण्हायाओ पइरिक्कमज्जणविहीए तिलगचोद्दसगेणं अलंकारेण अलङ्करेऊण अद्दागं गहाय पेहमाणीओ चिट्ठंति,

सोऽवि य अवरत्तयेण नियत्तो, पहाणपत्तीए से अग्गला अवणिया, तं पसाहियं दट्ठूण कसायाणलडज्झमाणेणं तालगेणं मारिया, ताओ अन्नाओ य भणंति-एस अम्ह एक्केक्कियं मारेहितित्ति तम्हा एयं एत्थ अद्दागपुंजं करेमो, तत्थेगूणेहिं पंचहिं महिलासएहिं पंच एगूणाइं अद्दागसयाइं जमगसमगं पक्खित्तानि, तत्थ सो अद्दायपुंजो जाओ, पच्छा पुणोऽवि तासिं पच्छादावो जाओ-का गई अम्ह पइमारियाणं भविस्सइ ? लोए य उद्धंसणाओ सहियव्वाओ, ताहे ताहिं घणकवाडनिरंतरं छिड्डाइं ठवेऊण अग्गी दिन्नो सव्वओ समंतओ, तेण पच्छायाणुतावेण साणुक्कोसयाए य ताए य अकामनिज्जराए पचंते मणूसा उववण्णा, पंचवि सया चोरा जाया, एगंमि पव्वए परिवसंति, सोऽवि य कालगओ अप्पड्डिइतिरिक्खेसु उववन्नो, तत्थ जा सा पढमं मारिया सोऽवि तिरिएसु उववण्णो तओ उव्वट्टिऊण बंभणकुले चेडो आयाओ, सो य पंचवरिसो, सोऽवि य सुवण्णकारो तिरिक्खेहिंतो उव्वट्टिऊण तंमि चेव य कुले दारिया जाया, सो चेडो तीसे बालग्गाही, सावि य असुहभावा निच्चमेव रुवइ, तओ तेण उदरपोथ(प्प)यं करंतेण कहवि सा जोणिदारे हत्थेण आहया, तह चेव ठिया रोविउं, तेण नायं, जहा लद्धो मए उवाओत्ति, एवं सो निच्चकालंमेव करेइ, सो तेहिं मायापितीहिं णाओ, ताहे हणिऊण धाडिओ, साऽवि अपडुप्पण्णा चेव विद्दाया, सो य चेडो पलायमाणो चिरणगरविणट्ठदुट्ठसीलायारो जाओ, गतो. एगं चोरपल्लिं जत्थ ताणि एगूणगाणि पंच चोरसयाणि परिवसंति, सावि पइरिक्कं हिंडंती एगं गामं गया, सोऽवि गामो तेहिं चोरेहिं पेल्लिओ, सा य अण्णेहिं गहिया, सा तेहिं पंचहिंपि चोरसएहिं परिभुत्ता, तेसिं चिंता जाया-अहो इमा वराई एत्तियाणं घरिसणं सहइ, जइ अन्ना से वितिज्जिया लभेज्जा तो से विस्सामो होज्जा, ततो तेहिं कयाइ तीसे वितिज्जिया आणिया, जद्दिवसं च सा आणिया तद्दिवसं चेव सा तीसे छिद्दाइं मग्गइ, केण पुण उवाएण एयं मारेज्जा ?, ते य चोरा अन्नया उद्धाइया, तीएवि सा भणिया-हला पेच्छ

कूवे किंपि दीसइत्ति, तओ सा उज्जुययाए दट्ठुमारद्धा, तीए तत्थेव छूढा, चोरा आगया पुच्छंति, तीए भण्णइ-अप्पणो महिलं किं न सारवेह ?, तेहिं णायं-जहा एईए मारिया, तओ तस्स बंभणचेडगस्स हियए ठियं, जहा एसा सा मम पावकम्मा भगिणित्ति, चिंतेइ य-भगवं महावीरो सव्वण्णू सव्वदरिसी यत्ति वादो सुव्वइ, ततो एस इहागओ समोसरणे पुच्छइ, ताहे सामी भण्णइ-सच्चेव सा तव भगिणी, एत्थ सो संवेगमावण्णो पव्वतिओ ॥ एयं च कहाणयं सोउं सव्वा सा परिसा पयणुरागा संवुत्ता, ततो सा मिगावती देवी जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ, उवागच्छित्ता समणं भगवं जाव रायं पज्जोयं आपुच्छामि ततो तुम्ह सगासे पव्वयामित्ति भणिऊणं पज्जोयं आपुच्छइ, तओ सो पज्जोओ तीसे महइमहालियाए सदेवमणुयासुरपरिसाए लज्जाए न तरइ वारेउंति विसज्जिया, तओ मिगावई पज्जोयस्स उदयणं कुमारं निक्खेवनिहित्तं काऊण पव्वइया, पज्जोयस्सवि अट्ठ अंगारवईपमुहाओ देवीओ आउच्छिऊण पव्वइयाओ । तानि पंच सयाणि तेण साहुणा गंतुं बोहियाणि पव्वावियाणि य, एयं पसंगेणं भणियं, एत्थ इमं परंपरयेण अधिगारो, एस दव्वपरंपरओत्ति गाथार्थः ॥१०८५॥ पश्चार्द्धं व्याचिख्यासुराह-'जिणे' त्यादि, 'उज्जेणी'त्यादि भावितमत् ॥१०८६-७॥ अत्राह-'दव्वे' त्यादि ॥ 'द्रव्यस्य' इष्टकादेः 'परम्परकः' हस्तसञ्चारेण गमनं 'युक्तो' घटते, भावश्रुतसंक्रमस्तु कुतः ?, तस्यात्मपर्यायत्वेनान्यत्र संक्रमायोगात्, तत्रैतत् स्याद्-भावश्रुतहेतोर्द्रव्यस्यागतस्तदुपचारादागतव्यपदेशः, तदप्यसाधु, यतः अयं स एव जिणगणधरोच्चरितः शब्द इत्येवं न आगतः, श्रुत्यनन्तरमेवोपरमादिति गाथार्थः ॥१०८८॥ उच्यते-'आ'इत्यादि ॥ जस्स जत्तो समुब्भवो तत्त आगतमिवागतं, तद्यथा-रूपकात् घृतं, घटात् तद्विज्ञानं दार्ष्टान्तिकमाह, यतस्तत्सामायिकमिहागतं 'परम्परतः' पारम्पर्येणेत्यसौ, परम्परकः उपचारात्, एतदुक्तं भवति-सामायिकमाचार्यपारम्पर्यप्रत्ययत्वाचस्मादागतमित्युच्यते, न चायमागतशब्दो गमि-

क्रियावचनः, किं तर्हि ?, उत्पत्तिवचनो बोधवचनो चेति गाथार्थः ॥१०८९॥

निज्जुत्ता ते अत्था जं बद्धा तेण होइ निज्जुत्ती । तहवि य इच्छावेइ विभासिउं सुत्तपरिवाडी ॥नि. ८९॥

जं निच्छयाइजुत्ता सुत्ते अत्था इमीएँ वक्खाया । तेणेयं निज्जुत्ती निज्जुत्तत्थाभिहाणाओ ॥१०९१॥

सुत्ते निज्जुत्ताणं निज्जुत्तीए पुणो किमत्थाणं ?। निज्जुत्तेऽवि न सव्वे कोइ अवक्खाणिए मुणइ ॥१०९२॥

तो सुयपरिवाडि चिय इच्छावेइ तमणिच्छमाणंपि । निज्जुत्तेऽवि तदत्थे वोत्तुं तदणुग्गहट्ठाए ॥१०९३॥

फलयलिहियंपि मंखो पढइ पभासइ तहा कराईहिं । दाएइ य पइवत्थुं सुहबोहत्थं तह इहंपि ॥१०९४॥

अहवा सुयपरिवाडी सुओवएसोऽयमेव जदयस्सं । सोयव्वं निस्संकिय सुयथिणयत्थं सुयोहंपि ॥१०९५॥

इच्छइ विभासिउं मे सुयपरिवाडिं न सुट्ठु बुज्झामि । नातिमई वा सीसो गुरुमिच्छावेइ वोत्तुं जे ॥१०९६॥

कत्तो पसूयमागयमायरियपरंपराएँ सुयनाणं । सामाइयाइयमिदं सव्वं चिय सुत्तमत्थो वा ? ॥१०९७॥

एयं नणु भणियं चिय अत्थपुहुत्तस्स तेहिं कहियस्स । इह तेसिं चिय सीलाइकहणगहणप्फलविसेसो ॥१०९८॥

अथ निर्युक्तिरिति कः शब्दार्थः ? इत्यत आह–'निज्जुत्ती' इत्यादि ॥ निश्चयेन साधु आधिक्येनादौ वा युक्ता घटिता इति निर्युक्ताः, के ?, 'अर्थाः' मन्दरमकराकरादयः श्रुतगोचरा जीवादयश्च, एतदुक्तं भवति–एते ह्यर्थाः सूत्रे करोमीत्यत्र प्रतिबद्धा एव सन्तो निर्युक्ताः सम्यग्व्यवस्थापिताः खल्वनया गाथापद्धत्या 'जं' मिति यद् येन कारणेन तेन कारणेन भवति इयं, केत्याह–'निज्जुत्ती' अत्र च निर्युक्तानां युक्तिर्निर्युक्तयुक्तिरिति प्राप्ते निर्युक्तिः, एकस्य युक्तशब्दस्य लोपाद्, उष्ट्रमुखी कन्येति यथा, निर्युक्ता-

र्थानां व्याख्या निर्युक्तिरित्यर्थः, आह–ये सकृत्सूत्रे निर्युक्तास्ते निर्युक्ता एव, किमपरेषामस्यां नियोजनेन ? येनैषा निर्युक्तयुक्तिरिति प्राप्नोति ?, उच्यते, सत्यमेवमेतत्, किन्तु तथाऽपि च सूत्रे तान्निर्युक्तानपि सत एपयति संगच्छयति 'विभापितुं' विभागयितुं, का ? 'सूत्रपरिपाटी' सूत्रपद्धतिः, सूत्रोलीतियावत्, कं ?, व्याख्यातारमिति सामर्थ्याद्गम्यते, कथं ?–हे व्याख्यातः भण भण मामस्मै, नायं मामवगच्छतीति, त्वयैव तेपां निर्युक्तत्वात्, किमहं करोमीति चेत् उच्यते–'निज्जुत्तऽवि न सव्वे कोइ अवक्खाणिए मुणइ' 'सुत्तपरिवाडि वा' तदाऽऽचार्यं शिष्यः, स चानया भाण्यत इति गाथार्थः ॥१०९०॥ 'ज'मित्यादि ॥ यदनया सूत्रे निश्चयादियुक्ताः सन्तोऽर्था व्याख्यातास्तेनेयं निर्युक्तयुक्तिरिति वाच्ये निर्युक्तिरभिधीयते, युक्तध्वनिलोपात्, किमित्यत आह–निर्युक्तार्थव्याख्यानादिति गाथार्थः ॥१०९१॥ चोदक आह–'सुत्ते'इत्यादि ॥ सुत्ते निज्जुत्ताणं अत्थाणं सुयगोयराणं पुणो य निज्जुत्तीए किं ?, सूत्र एव नियोजितत्वेन सुबोध्यत्वाद्, उच्यते, यतस्तत्र निर्युक्तानपि सतः सर्वान् न कश्चित्तनुधीर्जानाति शिष्यस्तस्मादस्त्यनया प्रयोजनं, अव्याख्यातानामबुधनादिति गाथार्थः ॥१०९२॥ 'तो' इत्यादि ॥ 'ततः' तस्मात् श्रुतपरिपाट्येव कर्तृभूता 'त'मिति तं व्याख्यातारं 'अनिच्छन्तमपि' अनभ्युपगच्छन्तमपि एपयति ग्राहं कृत्वा, किं तत् ? इत्याह–'वोत्तुं' व्याख्यानयितुं, कान् ?, निर्युक्तानपि सतः 'तदर्थान्' सूत्रार्थान्, किमर्थं ?, अनुग्रहार्थं, एतदुक्तं भवति–अप्रतिबुध्यमाने श्रोतरि तमसावनुग्रहार्थमुपरोधयति इच्छतेच्छत मामस्मै व्याख्यातुमितीत्थं प्रयोजयतीवेति गाथार्थः ॥१०९३॥ आह–किं बहुनाऽनेनोक्तेन ?, यदस्पष्टं तदन्यथा (नया) स्पष्टं क्रियते, अत्राचार्यो दृष्टान्तं कथयन्नाह–'फलये'त्यादि ॥ यथेह मङ्खः फलकलिखितमपि सत् अबालुपाटिकादि पठति रशन(स)कलादिना तथा करादिभिश्च दर्शयन् प्रभापते–इदमनयाऽन्यजन्मनि द्रोह्यं कृतमिति, अत एवाह–दर्शयति च प्रतिनस्तु पूर्वकृतकर्मविपाकं, यथाऽनया-

ऽन्यजन्मनि भर्तृमित्र आयाते मुखकोणको दत्त आसीत् ततोऽस्याः शिरस्थाने कण्टकवृक्षः समुद्गत इत्येवमादि, किमथ ?, सुखबोधार्थं, दार्ष्टान्तिकोपसंहारमाह–तथेहापि श्रोतृवैचित्र्यं पश्यन् सर्वानुग्रहप्रवहणबुद्धिर्भगवान् **भद्रबाहुस्वामी** सूत्रे निर्युक्तानपि सतोऽर्थाननया दर्शयति विनेयानामिति गाथार्थः ॥१०९४॥ 'अहवे' त्यादि ॥ अथवा मूलगाथापूर्वार्द्धं व्याख्यायते 'तहवि य इच्छावेइ', का ? इत्याह–'सुयपरिचाडी' श्रुतविधिर्यदुत 'श्रुतोपदेशः' श्रुताज्ञा इयमेव, यदवश्यं सुबोध्यमपि श्रोतव्यं, निःशङ्कितश्रुतार्थं विनयार्थं चेति गाथार्थः ॥१०९५॥ पाठान्तरमधिकृत्याह–'इच्छहे'त्यादि ॥ 'वा' इत्यथवा नातिमतिः शिष्यः 'गुरुं' आचार्यं 'इच्छावेइ' एपयति 'वोत्तुं जे' वक्तुं, कथमित्याह–'इच्छह विभासिउं मे'त्ति इच्छतेच्छत विभाषितुं मम सूत्रपद्धतिं, नाहमेनां सुष्ठु, अवबुध्य इति गाथार्थः ॥१०९६॥ अथवाऽप्रतिबुध्यमाने श्रोतर्यनन्तरत्वान्निर्युक्तिरेवानुप्रयोक्त्री भवति–इच्छत विभाषितुं सूत्रपरिपाटिं, नायमवबुध्यत इति निर्युक्तिशब्दार्थः । अथ यदुक्तमनन्तरगाथायां 'आयरियपरंपरयेणमागय'न्ति, तत्रायमुत्तरगाथासम्बन्धनार्थं प्रश्नः–'कत्तो' इत्यादि ॥ कुतः पुनः प्रस्तुतामिमामायरियपरंपरागतां वक्ष्यसे 'कत्तो वा' आगतमाचार्यपारंपर्येण 'सुयनाणं सामाइयादियमिदं सव्वं चिय' सूत्रादिरूपं इति गाथार्थः ॥१०९७॥ तीर्थकरादिभ्य इति चेदेतदाशङ्क्याह–'एय' मित्यादि ॥ नन्वेतत्कथितमेव, केन ग्रन्थेनेत्यत आह–'अत्थे'त्यादि, अत्राचार्य आह-सत्यं, किन्त्विह वक्ष्यमाणे प्रकृते तेषामेव तीर्थकरगणधरादीनां शीलादिकथनफलविशेष उत्कीर्त्यते, तद्यथा–भगवतः शीलं–तपोनियमज्ञानादीनि, आदिशब्दस्तपआदिषु स्वभेदप्रख्यापकः, एतान्येव वृक्षः 'रुहण'त्ति तदारोहणेऽभिधानक्रिया 'फलविसेसो'त्ति भव्यजनबोधनार्थता, गणधराणां त्विह ग्रहणग्रन्थनफलविशेष उत्कीर्त्यते, तत्र ग्रहणं सामर्थ्यप्रापितं, तत्फलं ग्रन्थनं, संदर्भणमित्यर्थः, फलविशेषः प्रवचनार्थता सुखग्रहणार्थता चेति ॥१०९८॥ अत उच्यते–

तवनियमनाणरुक्खं आरूढो केवली अमियनाणी। तो मुयइ नाणवुट्ठिं भवियजणविबोहणट्ठाए नि.९०

तं बुद्धिमएण पडेण गणहरा गेण्हिउं निरवसेसं। तित्थयरभासियाइं गंथंति तओ पवयणट्ठा ।नि. ९१।

'तवे'त्यादि ॥ 'तं बुद्धी'त्यादि ॥ तपो-द्वादशप्रकारमनशनादि, नियमः-इन्द्रियनियमो नोइन्द्रियनियमश्च, ज्ञानं-केवलज्ञानं संपूर्णं गृह्यते, तपश्च नियमश्च ज्ञानं चेति समासः, तान्येव वृक्षः, रूपणे च कारणं वक्ष्यामः, तं 'आरूढः' अधिष्ठितः, केवलस्य संपूर्णत्वात् संपूर्णताख्यापनायैवाह-केवलमस्यास्तीति केवली, अयमपि चतुर्धा श्रुतसम्यक्त्वचारित्रक्षायिकज्ञानभेदात्, अथवा श्रुतावधिमनःपर्यायकेवलज्ञानभेदात्, अत आह-'अमितज्ञानी' सर्वज्ञ इत्यर्थः, 'तो' ततस्तस्मात् ज्ञानवृक्षात् 'मुञ्चति' विसृजति 'ज्ञानवृष्टिं' ज्ञानकारणामृतरसास्वादोपमशब्दवृष्टिं, किमर्थमित्यत आह-अनादिपारिणामिकभव्यभावयुक्तो जनो भव्यजनस्तद्धितार्थाय (तद्विबोधनार्थाय) अभव्यजनस्य तु मुक्ताऽपि नानुग्रहायासौ, स्वदोषदुष्टत्वाद् आदित्यविस्तृतकरनिकरवदुलूकानामिति गाथार्थः 'तं' तां मुक्तां ज्ञानवृष्टिं 'बुद्धिमयेन' बुद्धिविशेषप्रसरतन्त्वात्मकेन 'पटेन' आधारविशेषेण 'गृहीत्वा' आदाय 'निरवशेषां' समस्तां के?-'गणधराः' तदनतिशयिनः पुरुषविशेषाः, बीजादिबुद्धित्वात्, किं कुर्वन्ति?, अत आह-भाषणानि भाषितानि तीर्थकराणां भाषितानि तीर्थकरभाषितानि कुसुमकल्पानि 'ग्रथ्नन्ति' सूत्रीकुर्वन्ति, विचित्रकुसुममालामिव, किमित्यत आह-'प्रवचनार्थं' द्वादशाङ्गगणिपिटकप्रविभागार्थं, सद्धार्थं वा प्रवक्तीति प्रवचनत्वाचस्येति गाथाद्वयार्थः ॥१०९९-१००॥ तपआदीनां रूपणे किं प्रयोजनमित्यत आह-

कप्पाइरूवयनिरूवणट्ठमिह दव्वकप्पदिट्ठंतो । जह कोइ विउलवणसंडमज्झयारट्ठियं रम्मं ॥११०१॥
तुंगं विउलक्खंधं साहसओ कप्परुक्खमारूढो । पज्जत्तगहियबहुविहसुसुरभिकुसुमोऽणुकंपाए ॥११०२॥
कुसुमत्थिभूमिचिट्ठियपुरिसपसारियपडेसु पक्खिवइ । गंथंति तेऽवि घेत्तुं सेसजणाणुग्गहट्ठाए ॥११०३॥
लोगवणसंडमज्झे चोत्तीसाइसयसंपदोवेओ । तवनियमनाणमइयं स कप्परुक्खं समारूढो ॥११०४॥
मा होज्ज नाणगहणम्मि संसओ तेण केवलिग्गहणं । सोऽवि चउहा तओऽयं सव्वण्णू अभियनाणित्ति ॥११०५॥
पज्जत्तनाणकुसुमो ताइं छउमत्थभूमिसत्थेसु । नाणकुसुमत्थिगणहरसियबुद्धिपडेसु पक्खिवइ ॥११०६॥
कीस कहेइ कयत्थो ? किं वा भवियाण चेव बोहत्थं ? । सव्वोपायविहिण्णू किं वाऽभव्वे न बोहेइ ? ॥११०७॥
नेगंतेण कयत्थो जेणोदिण्णं जिणिंदनामं से । तदवंझफलं तस्स य खवणोवाओऽयमेव जओ ॥११०८॥
जं व कयत्थस्सवि से अणुवकयपरोवगारिसाभव्वं । परमहियदेसियत्तं भासयसाभव्वमिव रविणो ॥११०९॥
किं व कमलेसु राओ रविणो बोहेइ जेण सो ताइं । कुमुएसु व से दोसो जं न विबुज्झंति से ताइं ? ॥१११०॥
जं बोहमउलणाइं सूरकरामरिसओ समाणाओ । कमलकुमुयाण तो तं साभव्वं तस्स तेसिं च ॥११११॥
जह वोलूगाईणं पगासधम्मोऽवि सो सदोसेणं । उइओऽवि तमोरूवो एवमभव्वाण जिणसूरो ॥१११२॥
सज्झं तिगिच्छमाणो रोगं रागी न भण्णए वेज्जो । मुणमाणो य असज्झं निसेहयंतो जह अदोसो ॥१११३॥
तह भव्वकम्मरोगं नासंतो रागवं न जिणवेज्जो । न य दोसि अभव्वासज्झकम्मरोगं निसेहंतो ॥१११४॥

मोत्तुमजोग्गं जोग्गे दलिए रूवं करेइ रूवारो । न य रागद्दोसिल्लो तहेव जोगे विबोहेंतो ॥१११५॥
तं नाणकुसुमवुट्ठिं घेत्तुं बीयाइबुद्धओ सव्वं । गंथंति पवयणट्ठा माला इव चित्तकुसुमाणं ॥१११६॥
पगयं वयणं पवयणमिह सुयनाणं कहं तयं होज्जा ?। पवयणमहवा संघो गहेंति तयणुग्गहट्ठाए ॥१११७॥
घेत्तुं च सुहं सुहगुणणधारणा दाउं पुच्छिउं चेव । एएहिं कारणेहिं जीयंति कयं गणहरेहिं ॥१११८॥
मुक्ककुसुमाण गहणाइयाइं जह दुक्करं करेउं जे । गुच्छाणं च सुहकरं तहेव जिणवयणकुसुमाणं ॥१११९॥
पयवक्कपगरणज्झायपाहुडाइनियतक्कमपमाणं । तदणुसरता सुहं चिय घेप्पइ गहियं इदं गेज्झं ॥११२०॥
एवं गुणणं धरणं दाणं पुच्छा य तदणुसारेण । होइ सुहं जीयंति य कायव्वमिदं जओऽवस्सं ॥११२१॥
सव्वेहिं गणहरेहिं जीयंति सुयं जओ न वोच्छिन्नं । गणहरमज्जाया वा जीयं सव्वाणुचिन्नं वा ॥११२२॥
जिणभणियइच्चिय सुत्तं गणहरकरणम्मि को विसेसोऽत्थ?।सो तदवेक्खो भासई नउ वित्थरओ सुयं किंतु ।११२३।

रुक्खादिरूवचेत्यादिगाथाः १७ सुगमाः ॥ 'घेत्तुं चे'त्यादि प्रयोजनान्तरप्रतिपिपादयिषया चेदमुच्यते 'ग्रहीतुं च' आदातुं च ग्रथितं तत्सूत्रीकृतं सुखं भवति अर्हद्वचनवर्पणं, मुक्तमुक्तत्वात् कुसुमसंघातवत्, 'चः' समुच्चये, एतदुक्तं भवति—नानासंदर्भितं सत् तत् पदवाक्यप्रकरणाध्ययनादिना प्रतिपदमयत्नेनाप्युपादातुं शक्यमिति, एवं सुखेनैव गुणनधारणे अस्य क्रियेते, तत्र गुणनमेतावदधीतमेतावच्चाध्येयं, धारणं अप्रच्युत्या, तथा दातुं प्रष्टुं चेति, 'चः' समुच्चये, 'एव' एवकारावधारणात्, ग्रहीतुः सुखमेव भवतीति, दानं शिष्येभ्यो निसर्गः, प्रश्नः संशये निःसंदेहार्थं विद्वत्संनिधौ सविवक्षासूचकं वाक्यमिति, 'एभिः कारणैः' अनन्तरोक्तैर्हेतुभूतैः जीवि-

तमित्यव्यवच्छित्तिनयाभिप्रायतः सूत्रमेव 'जीतं' ति प्राकृतशैल्या 'कृतं' रचितं गणधरैः, अथवा 'जीत' मित्यवश्यं गणधरैः कर्त्तव्यमेतदिति, तन्नामकर्मोदयादिति गाथार्थः ॥ 'सुक्के'त्यादि स्पष्टा ॥१११९॥ तथा च-'पदे'त्यादि ॥ अनेकवर्णसमुदायः पदं, अनेकपदसमुदायो वाक्यं, एवं कृते अर्हद्वचनं कृतं अतः 'तदनुसरता' पदाद्यनुसरता साधुनेति, शेषं स्पष्टम् ॥ ११२० ॥ 'एव'मित्यादि गतार्था ॥११२१॥ 'सव्वेही'त्यादि ॥ यद्वा सर्वैरारचितं तत्, जीतमिति पञ्चमव्यवहारवदव्यवच्छेदनयाभिप्रायात् सूत्रमेव जीतमुच्यते 'जीयं' ति प्राकृताभिधानादिति गाथार्थः ॥११२२॥ उत्तरगाथासम्बन्धमाह-'जिने'त्यादि ॥ जिनभणितिरेव सूत्रं, गणधरभाषणे को विशेषः?, उभयोरपि सूत्रभणनात्?, उच्यते-'सः' तीर्थकृत् 'तदपेक्षं' गणधरापेक्षं भाषते, मातृकापदाक्षराणि उप्पन्ने वेत्येवमादि, अत एवाह-न पुनर्विस्तारेणाचारादिना श्रुतं, आह च, किन्तु ॥

अत्थं भासइ अरहा सुत्तं गंथंति गणहरा निउणं। सासणस्स हियट्ठाए तओ सुत्तं पवत्तई ।नि. ९१।

नणु अत्थोऽणभिलप्पो स कहं भासइ? न सद्दरूवो सो?। सद्दम्मि तदुवयारो अत्थप्पच्चायणफलम्मि ॥११२५॥
तो सुत्तमेव भासइ अत्थप्पच्चायगं न नामऽत्थं। गणहारिणोऽवि तंचिय करिंति को पइविसेसोऽत्थ? ॥११२६॥
सो पुरिसावेक्खाए थोवं भणइ न उ बारसंगाइं। अत्थो तदवेक्खाए सुत्तं चिय गणहराणं तं ॥११२७॥
अंगाइसुत्तरयणानिरवेक्खो जेण तेण सो अत्थो। अहवा न सेसपवयणहियत्ति जह बारसंगमिणं ॥११२८॥
पवयणहियं पुण तयं जं सुहगहणाइ गणहरेहिंतो। बारसविहं पवत्तइ निउणं सुहुमं महत्थं च ॥११२९॥
नियगुणं वा निउणं निद्दोसं गणहराऽहवा निउणा। तं पुण किमाइपज्जंतपमाणमिह को व से सारो?।११३०।

अत्थमित्यादि ॥ अस्य व्याख्या–'णणु'इत्यादि ॥ ननु 'अर्थः' घटादिरभिलाप्यो वर्त्तते 'सः' तीर्थकृत् कथं तं भाषते ?, येनोक्तं 'अत्थं सो भासइ'त्ति, स शब्दश्चेत्तन्न, यतो न शब्दरूपोऽसौ अध्वनित्वात्, उच्यते–'सद्दंमि' मधुरमनोहारिण्यसमस्तस्वामिमुखपङ्कजा-न्निर्यातिं सति 'तदुपचारः' अर्थोपचारः क्रियते, अर्थप्रत्यायनफलत्वाच्छब्दस्येति गाथार्थः ॥११२४–५॥ आह–'तो'इत्यादि ॥ तत उपचारेऽपि कृते सति, शेषं स्पष्टम् ॥ अत्रापि परिहारमाह–'सो' इत्यादि पुव्वद्धं कंठं, ततश्च मातृकापदभाषणं भगवतोऽर्थो वर्त्तते, किमपेक्षया ? इत्यत आह–'तदपेक्षया' द्वादशाङ्ग्यपेक्षया, यावति चोक्ते शेषमनुक्तमपि जानते बीजबुद्धित्वात् तदपेक्षयाऽर्थः, गणधराणां तु तत्पदत्रयं सूत्रमेवार्थो वेति गाथार्थः ॥११२६–२७॥ कथं पुनरर्थो वेत्युक्तमत आह–'अंगे'त्यादि । स 'उप्पण्णेति वे' त्यादि शब्दो गणभृतां 'अंगादिसुत्तरयणानिरवेक्खो जेण अत्थो, सेसपवयणं संघो' अत आह-अथवेत्यादि, 'तो सो अत्थो' प्रवचनहितं तु किमित्यत आह–'पवयणे'त्यादि सुगमा, नवरं 'निपुणं'ति सूक्ष्मत्वान्महार्थत्वाच्चेति ॥ प्रकारान्तरमाह–'नियये'त्यादि । नियतगुणत्वाद्वा संनिहितादृगुणत्वाद्वा निपुणं, निर्दोषत्वाद्वा द्वात्रिंशद्दोषविरहात्, पाठान्तरेण निउणा वा गणधरा इति मूलगाथार्थः ॥११२८–३०॥ उत्तरगाथासम्बन्धमाह–'तं पुण सुयनाणं किमाइ किंपज्जत्तं किंपमाणं को व से सारो ?' इत्यत आह–

**सामाइयमाईयं सुयनाणं जाव विन्दुसाराओ । तस्सवि सारो चरणं सारो चरणस्स नेव्वाणं (नि. ९३)**

सोउं सुयण्णवं वा दुग्गेज्झं सारमेत्तमेतस्स । घेच्छं तयंति पुच्छइ सीसो चरणं गुरू भणइ ॥११३२॥
अन्नाणओ हयत्ति य किरिया नाणकिरियाहिं नेव्वाणं । भणियं तो किह चरणं सारो नाणस्स तमसारो ?॥११३३॥
चरणोवलद्धिहेउं जं नाणं चरणओ य नेव्वाणं । सारोत्ति तेण चरणं पहाणगुणभावओ भणियं ॥११३४॥

नाणं पयासयं चिय सुत्ति-विसुद्धिप्फलं च जं चरणं। मोक्खो य दुगाहीणो चरणं नाणस्स तो सारो ॥११३५॥
जं सव्वनाणलाभाणंतरमहवा न मुचए सव्वो। मुचइ य सव्वसंवरलाभे तो सो पहाणयरो ॥११३६॥
लाभेऽवि य जस्स मोक्खो न होइ जस्स य स होइ स पहाणो। एवं चिय सुद्धनया नेव्वाणं संजमं बेंति ॥११३७॥

'सामाइये'त्यादि। सामायिकमादिर्यस्य तत्सामायिकादि 'जाव विंदुसाराओ' बिन्दुसारपर्यन्तं, यावच्छब्दाद् 'द्व्यनेकद्वादशा-भेद'-मिति गम्यते, तस्यापि श्रुतज्ञानस्य सारः–फलं चरणं–चारो, भावे ल्युट्प्रत्ययः, चर्यते वाऽनेनेति चरणं, परमपदं गम्यत इत्यर्थः, सारशब्दः प्रधानफलपर्यायो वर्त्तते, अपिशब्दात्सम्यक्त्वस्यापि सारश्चरणमेव, अथवा व्यवहितः सम्बन्धः, तस्य सारश्चरणमपि, अ-पिशब्दान्निर्वाणमपि, अन्यथा ज्ञानस्य निर्वाणहेतुत्वं न स्यात्, चरणस्यैव च ज्ञानरहितस्य स्यात्, अनिष्टं चैतत्, सम्यग्दर्शनादि-त्रयान्मोक्षाभ्युपगमात्, इह त्वनन्तरफलत्वाच्चरणस्य तदुपलब्धिनिमित्तत्वाच्च श्रुतस्य निर्वाणहेतुत्वसामान्ये सत्यपि ज्ञानचरणयोर्गुणप्र-धानभावादित्ययमुपन्यास इति गाथार्थः ॥११३१॥ 'सोउ'मित्यादि। अथवा 'सोउं सुयमन्नवं दुग्गेज्झं' (श्रुतस्य)महत्त्वादपरिमितत्वा-दायुषः स्वतश्च जडत्वात् सारमात्रकमस्य ग्रहीष्य इतिकृत्वा तत्पृच्छति शिष्यः–कोऽस्य सारः?, गुरुर्भणति–चरणं, अपृष्ट एवाह–तस्या-पि मोक्षमात्र‍मिति गाथार्थः ॥११३२॥ अत्र दृढमूढतया परस्तस्यापि सारश्चरणमित्यक्षमन्नाह–'अण्णाणओ' इत्यादि। अण्णाणओ हयत्ति किरिया, अकिरियाओवि हयं नाणं' तिकृत्वा ज्ञानक्रियाभ्यां निर्वाणं भणितं भगवता' 'तो किह नाणस्स चरणं सारो तं तु नाणं असार'मित्युच्यते। नन्क्तं सारशब्दः प्रधानफलपर्यायवचन इति, तत्रैतत्स्याद्–एतदेव न क्षम्यत इत्यत आह–'चरणे'त्यादि 'गत्' यस्मात् ज्ञानं त(स्य चरणलाभ)स्य कारणं चरण(लाभश्च) निर्वाणस्य, साक्षात्कारणत्वात्, तेन कारणेनास्य सारश्चरणं, कोऽत्र

भावार्थ इत्यत आह, अथवेहोभयसंयोगान्मोक्ष इत्यत्रोच्यते-प्रधानभावश्च गुणभावश्च सवत्तस्माद् 'भणितं' उक्तं 'चरणं' मोक्षकारणं मूलगाथायामित्युत्तरोत्तरप्राधान्येन पूर्वपूर्वगुणभावादिति गाथार्थः ॥११३३-४॥ अपिच ज्ञानवादिन् ! 'नाण'मित्यादि। यस्माज्जीवगृहकर्मकचवरविशुद्धौ कर्त्तव्यायां ज्ञानं प्रकाशमात्रकरणेनोपकुरुते, द्रव्यगृहरजोविशुद्धौ प्रदीपवत्, चरणं च यस्माद् गुप्तिविशुद्धिफलं, गुप्तिश्च विशुद्धिश्च फलं च गुप्तिविशुद्धफलानि तानि यस्मिन् सन्ति तद् गुप्तिविशुद्धिफलं, गुप्तिः-सप्तदशविधः संयमो विशुद्धिर्बाह्याभ्यन्तरतपःफला निर्जरा, ततः किमित्यत आह-मोक्षः क्रियाधीनः-संवरनिर्जरायत्तस्तत एवमिति गाथार्थः ॥११३५॥ एवं तावत्क्षायोपशमिकभावमङ्गीकृत्योक्तं, अथ क्षायिकमप्यङ्गीकृत्याह-'जं'मित्यादि। अथवा जं सव्वनाणलाभानन्तरं न मुच्यते सर्व एव प्राणी कर्मणा, मुच्यते च सर्वसंवरलाभे ततोऽसावेव संवरः प्रधानतरः, केवलज्ञानानन्तरं मोक्षानवाप्तेः। तथाहि-'लाभेऽवी' त्यादि। संवरस्तु प्रधानस्तद्भावभावित्वान्मोक्षस्य, अत एव शुद्धनयाः संवरमेव निर्वृतिमाहुः, कारणे कार्योपचाराद्, अत्यन्तप्रत्यासत्तेः, नतु ज्ञानं, व्यवहितत्वादिति गाथार्थः ॥११३६-३७॥

आह पहाणं नाणं न चरित्तं नाणमेव वा सुद्धं। कारणमिह न उ किरिया सावि हु नाणप्फलं जम्हा ॥११३८॥
जइ सा नाणस्स फलं तह सेसंपि तह थोवकालेऽवि। नेयपरिच्छेयमयं रागादिविणिग्गहो जो य ॥११३९॥
जं च मणोचिंतियमंतपूयविसभक्खणाइ बहुभेयं। फलमिह तं पचक्खं किरियारहियस्स नाणस्स ॥११४०॥
जेणं चिय नाणाओ किरिया तत्तो फलं च तो दोऽवि। कारणमिहरा किरियारहियं चिय तं पसाहेज्जा ॥११४१॥
नाणं परंपरमणंतरा उ किरिया तयं पहाणयरं। जुत्तं कारणमहवा समयं तो दोन्नि जुत्ताइं ॥११४२॥

नाणं पयासयं चिय गुत्ति-विसुद्धिप्फलं च जं चरणं। मोक्खो य दुगाहीणो चरणं नाणस्स तो सारो ॥११३५॥
जं सव्वनाणलाभाणंतरमहवा न मुचए सव्वो। मुच्चइ य सव्वसंवरलाभे तो सो पहाणयरो ॥११३६॥
लाभेऽवि य जस्स मोक्खो न होइ जस्स य स होइ स पहाणो। एवं चिय सुद्धनया नेव्वाणं संजमं बेंति ॥११३७॥

'सामाइये'त्यादि। सामायिकमादिर्यस्य तत्सामायिकादि 'जाव बिंदुसाराओ' बिन्दुसारपर्यन्तं, यावच्छब्दाद् 'द्व्यनेकद्वादशभेद'-मिति गम्यते, तस्यापि श्रुतज्ञानस्य सारः-फलं चरणं-चारो, भावे ल्युट्प्रत्ययः, चर्यते वाऽनेनेति चरणं, परमपदं गम्यत इत्यर्थः, सारशब्दः प्रधानफलपर्यायो वर्त्तते, अपिशब्दात्सम्यक्त्वस्यापि सारश्चरणमेव, अथवा व्यवहितः सम्बन्धः, तस्य सारश्चरणमपि, अपिशब्दान्निर्वाणमपि, अन्यथा ज्ञानस्य निर्वाणहेतुत्वं न स्यात्, चरणस्यैव च ज्ञानरहितस्य स्यात्, अनिष्टं चैतत्, सम्यग्दर्शनादित्रयान्मोक्षाभ्युपगमाद्, इह त्वनन्तरफलत्वाच्चरणस्य तदुपलब्धिनिमित्तत्वाच्च श्रुतस्य निर्वाणहेतुत्वसामान्ये सत्यपि ज्ञानचरणयोर्गुणप्रधानभावादित्थमुपन्यास इति गाथार्थः ॥११३१॥ 'सोउ'मित्यादि। अथवा 'सोउं सुयन्नवं दुग्गेज्झं' (श्रुतस्य)महत्त्वादपरिमितत्वादायुषः स्वतश्च जडत्वात् सारमात्रकमस्य ग्रहीष्य इतिकृत्वा तत्पृच्छति शिष्यः-कोऽस्य सारः ?, गुरुर्भणति-चरणं, अपृष्ट एवाह-तस्यापि मोक्षमानकमिति गाथार्थः ॥११३२॥ अत्र दृढमूढतया परस्तस्यापि सारश्चरणमित्यक्षमन्नाह-'अण्णाणओ' इत्यादि। अण्णाणओ हयत्ति किरिया, अकिरियाओत्ति हयं नाणं' तिकृत्वा ज्ञानक्रियाभ्यां निर्वाणं भणितं भगवता' 'तो किह नाणस्स चरणं सारो तं तु नाणं असार'मित्युच्यते। नन्वुक्तं सारशब्दः प्रधानफलपर्यायवचन इति, तत्रैतत्स्याद्-एतदेव न क्षम्यत इत्यत आह-'चरणे'त्यादि 'यत्' यस्मात् ज्ञानं त(स्य चरणलाभ)स्य कारणं चरण(लाभश्च) निर्वाणस्य, साक्षात्कारणत्वात्, तेन कारणेनास्य सारश्चरणं, कोऽत्र

भावार्थं इत्यत आह, अथवेहोभयसंयोगान्मोक्ष इत्यत्रोच्यते–प्रधानभावश्च गुणभावश्च सतस्तस्माद् 'भणितं' उक्तं 'चरणं' मोक्षकारणं मूलगाथायामित्युत्तरोत्तरप्राधान्येन पूर्वपूर्वगुणभावादिति गाथार्थः ॥११३३–४॥ अपिच ज्ञानवादिन्! 'नाण'मित्यादि। यस्माज्जीवगृहकर्मकचवरविशुद्धौ कर्त्तव्यायां ज्ञानं प्रकाशमात्रकरणेनोपकुरुते, द्रव्यगृहरजोविशुद्धौ प्रदीपवत्, चरणं च यस्माद् गुप्तिविशुद्धिफलं, गुप्तिश्च विशुद्धिश्च फलं च गुप्तिविशुद्धफलानि तानि यस्मिन् सन्ति तद् गुप्तिविशुद्धिफलं, गुप्तिः–सप्तदशविधः संयमो विशुद्धिर्बाह्याभ्यन्तरतपःफला निर्जरा, ततः किमित्यत आह–मोक्षः द्वयाधीनः–संवरनिर्जरायत्तस्तत एवमिति गाथार्थः ॥११३५॥ एवं तावत्क्षायोपशमिकभावमङ्गीकृत्योक्तं, अथ क्षायिकमप्यङ्गीकृत्याह–'जं'मित्यादि। अथवा जं सव्वनाणलाभानन्तरं न मुच्यते सर्व एव प्राणी कर्मणा, मुच्यते च सर्वसंवरलाभे ततोऽसावेव संवरः प्रधानतरः, केवलज्ञानानन्तरं मोक्षानवाप्तेः। तथाहि–'लाभेऽवी' त्यादि। संवरस्तु प्रधानस्तद्भावभावित्वान्मोक्षस्य, अत एव शुद्धनयाः संवरमेव निर्वृतिमाहुः, कारणे कार्योपचारात्, अत्यन्तप्रत्यासत्तेः, नतु ज्ञानं, व्यवहितत्वादिति गाथार्थः ॥११३६–३७॥

आह पहाणं नाणं न चरित्तं नाणमेव वा सुद्धं। कारणमिह न उ किरिया सावि हु नाणप्फलं जम्हा ॥११३८॥

जइ सा नाणस्स फलं तह सेसंपि तह वोहकालेऽवि। नेयपरिच्छेयमयं रागादिविणिग्गहो जो य ॥११३९॥

जं च मणोचिंतियमंतपूयविसभक्खणाइ बहुभेयं। फलमिह तं पच्चक्खं किरियारहियस्स नाणस्स ॥११४०॥

जेणं चिय नाणाओ किरिया तत्तो फलं च तो दोऽवि। कारणमिहरा किरियारहियं चिय तं पसाहेज्जा ॥११४१॥

नाणं परंपरमणंतरा उ किरिया तयं पहाणयरं। जुत्तं कारणमहवा समयं तो दोसि जुत्ताइं ॥११४२॥

कारणमंतं मोत्तुं किरियमणंतं कहं मयं नाणं? । सद्दचारित्ते व कहं कारणमेक्कं न पुणरेक्कं ? ॥११४३॥
रागाइसमो संजमकिरियच्चिय नाणकारणा होज्जा । तीसे फले विवाओ तं तत्तो नाणसहियाओ ॥११४४॥
परिजयणाई किरिया मंतेसुवि साहणं न तम्मत्तं । तण्णाणओ य न फलं तं नाणं जेणमक्किरियं ॥११४५॥
तो तं कत्तो ? भण्णइ तं समयनिबद्धदेवओवहियं । किरियाफलं चिय जओ न मंतनाणोवओगस्स ॥११४६॥
वत्थुपरिच्छेयफलं हवेज्ज किरियाफलं च तो नाणं । न उ निव्वत्तयमिट्ठं सुद्धं च्चिय तं जओऽभिहियं ॥११४७॥
सुयनाणम्मिवि जीवो वट्टंतो सो न पाउणइ मोक्खं । जो तवसंजममइए जोगे न चएइ वोढुं जे । नि. ९४ ।
भ किरियाविरहाओ इच्छियसंपावयं न नाणंति । मग्गण्णू वाऽचेट्ठो वायविहीणोऽहवा पोओ ॥११४९॥
जह छेयलद्धनिज्जामओऽवि वाणियग इच्छियं भूमिं । वाएण विणा पोओ न चएइ महण्णवं तरिउं ।नि.९५।
तह नाणलद्धनिज्जामओऽवि सिद्धिवसहिं न पाउणइ।निउणोऽवि जीवपोओ तवसंजममारुयविहूणो ।नि.९६
संसारसागराओ उब्बुड्डो मा पुणो निबुड्डेज्जा । चरणगुणविप्पहूणो वुड्डइ सुबहुंपि जाणंतो ।११५२। नि. ९७
संसारसागराओ कुम्मो इव कम्मचम्मविवरेण । उम्मज्जिउमिह जइणं नाणाइपगासमासज्ज ॥११५३॥
बुलहंपि जाणमाणो सयणसिणेहाइणा तयं चत्तो । संजमकिरियारहिओ तत्थेव पुणो णिवुड्डेज्जा ॥११५४॥
आहऽण्णाणी कुम्मो पुणो निमज्जेज्ज न उण तन्नाणी । सकिरियापरिहीणो वुड्डइ नाणी जहऽन्नाणी ॥११५५॥

नेच्छइ पनयमएण य अन्नाणी चेव सो मुणंतोऽवि। नाणफलाभावाओ कुम्मो व निवुड्ड भवोहे ॥११५६॥

सुबहुंपि सुयमहीयं किं काही चरणविप्पहूणस्स। अंधस्स जह पलित्ता दीवसयसहस्सकोडीवि ?। नि. ९८।

सुबहुंपि सुयमहीयं किं काही चरणविप्पहूणस्स। सक्किरियापरिहीणं अंधस्स पईवकोडिव्व ॥११५८॥

संतंपि तमण्णाणं नाणफलाभावओ सुबहुयंपि। सक्किरियापरिहीणं अंधस्स पईवकोडिव्व ॥११५८॥

अंधोऽणयचोह्नोचिय चोहफलं पुण सुयं किमण्णाणं ?। थोह्नोऽवि तओ विफलो तस्स जमंधस्स वऽचयोहो ।११५९।

अप्पंपि सुयमहीयं पगासयं होइ चरणजुत्तस्स। एक्कोऽवि जह पईवो सचक्खुअस्सा पयासेइ। नि. ९९।

किरियाफलसंभवओ अप्पंपि सुयं पगासयं होइ। एक्कोऽवि हु चक्खुमओ किरियाफलदो जह पईवो ॥११६१॥

नहि नाणं विफलं चिय किलेसफलयंपि चरणरहियस्स। निप्फलपरिवहणाओ चंदणभारो खरस्सेव ॥११६२॥

जहा खरो चंदणभारवाही भारस्स भागी नहु चंदणस्स। एवं खु नाणी चरणेणहीणो नाणस्स भागी नहु सुग्गईए

हयं नाणं कियाहीणं, हया अन्नाणओ किया। पासंतो पंगुलो दड्ढो, धावमाणो य अंधओ ॥११६४॥ नि. १०१।

हयमिह नाणं किरियाहीणंति जओ हयंति जं विफलं। लोयणविन्नाणंपिव पंगुस्स महानगरदाहे ॥११६५॥

काहिइ नाणचायं किरियाए चेव मोक्खमिच्छंतो। मा सीसो तो भन्नइ हया य अन्नाणओ किरिया ॥११६६॥

अइसंकडपुरदाहम्मि अंधपरिधावणाइकिरियव्व। तेणंऽन्नोन्नावेक्खा साहणमिह नाणकिरियाओ ॥११६७॥

पत्तेयमभावाओ निव्वाणं समुदियासुऽवि न जुत्तं। नाणकिरियासु वोत्तुं सिकतासमुदायतेल्लं व ॥११६८॥

वीरुं न सव्वहविय सिक्कातेहिं च साहणाभावो। देसोवगारिया आ सा समवायम्मि संपुण्णा ॥११६९॥
संजोगसिद्धीइ फलं वयंति, नहु एगचक्केण रहो पयाइ। अंधो य पंगू य वणे समेच्चा, ते संपउत्ता नगरं पविट्ठा॥
जुगसंजोगम्मि फलं सम्मंकिरिओवलद्धिभावाओ। इट्ठपुरागमणंपिव संजोए अंधपंगूणं ॥११७१॥
वइरेगो जं विफलं न तत्थ सम्मकिरिओवलद्धीओ। दीसंति गमणविगले जहेगचक्के भुवि रहम्मि ॥११७२॥
महकारित्ते तेसिं किं केणोवकुन्ते सहावेणं?। नाणचरणाणमहवा सहावनिद्धारणमियाणिं ॥११७३॥
नाणं पयासयं सोहओ तवो संजमो य गुत्तिकरो। तिण्हंपि समाओगे मोक्खो जिणसासणे भणिओ ॥नि.१०३
असहायमसोहिकरं नाणमिह पगासमेत्तभावाओ। सोहेइ घरकयारं जह सुपगासोऽवि न पईवो ॥११७५॥
न य सव्वविमोहिकरी किरियावि अमयगासधम्मा सा। जह न तमोगेहमलं नरकिरिया सव्वहा हरइ ॥११७६॥
दीवाइपयासं पुण सकिरियाए विसोहिए कयारं। संवरियकयारागमदारं सुद्धं घरं होइ ॥११७७॥
तह नाणदीवविमलं तवकिरियासुद्धकम्मयकयारं। संजमसंवरियसुद्धं जीवघरं होइ सुविसुद्धं ॥११७८॥
संजमतवोमई जं संवरनिज्जरफला मया किरिया। तो तिगसंजोगोऽवि हु ताउच्चिय नाणकिरियाओ ॥११७९॥

'आहे' इत्यादि। ज्ञाननय आह, ननु च प्रधानं-सारः चारित्रस्य ज्ञानमेव, न तु चारित्रं, मूलत्वात्, अथवा ज्ञानमेव शुद्धमसहायं कारणमिह, मोक्षस्येति प्रकृतं, अनभिमतप्रतिषेधमाह-न तु क्रिया, किमित्यत आह-असावपि मोक्षफला क्रिया, यस्मात् 'ज्ञान-

ज्ञानक्रिययोः सापेक्षतासिद्धिः ॥३४८॥

शैलेश्यवस्थाया अपि कारणीभवत्येव, यथा मृद् घट-
फलमेव' ज्ञानकार्यमेव मोक्षवत्, तथाहि–ज्ञानं मोक्षस्य कारणीभवदपान्तरालवत् शैलेश्यवस्थाया अपि कारणीभवत्येव, यथा मृद् घट-
फलमेव' ज्ञानकार्यमेव मोक्षवत्, तथाहि–ज्ञानं मोक्षस्य कारणीभवदपान्तरालवत् इत्यादि। यथाऽसौ क्रिया ज्ञानस्य कारणस्य 'फलं' कार्यं तथा शेषमपि क्रियाकार्यं
स्य मृत्पिण्डादीनामपि । तथा च–'जह सा' इत्यादि। यथाऽसौ क्रिया ज्ञानस्य कारणस्य 'फलं' कार्यं तथा शेषमपि क्रियाकार्यं
मोक्षाख्यं ज्ञानफलमेव, यथा हि मृदो मृत्पिण्डः फलमेवं तत्फलोऽपि घटः, तथा बोधकालेऽपि ज्ञेयपरिच्छेदात्मकमात्मरूपकं ज्ञा-
नस्यैव फलं तदन्तरेण तद्भावात्, 'यश्च' रागादिविनिग्रहः स चेति गाथार्थः ॥११३८–९॥ 'जं चे'त्यादि। यच्च मनश्चिन्तितमन्त्रपूत-
विषभक्षणनभोगमनादि बहुभेदमिह फलं दृश्यते तत्प्रत्यक्षसिद्धं, क्रियारहितस्यैव ज्ञानस्य फलमिति। एवमदृष्टमपि मोक्षाख्यं वस्तु
ज्ञानस्यव फलमिति पूर्वपक्षः। 'जेण' मित्यादि। यत एव ज्ञानात् क्रिया जायते 'ततः' क्रियातश्च 'फलं' मोक्षाख्यं 'तो' त्ति
अत एव द्वे अपि कारणमिति ब्रूमः, इतरथा 'क्रियारहितमेव' क्रियानिरपेक्षमपि तत् ज्ञानं प्रसाधयेत् मोक्षं, क्रियामिवेति गाथार्थः
॥११४०–१॥ यदि नाम–'नाण'मित्यादि। ज्ञानं व्यवहितकारणं क्रिया त्वनन्तरकारणमतस्तत् क्रियानुष्ठानं प्रधानतरं युक्तं
कारणं मोक्षस्य, अथ चेत्सकं कारणं विवक्षया ततो द्वे अपि युक्ते, न युक्तमप्राधान्यं क्रियाया इति गाथार्थः ॥११४२॥ अपिच
ज्ञानमोक्षवादिन्! 'कारण'मित्यादि। क्रियामन्त्यं कारणं मुक्त्वाऽनन्त्यं कथं मतं मोक्षकारणं?, सहचारित्वं चेदुच्यते–सहे-
त्यादि स्पष्टं॥११४३॥ यच्चाभ्यधायि–'रागादिविनिग्गहो जो य'त्ति तदधिकृत्याह–'रागादी'त्यादि। रागादिप्रशमः संयम-
क्रियैव, नान्यत्किञ्चित्, सा च बहुव्रीहिन्यायेन 'ज्ञानकारणा' ज्ञानफला स्यादित्युच्चैरिदमभिदध्महे, किन्तु 'तीसे' किरियाए 'फले'
शान्तौ विवादः, तथाहि–तन्मोक्षफलं किं? ततः क्रियाया उत ज्ञानसहिताचरणादित्यत्र विचारः, तत्र वयं ब्रूमो–ज्ञानसहितायाः क्रि-
यायाः, न तु ज्ञानमात्राद्रागादिशमक्रियावदिति व्यतिरेकीति गाथार्थः ॥११४४॥ यच्चोक्तं 'जचे' त्यादि, अत्रोच्यते–'परी' त्यादि।

'मंतेसुवि' त्ति मन्त्रज्ञानेष्वपि विषनिर्घातं कुर्वत्सु सत्सु परिजपनादिक्रिया विद्यत एव यत् सहायं तत्करोतीति न 'तन्मात्रं' ज्ञानमात्रं तत्करोति, तत्रैतत्स्यात्, प्रत्यक्षविरुद्धमेतत्, क्वचिज्ज्ञानमात्रादेव फलदर्शनाद्, अत्रोच्यते, मन्त्रज्ञानादेव न फलं नभोगमनादि, नहि 'तज्ज्ञानं' साक्षात्फलमुपाहरदुपलक्ष्यते, मन्त्रज्ञानस्याक्रियत्वात्ः, कथञ्चिदिति शेषः, ततश्चावबोधमात्रशक्तिकं ज्ञानमात्रमित्यर्थः, तथा चोक्तम्-"न योषिद्भक्ष्यभोगज्ञो, ज्ञानमात्रात्सुखी भवेत्।" प्रयोगः-ज्ञानमात्रं विवक्षितफलसाधनायालं न भवति, अक्रियत्वात् आकाशवत्, व्यतिरेकेण कुलाल इति गाथार्थः ॥११४५॥ आह-यद्येवम्-'तो' इत्यादि। ततस्तत् प्रत्यक्षसिद्धं नभोगमनादिकार्यं कुतः ?, उच्यते, भवानेवात्र प्रष्टव्यो य एवमाह, न चेत् ज्ञायते भण्यते-तत्कार्यं मन्त्राक्षरपरिपाटीनिबद्धदेवताप्रसादजनितं, सा न क्रिया, तत्फलमेव तदितिगाथार्थः ॥११४६॥ अत्राधिकृतभावार्थप्रतिपादनव्याजेनोपसंजिहीर्षुराह-'वत्थु'इत्यादि। 'तो' ततः पारिशेष्यात् ज्ञानं वस्तुपरिच्छेदः फलं यस्य सकललोकालोकनिर्भेदलक्षणस्तत्तयोच्यते, स्यादेतद् अनेनांशेन सक्रियं-भोग्यं, एतदवबोधादिति, तदनन्तरं क्रियाफलं च स्यात्, तद्भोगादिति भावार्थः, न तु स्वतन्त्रमेव जनकमिदं मोक्षस्येति, अत्र स्वमनीषिकां परिहरन्नाह यतो भणितं भगवता ॥११४७॥ किं भणितमित्यत आह-'सुयनाणम्मिवी' त्यादि। स जीवः श्रुतज्ञाने अपिशब्दान्मतिज्ञानादिष्वपि वर्त्तमानो न मोक्षं प्राप्नोतीति पक्षः, क्षायोपशमिकत्वादिति स्वयमूचितो हेतुः, अवधिज्ञान इवेत्युपरिष्टाद्वक्ष्यति, कोऽयमित्यत आह—यस्तपःसंयमात्मकान् योगान् न शक्नोति वोढुमित्यनेन हेत्वर्थः सूचितो, दृष्टान्तस्त्वभ्यूह्य इति गाथार्थः ॥११४८॥ अथैतद्व्याख्यानार्थमुत्तरग्रन्थसम्बन्धनार्थं च प्रयोगमाह—'सक्री' त्यादि। ज्ञानमात्रमभीप्सितार्थप्रापकं न भवति, सत्क्रियाशून्यत्वात्, मार्गज्ञाचेष्टवत्, सद्वातप्रेरणहीनयानपात्रवद्वेति गाथार्थः ॥११४९॥ सौत्रमेव दृष्टान्तमाह—'जहे'त्यादि।

'तहे' त्यादि, सुचर्चम् ॥११५०-१॥ तस्माच्चरित्रेऽप्रमादवता भवितव्यं येन 'संसारे'त्यादि। संसारसागराद् ह्रदादिव कूर्मः 'उच्चुड्ड' उन्मग्नः कथञ्चित्काकतालीयन्यायात् मा पुनः भूयोऽपि तत्रैव निमज्जेत्। नन्वज्ञान्यसावित्यत आह–'चरणे'त्यादि स्पष्टम् ॥११५२॥ 'संसारे'त्यादि ॥ अत्र भावार्थः–जहा हरदो तहा संसारसागरो, जहा तस्स कहंचि चम्मविवरं तहा कम्मविवरं, जहा कुम्मो तहा जीवो, जहा तस्स उम्मज्जणं तहा जीवस्स सुमाणुसत्तलाभो, जहा तस्स कौमुदीचन्द्रप्रकाशप्राप्तिस्तथा जीवस्स जिनधर्मप्राप्तिः, जहा सो तयं दुलभंपि जाणमाणो तओ सयणसिणेहाइणा हेउणा मोहिओ तत्थ पडिवज्जइ, एवं एसोऽवि नाणी नियं सयणं छड्डेउं परजणमत्तणीकरेइ, अतः प्रतिषेधोऽभिधीयते–मैवं कार्षीः, तथा च संयमक्रियारहितस्तत्रैव–यतो निर्गतस्तत्रैव निमज्जेन्नात्र सन्देह इति, इतिगाथार्थः ॥११५३-४॥ 'आहे'त्यादि स्पष्टा ॥५५॥ अथवा–'नेच्छई'त्यादि स्पष्टा ॥५६॥ अतः स्थितमेतत्–'सु' इत्यादि ॥ संतंपी'त्यादि। 'सदपि' अधीतमपि, शेषं स्पष्टम् ॥११५७-८॥ चोदक आह–'अंधो'इत्यादि ॥ 'अन्धः' अज्ञ एव आलोकावबोधशून्यत्वात् कूर्मवत्, श्रुतं तु किमज्ञानं ?, बोधफलत्वात्, चक्षुष्मत्प्रदीपवत्, उच्यते, तस्यासौ बोधोऽपि यस्मादबोध एव, हिताहितविवेकशून्यत्वेन विफलत्वादन्धस्येवेति गाथार्थः ॥११५९॥ व्यतिरेकमाह–'अप्पंपी'त्यादि, ॥६०। 'किरिया'इत्यादि, स्पष्टम् ॥६१॥ अपि च–'णाही'त्यादि ॥६२॥ 'जहा'इत्यादि ॥६३॥ तस्मात्–'हय'मित्यादि ॥६४॥ 'हये'त्यादि ॥६५॥ 'काहिई'त्यादि ॥६६॥ किंनदित्याह–'अई'त्यादि ॥ तेनेति तेन कारणेनान्योऽन्यापेक्षे सत्यौ ज्ञानक्रिये साधनमित्युभयोः संयोगे मोक्ष इति ॥६७॥ प्रक्रम आह–'पत्तेये'त्यादि, स्पष्ट ॥६८॥ उच्यते–'वीसु' मित्यादि व्यतिरेकी दृष्टान्तः ॥६९॥ आह च–'संजोग' इत्यादि ॥७०॥ 'दुग' इत्यादि ॥ 'दुगं' णाणकिरियाओ ॥७१॥ 'वइरेओ' इत्यादि ॥७२॥ उत्तरगाथामम्बन्धनार्थमाह–'सहे' त्यादि ॥७३॥

'तेसि'न्ति पाणचरणाणं ॥ 'नाण' मित्यादि, सुचर्चा ॥७४॥ 'असहाय' मित्यादि ॥७५॥ 'न ये'त्यादि ॥७६॥ तमःप्रधानं गृहं तमोगृहं तस्मिन् मलमिति ॥ 'तहे'त्यादि स्पष्टम् ॥७७॥ आह–एवं द्वयकारणाभ्युपगमविरोधः ?, उच्यते–'संजम' इत्यादि ७८ ॥ 'जं'ति यतः 'किया' चारित्रात्मिका एकैव सती संयमतपोमयी मता, किंविशिष्टेत्यत आह–संवरनिर्जरफला यथासंख्यमिति, शेषं स्पष्टम् । आह–एवमपि 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः (तत्त्वा० अ० १ सू० १) इति विरुध्येत, सम्यग्दर्शनसाधनानभ्युपगमात्, तत्र केचित्परिहारं व्यावर्णयन्ति 'पूर्वस्य लाभे भजनीयमुत्तरं, उत्तरलाभे तु नियतः पूर्वलाभः' (१-१ तत्त्वा० भाष्यं) इति न्यायेनोत्तरग्रहणे पूर्वग्रहणमेवेति न विरोधः, अत्रोच्यते–नायं न्यायो ज्यायान्, क्रियामात्रग्रहणप्रसङ्गात्, क्रियालाभे चाद्यद्वयलाभात्, अपिच–नायमागमिकः, ज्ञानशून्यसम्यक्त्वादर्शनाद्, अनवबुद्धे श्रद्धानायोगात्, इतश्च न सम्यग्दृष्टिरतः 'सम्यग्दृष्टेर्मतिर्मतिज्ञान' मित्येवमादिवचनात्, यथाहुः–न निसर्गसम्यग्दर्शनलाभकाले श्रुतमस्ति किल परोपदेशाभावात्, तदपि न मृष्यते, परोपदेशत्वेन शब्दस्य द्रव्यश्रुतमात्रत्वाद्, द्रव्यश्रुतस्य चानधिकृतत्वाद्, भावश्रुतस्य चाधिकृतत्वात्, तस्य च 'सम्मद्दिट्ठिस्स सुयं सुयनाण' मिति वचनेनानिषिद्धत्वात्, मतिज्ञानसद्भावाच्च, मतिज्ञानस्य च श्रुतज्ञानाशून्यत्वात्, 'जत्थ मतिनाणं तत्थ सुयनाणं' ति वचनात्, पारिशेष्यात् ज्ञानविशेष एव सम्यक्त्वमिति ज्ञानग्रहणादवरुध्यते, न लाभक्रमनियमात्, कथं पुनः ?, उच्यते, यथा बोधात्मिकाया मतेरनाकारत्वादवग्रहेहे दर्शनं, साकारत्वाच्चापायधारणे ज्ञानं, एवं व्यवसायात्मकत्वेऽप्यस्य श्रद्धानावगमतोऽध्यवसायभेदेन सम्यक्त्वज्ञानलक्षणो भेद इति सुष्ठूच्यते–'नाणं पगासय' मित्येवमादीति गाथार्थः ॥११७९॥ अथ पौर्वापर्येणोत्तरगाथासम्बन्धनार्थममुं प्रपञ्चेनाह–

न लहइ सिवं सुयम्मिवि वट्टंतो अचरणोत्ति जं तस्स। हेऊ खओवसमओ जह वट्टंतोऽवहिण्णाणे ॥११८०॥
सक्किरियम्मिवि नाणे मोक्खो खइयम्मि न उ खओवसमे। सुत्तं च खओवसमे न तम्मि तो चरणजुत्तेऽवि।११८१।
जं सुयचरणेहिंतो खाइयनाणचरणाणि लब्भंति। तत्तो सिवं सुयं तो सचरणमिह मोक्खहेउत्ति ॥११८२॥
आह य निज्जिण्णे च्चिय कम्मे नाणंति किं त्थ चरणेणं ?। न सुयं खयओ केवलनाणचरित्ताइं,खइयाइं ॥११८३॥
तेसु य ठियस्स मोक्खो तो सुयमिह सचरणं तदट्ठाए। तं किह मीसं खइयं च केवलं जं सुएऽभिहियं ॥११८४॥
भावे खओवसमिए दुवालसंगंपि होइ सुयनाणं। केवलियनाणलंभो नण्णत्थ खए कसायाणं (नि. १०४)
सव्वंपि किमुय देसो केवलवज्जाणि वाचिसद्देणं। चत्तारि खओवसमे सामइयाइं च पाएणं ॥११८६॥
सव्वकसायावगमे केवलमिह नाण-दंसण चरित्तं। देसक्खए वि सम्मं धुवं सिवं सव्वखइएसुं ॥११८७॥

'न लभे'त्यादि॥ 'न लभइ सिवं' न पाउणइ मोक्खं 'सुयम्मिवि वट्टंतो' सुयनाणंमिवि वट्टंतो सो अचरणोत्ति 'जं'ति जं भणियं पूर्वं 'तस्स'त्ति तस्य पक्षत्वात्कारणाद्धेतुर्वक्तव्यः, स चायं 'खयोवसमयो'त्ति तस्य क्षायोपशमिकत्वाद् अवधिज्ञान इवेति दृष्टान्तः, आह–सचरणेऽपि ज्ञाने मा प्राप्नोतु तत एव हेतोस्तद्वत्, उच्यते, सत्यमेवं, किन्तु–'सक्की'त्यादि ॥ सक्रियेऽपि ज्ञाने मोक्षो भवति क्षायिके, क्षपकश्रेण्युत्तरकालभाविज्ञानचरणाभ्यामित्यर्थः, न तु क्षायोपशमिके, ततः किमित्यत आह–सूत्रं च–श्रुतज्ञानं च क्षायोपशमिके भावे पठ्यते ततस्तस्मिंश्चरणसहितेऽपि सति न मोक्ष इति गाथार्थः ॥११८०–१॥ आह–यद्येवं ततो यदादावुक्तं 'सुयनाणंमिवि जीवो वट्टंतो सो न पाउणइ मोक्खं'ति एतन्न वक्तव्यं, अत्यन्तासंभवेन विवक्षाया अप्यप्रवृत्तेः, उच्यते, साक्षात्प्रतिषेधो, न

पारंपर्येणेति, आह च-'ज' मित्यादि ॥ 'यत्' यस्माच्छ्रुतचरणयोर्मिश्रयोः क्षायिके ज्ञानचरणे लभ्येते, तयोश्च शिवं लभ्यते आनन्तर्येणेति गम्यते। प्रकृतोपसंहारमाह-'तो' ततः श्रुतं सचरणमिह मोक्षहेतुः पारम्पर्येणेति गम्यते, अतो युक्तोऽमायुपन्यास इति गाथार्थः ॥११८२॥ आह-कुतोऽयं हेतुः प्रामाणिकः? इत्यत आह-'भावे खओवसमिए'इत्यादि, अहवाऽपरं सम्बन्धमाह-'आह' इत्यादि ॥ अथवाऽऽह-अनन्तरगाथायां त्रयाणामपि समायोगे मोक्ष इत्युक्तं, तच्चायुक्तं, यतः-'निच्छिन्ने च्चिय कम्मे णाणं'ति परिक्षीण एव कर्मणि ज्ञानलाभो, नोदिते, अतः किमत्र चरणेन?, एतदुक्तं भवति-यथा कर्मक्षयाज्ज्ञानं जातं एवं मोक्षोऽपि भविष्यति किं चारित्रेणेति?, उच्यते, न सुयं खयदो, यदा त्वेवं तदा क्वेदं भवितुं युज्यते?, किन्तु केवलज्ञानचरणे क्षायिके कर्मनिर्जरणानन्तरमुत्पत्तेः ॥८३॥ ततः किमित्यत आह-'तेसु'इत्यादि ॥ तयोश्च स्थितस्य मोक्षो इटः तो सुयमिह सचरणं तदट्ठाए, क्षायिकद्वयार्थमाद्रियते, तत्र च वर्त्तमानो न प्राप्नोतीत्युक्तं, पृच्छति-तत्कथं?, श्रुतं मिश्रं-क्षायोपशमिकं क्षायिकं केवलं चारित्रं च?, उच्यते-यतः श्रुतेऽभिहितम्? ॥८४॥ 'भावे'इत्यादि। भवनं भवतीति वा भावः, स चौदयिकादिरपि स्यादत आह-'क्षायोपशमिके' प्राग्निरूपितशब्दार्थे 'श्रुतज्ञानं' श्रुतं 'भवति' वर्त्तते, किंविशिष्टमित्याह-द्वादश अङ्गानि यस्मिन्निति तद् द्वादशाङ्गं, अपिशब्दादङ्गबाह्यमपि, अथवा मत्यादित्रयमपि, अथवा सामायिकचतुष्टयमपि, किं तर्हि क्षायिकमित्यत आह-केवलभावः कैवल्यं-घनघातिकर्मविरहस्तस्मिन् ज्ञानं कैवल्यज्ञानं तस्य लाभ इति विग्रहः, स क्षय एव कषायाणां स्यात्, 'नण्णत्थ'त्ति नान्येन प्रकारेणेत्यर्थः ॥८५॥ 'सव्वंपी'त्यादि ॥ सर्वमपि आस्तां तावद्देश इति, शेषं स्पष्टम् ॥८६॥ पश्चार्द्धव्याचिख्यासयाऽऽह-'सव्वे'त्यादि ॥ त्रीण्यप्येतानि षोडशकषायक्षये, देशक्षयेऽप्यनन्तानुबन्ध्यादिलक्षणे सम्यक्त्वलाभो भवति, 'धुवं' निश्चितं 'शिवं' निर्वाणं 'सव्वखइएसु' षोडशस्वपि

क्षीणेषु, केवलवदिति गाथार्थः ॥११८७॥ अथ यदुक्तं 'चत्तारि खयोवसम'इत्यादि तदधिकृत्य प्रश्नद्वारेणोत्तरगाथाघटनार्थमिदमाह–

कहमेयाणमलाभो ? लाभो व ? कमो ? तदावरणया वा ?। आवरणखओवसमो समो खओ वा कहं कस्स ? ॥११८८॥

अहवा तवाइमइयं कहमारूढो तरुं जिणो ? कह वा। तत्तो पवक्खमाणा जाया जिणपवयणुप्पत्ती ?॥११८९॥

निज्जुत्तिसमुत्थाणप्पसंगओ नाणतरुसमारोहो। वच्चइ य वक्खमाणा समयं जिणपवयणुप्पत्ती ॥११९०॥

'कह'मित्यादि। कथमेतेषां सम्यक्त्वश्रुतदेशसर्वविरतिसामायिकानां लाभो न भवति जीवस्य ?, कथं वा लाभः ?, क्रमो वा लाभे कः ? कस्य वा किमावरणं ? कस्य वा कथमावरणक्षयोपशमः ? कथं वोपशमः ? क्षयो वेति द्वारगाथौघार्थः ॥११८८॥ 'अथवे'-त्यादि। यदुक्तमधस्तात्–'तवनियमनाणरुक्ख' मित्येवमादि, अजानानः पृच्छति–तपोनियमज्ञानात्मकं तरुं 'कथं' केन हेतुना ? केन वा क्रमेण आरूढो जिनः ? इति, कथं वा ततो जिनात् प्रवक्ष्यमाणा जाता जिनप्रवचनोत्पत्तिरिति सम्बन्धत्रयमिति गाथार्थः ॥११८९॥ इह च पौर्वापर्येण द्वारविधेर्भूतभाविग्रन्थैदंपर्यमाह–'निज्जुत्ती' त्यादि। निर्युक्तिसमुत्थानप्रसंगतो–निर्युक्तिप्रस्तवाधिकारेण ज्ञानवृक्षसमारोहो 'व्रजति' गच्छति 'समकं' युगपत् तथा वक्ष्यमाणा जिनप्रवचनोत्पत्तिश्च, चशब्दस्य भिन्नक्रमत्वात् व्रजति च समकमिति वर्त्तेत इति गाथार्थः ॥११९०॥

अट्ठण्हं पयडीणं उक्कोसठिईएँ वट्टमाणो उ। जीवो न लहइ सामाइयं चउण्हंपि एगयरं ॥११९१॥ (नि.१०५)

वीस अयरोवमाणं कोडाकोडीउ नामगोयाणं। सयरी मोहस्स ठिई सेसाणं तीसमुक्कोसा ॥११९२॥

आउस्स सागराइं तेत्तीसं अवरओ मुहुत्तंतो। अट्ठ य नामा-गोए वेयणिए बारस मुहुत्ता ॥११९३॥

मोहस्सुक्कोसाए ठिईएँ सेसाण छण्हमुक्कोसा। आउस्सुक्कोसा या मज्झिमिया वा न उ जहण्णा ॥११९४॥
मोहविवज्जुक्कोसयठिईएँ मोहस्स सेमियाणं च। उक्कोस मज्झिमा वा कासइ व जहण्णिया होज्जा ॥११९५॥
सम्म-सुय-देस-सव्ववयाण सामाइयाणमेक्कंपि। उक्कोसठिईएँ न लहइ भयणा उण पुव्वलद्धाइं ॥११९६॥
सव्वजहण्णठिईइऽवि न लभए जेण पुव्वपडिवन्नो। आउयजहण्णठिइओ न पवज्जंतो न पडिवन्नो ॥११९७॥

'अट्ठण्ह' मित्यादि। अष्टानां ज्ञानावरणीयादिकर्मप्रकृतीनामुत्कृष्टस्थितौ वर्त्तमानो जीवो न लभते सामायिकं, किंविशिष्टं ?–चतुर्णामन्यतरदिति, त्वपिशब्दौ व्याख्यास्यामः, एताश्च प्रतिसमयोपादीयमानादिस्वभावा अन्यत्रायुषो, 'जाव णं अयं जीवे' इत्येवमादिवचनात्, केवली त्वसांपरायिकबन्धक इति समुदायार्थः। अपिशब्दात् मत्यादि च न लभते, अपिच–न केवलं न लभते, पूर्वप्रतिपन्नकोऽपि न भवत्युत्कृष्टस्थितिः, तथाहि–सकृदवाप्तसम्यक्त्वस्तत्परित्यागेऽपि न पुनरुत्कृष्टां कर्मस्थितिं बध्नाति, ग्रन्थेरनतिक्रमात् सकृद्भेदे च भेदाद्, एवं तावत्समुदायमङ्गीकृत्य, आयुष्कोत्कृष्टस्थितौ तु द्वयोः पूर्वप्रतिपन्नः स्यात्, तद्यथा-उपपातेऽनुत्तरविमानवासी सुर इति, तुशब्दात्सर्वजघन्यस्थितिमानपि सत्त्वविशेषो न लभते, तस्य सूक्ष्मसम्परायच्छद्मस्थवीतरागकेवलित्वेन त्रितयप्रतिपन्नत्वात्, तथाहि–सूक्ष्मसंपरायो मोहनीयजघन्यस्थितिमान्, अनन्तरमेतत्परिशाटविधानात्, इतरो ज्ञानदर्शनावरणान्तरायाणि प्रतीत्य, इतरोऽपि च शैलेश्यवस्थायां भवोपग्राहिकर्मत्रयमङ्गीकृत्य, न त्वायुष्कं, तस्यैवं जघन्यस्थितित्वे सत्यपि तत्तद्रूपदेशस्याविवक्षितत्वाद्, इतरेषां किमेवं विवक्षेति चेद्, उच्यते, इह सप्तानामायुष्कवर्जानां जघन्यस्थितीनां कर्मणां स्थितिर्बन्धप्रधाना, न त्वनुभवप्रधाना, जघन्यस्य ज्ञानावरणस्योत्कृष्टेन महदनुभवेन सह वेदनाद्, एवं यावदन्तरायस्य, नत्वेवमायुष्के न्यायोऽयं, यत

उत्कृष्टबन्धे तन्मात्रमेव वेद्यते, एवं मध्यमे जघन्ये च, इतश्चैतेष्वयं न्यायः, उत्तरप्रकृतिसंक्रमाच्च, तथाहि—मतिज्ञानावरण एव सर्वज्ञानावरणप्रक्षेपवेदनाद्, अत्र तु नैवं, नहि नारकायुष्केऽन्यदायुष्कान्तरं प्रक्षिप्य भुङ्क्ते, प्रतिनियतत्वात्, तस्मात्परिभावितमेवात्रानयोपपत्याऽऽयुष्कं, अतो जघन्यायुष्कस्थितिमांस्तूभयप्रतिपद्धस्तस्य क्षुल्लकभवग्रहणाधारत्वादिति गाथार्थः ॥११९१॥ अथ किंविशिष्टा खल्वासां स्थितिरित्यत आह—'वीस'मित्यादि, स्पष्टा॥९२। 'आउस्से'त्यादि। आयुषस्तु त्रयस्त्रिंशत्सागरोपमाणीति, 'अवरओ'—त्ति जहन्नेणं 'मुहुत्तंतो' अन्तर्मुहूर्त्तं स्थितिस्तद्यथा—पढमबिचउत्थपंचमछट्ठाणं कम्मपयडीणं, यत आह—पच्छद्धं कंठं ॥९३॥ आह किमेया समयं उक्कोसठिती उआउ एगाये उय कहवि अन्नहच्चिय वेचित्तं ?, सुण विहिं वोच्छं' । 'मोह'इत्यादि । मोहनीयस्योत्कृष्टायां स्थितौ शेषाणां षण्णामुत्कृष्टैव भवति, मूलवृद्धावुत्तरवृद्धेः, आयुषः को विधिरित्याह—आयुषः—आयुष्कस्य तूत्कृष्टा वा स्यात् सप्तममहीनारकस्येव, मध्यमा वा शेषनारकमनुष्यतिर्यगादेरिव, अनभिमतप्रतिषेधमाह—न तु जघन्याऽऽयुष्कस्य स्थितिः, अस्याः क्षुल्लकभवग्रहणभावित्वात् तत्र च मोहनीयोत्कृष्टस्थित्यभावादिति गाथार्थः ॥११९४॥ तथा—'मोहे' त्यादि। उक्कोसठितीय'—त्ति अन्यतरस्य ज्ञानावरणीयादेरन्तरायांतस्योत्कृष्टायां स्थितौ सत्यां, किंविशिष्टस्यान्यतरस्येत्यत आह—'मोहविवज्जस्स'त्ति मोहनीयवर्जस्य, किमेतद्वर्ज्यते? इति चेदुच्यते—एतद्वृद्धावन्यवृद्धेर्नियमितत्वात्, किमित्यत आह—'मोहस्य' मोहनीयस्य शेषाणां च प्रकृतीनां, अष्टमं तु न विवक्षितमेवेति भावना, उत्कृष्टा वा स्यात्, तद्यथा—ज्ञानावरणवृद्धौ सप्तमपृथिवीनारकस्य सर्ववृद्धिः, तथा विमध्यमाऽपि कस्यचित्स्यात् कस्यचिद्वा जघन्याऽपि स्यात्, यथा ज्ञानावरणवृद्धावेवायुषो जघन्या, क्षुल्लकविषयत्वादिति गाथार्थः ॥११९५॥ एवम्—'सम्मे' त्यादि । सत्तण्हमुक्कोसाए ठिईए चउण्हंपि एगयरं न लभइ, आयुषि का वार्त्तेत्यत आह—आयुष्युत्कृष्टे सति

३३ आद्ययोर्द्वयोः पूर्वलब्धे अङ्गीकृत्य भजना–विकल्पना, तथाहि–अनुत्तरोपपातिकः पूर्वप्रतिपन्न आद्ययोः, नाधः सप्तमनारक इति गाथार्थः ॥११९६॥ मूलगाथोक्तशब्दार्थमाह–'सव्वे' त्यादि । सर्वासां जघन्या स्थितिरस्येति सर्वजघन्यस्थितिः, प्राय आयुष्कं विहायेत्येव बोद्धव्यं, असावपि न लभते, किं कारणमित्याह–'जेण 'पुव्वपडिवन्नो' येनायं पूर्वप्रतिपन्न एव भवति, त्रयाणां सूक्ष्मसंपरायादित्वात्, पूर्वलब्धसम्यक्त्वादित्रयाः सूक्ष्मसम्परायादय इति पूज्यपादाः, आयुषि का वार्त्तेत्याह–आयुर्जघन्यस्थितिस्तूभयप्रतिषिद्धः, क्षुल्लकभवाधारत्वादिति गाथार्थः ॥११९७॥

सत्तण्हं पयडीणं अब्भितरओ उ कोडिकोडीए । काऊण सागराणं जइ लहइ चउण्हमेगयरं॥११९८॥ (नि.१०६)

अंतिमकोडाकोडीएँ सव्वकम्माणमाउवज्जाणं । पलियासंखिज्जइमे भागे खीणे हवइ गंठी ॥११९९॥

गंठित्ति सुदुब्भेओ कक्खडघणरूढगूढगंठिव्व । जीवस्स कम्मजणिओ घणरागद्दोसपरिणामो ॥१२००॥

भिन्नम्मि तम्मि लाभो सम्मत्ताईण मोक्खहेऊणं । सो य दुलहो परिस्समचित्तविघायाइविग्घेहिं ॥१२०१॥

सो तत्थ परिस्सम्मइ घोरमहासमरनिग्गयाइव्व । विज्जा य सिद्धिकाले जह बहुविग्घा तहा सोऽवि ॥१२०२॥

कम्मट्ठिई सुदीहा खविया जइ निग्गुणेण सेसंपि । स खवेउ निग्गुणोच्चिय किं थ पुणो दंसणाईहिं ? ॥१२०३॥

पाएण पुव्वसेवा परिमउई साहणम्मि गुरुतरिया । होइ महाविज्जाए किरिया पायं सविग्घा य ॥१२०४॥

तह कम्मट्ठिइखवणे परिमउई मोक्खसाहणे गुरुई । इह दंसणाइकिरिया दुलहा पायं सविग्घा य ॥१२०५॥

अहव जओच्चिय सुबहुं खवियं तो निग्गुणो न सेसंपि । स खवेइ लहइ य जओ सम्मत्तसुयाइगुणलाभं ॥१२०६॥

करणं अहापवत्तं अपुव्वमनियट्टिमेव भव्वाणं। इयरेसिं पढमं चिय भन्नइ करणंति परिणामो ॥१२०७॥
जा गंठी ता पढमं गंठिं समइच्छओ अपुव्वं तु। अनियट्टीकरणं पुण संमत्तपुरक्खडे जीवे ॥१२०८॥

## ॥ लाभद्वारं गयं ॥

'सप्तण्ह'मित्यादि। सप्तानामायुष्कवर्जानां कर्मप्रकृतीनां स्थितिमङ्गीकृत्यान्त्या या सागराणां कोटाकोटी तस्या अभ्यन्तर एव कृत्वा, कं ?, आत्मानमिति गम्यते, किं ? यदि लभ्यते चतुर्णामन्यतरत्, तत एव लभते, नान्यथेति, एतदुक्तं भवति–एवं समुत्थानारोहणोत्पत्तयः स्युः, नान्यथेति गाथार्थः ॥११९८॥ 'अंतिमे' त्यादि, स्पष्टा, नवरं क्षीणे इति निर्गुणस्यैवेति बोद्धव्यं 'भवति' आविर्भवति ग्रन्थिरिति। किमुक्तं भवतीत्याह–'गंठी' त्यादि। ग्रन्थिरिति जीवस्य घनरागद्वेषपरिणामो भवति, अत एव चाह–कर्मजनितः' कर्मात्मकः, रागद्वेषपरिणामस्य कर्मफलत्वात्, स च ग्रन्थिरिव ग्रन्थिः भावग्रन्थित्वात्, किंविशिष्ट इत्याह–'सुदुर्भेदः' सुदुर्मोचः, किंवदित्याह–'कक्खडे'त्यादीनां द्वन्द्वं कृत्वा समानाधिकरणः, तत्र कक्खडः अतिपरुषः पलाशमूलवत् वल्कलप्रतिबद्धत्वात्, स च शिथिलोऽपि भवतीत्यत आह–घनः–सर्वतो निविडः, आकृष्याकृष्य परिपीडितत्वात्, स चार्द्रोऽपि भवतीत्यत आह–रूढः–शुष्कः, असावप्ययःशलाकादिभिरुद्वेष्टयते इत्यत आह–गूढः–अनेकशोऽनेकशश्च तत्रैव २ अनुविद्धव्याविद्धत्वात् ॥१२००॥ ततः किमित्यत आह–तस्मिन् भावग्रन्थौ भिन्ने सति सम्यक्त्वाद्यवाप्तिरिति, आह च–'भिण्णंमी' त्यादि ॥१॥ 'सो तत्थे' त्यादि स्पष्टम् ॥२॥ आह–'कम्मे' त्यादि। कर्मस्थितिरतिद्राघीयसी यदि निर्गुणेनैव यथाप्रवृत्तकरणतः क्षपिता ततः शेषमपि तथैव क्षपयतु, किमत्र दर्शनादिभिर्येनोच्यते–तद्दर्शनाद्यनुगृहीतः क्षपयित्वा मोक्षं यास्यतीति गाथार्थः ॥१२०३॥ उच्यते–

'पागणे'त्यादि । यथेह महाविद्यायाः 'पूर्वसेवा' पूर्वक्रिया 'परिमृद्वी भवति' लघ्वी भवति, प्रायोऽन्यानपेक्षित्वात्, तथा सिद्धिः साधनं तस्मिन् 'साधने' सिद्धिवेलायां कृष्णचतुर्दश्यादिवेलायां गुरुतरा-गुर्वी गरीयसी भवति, सकलसामग्रीसंनिधानापेक्षित्वात्, केत्याह-'क्रिया' जपादिलक्षणा यथा च प्रायः सा सविघ्ना, ततो महार्थसिद्धेः ॥१२०४॥ तथा किमित्याह-'नहे'त्यादि, दार्ष्टान्तिकः सुबोध्यः ॥१२०५॥ 'अथवे'त्यादि परिहारान्तरं, यत एव निर्गुणेन सता प्रभूतं क्षपितमत एवासौ सातिशयत्वेन गुणैरधिक्रियते, तत्सहायश्च देशन्यूनकोटाकोटीवेद्यं कर्म क्षपयिष्यतीति को दोषः ?, यतश्चासावस्यां कर्मावस्थायां सम्यक्त्वादिगुणलाभं लभते, कर्मविवरसामर्थ्यात्, एकवाक्यतया चेयं नीयते चशब्दलोपादिति गाथार्थः ॥१२०६॥ तं च करणेनासौ लभते, तच्च त्रिविधमिति, आह च-'करण' मित्यादि ॥ तत्रैकं करणं यथाप्रवृत्तं भवति, यथैव प्रवृत्तं पूर्वोत्तरावस्थयोरविशिष्टत्वात्, सांसिद्धिकमित्यर्थः । तथाऽऽप्तपूर्वमपूर्वं प्रागवस्थाविशिष्टमात्मरूपं, निवर्त्तनशीलं निवर्त्ति न निवर्त्ति अनिवर्त्ति आ सम्यग्दर्शनलाभात्, एतच्च त्रयं भव्यानामेव भवति, अभव्यानां त्वाद्यमेव, करणं त्वात्मपरिणामो भण्यते, अध्यवसायविशेष इति गाथार्थः ॥१२०७॥ अथ कतमत्कथं भवतीत्याह-'जा गंठी'त्यादि । तत्रादितः प्रारभ्य ग्रन्थेरार्द्यं, यत्र प्रभूतकर्मसैन्यजेता विश्राम्यतीति भावार्थः, तथा समाविर्भूतोद्यमदध्यवसायक्रन्ताग्रेण ग्रन्थिं भिन्दानस्यापूर्वं, इतरत्तु सम्यक्त्वाभिमुखस्येति गाथार्थः ॥१२०८॥ यथा च प्रभूतं क्षपयित्वा सामायिकमवाप्नोति तथा दृष्टान्तानाह-

पल्लगे गिरिसरिउवले पिवीलिया पुरिसपहे जरग्गहिया । कोद्दव जल वत्थाणि य सामाइयलाभदिट्ठंता ॥ नि. १०७

जो पल्लेऽतिमहल्ले धण्णं पक्खिवइ थोवथोवयरं । सोहेइ बहुबहुतरं झिज्जइ थोवेण कालेण ॥१२१०॥

तह कम्मधन्नपल्ले जीवोऽणाभोगओ बहुतरागं । सोहंतो थोवतरं गेण्हंतो पावए गंठिं ॥१२११॥
गिरिनइवत्तणिपत्थरघडणोवम्मेण पढमकरणेणं । जा गंठी कम्मठिईखवणमणाभोगओ तस्स ॥१२१२॥
खितिसाभावियगमणं थाणूसरणं तओ समुप्पयणं । थाणं थाणुसिरे वा ओरुहणं वा मुइंगाणं ॥१२१३॥
णिइगमणंपिव पढमं थाणूसरणं व करणमप्पुव्वं । उप्पयणंपिव तत्तो जीवाणं करणमनियट्टिं ॥१२१४॥
थाणुव्व गंठिदेसे गंठियसत्तस्स तत्थऽवत्थाणं । ओयरणं पिव तत्तो पुणोऽवि कम्मट्ठिइविवुड्ढी ॥१२१५॥
जह वा तिन्नि मणूसा जंतडविपहं सहावगमणेणं । वेलाइक्कमभीया तुरंति पत्ता य दो चोरा ॥१२१६॥
दट्ठुं मग्गतडत्थे ते एगो मग्गओ पडिनियत्तो । बितिओ गहिओ तइओ समइक्कंतो पुरं पत्तो ॥१२१७॥
अडवी भवो मणूसा जीवा कम्मट्ठिई पहो दीहो । गंठी य भयत्थाणं रागद्दोसा य दो चोरा ॥१२१८॥
भग्गो ठिइपरिवुड्ढी गहिओ पुण गंठिओ गओ तइओ । सम्मत्तपुरं एवं जोएज्जा तिण्णि करणाइं ॥१२१९॥
उवएसओ सयं वा लहइ पहं कोइ न लभइ कोई । गंठित्थाणं पत्तो सम्मत्तपहं तहा भव्वो ॥१२२०॥
भेसज्जेण सयं वा नस्सइ जरओ न नस्सई कोई । भव्वस्स गंठिदेसे मिच्छत्तमहाजरोऽवेवं ॥१२२१॥
नासइ सयं व परिकम्मओ व जह कोद्दवाण मयभावो । नासइ तह मिच्छमओ सयं च परिकम्मणाए वा ॥
अप्पुव्वेण तिपुंजं मिच्छत्तं कुणइ कोद्दवोवमया । अनियट्टीकरणेण उ सो सम्मद्दंसणं लहइ ॥१२२३॥
तित्थंकराइपूयं दट्ठूणऽण्णेण वावि कज्जेण । सुयसामाइयलाहो होज्ज अभव्वस्स गंठिम्मि ॥१२२४॥

पल्यादिदृष्टान्ताःकरणानि पुंजाः

मयणा दरनिव्वलिया निव्वलिया य जह कोद्दवा तिविहा। तह मिच्छत्तं तिविहं परिणामवसेण सो कुणइ॥१२२५॥

जहवेह किंचिमलिणं दरसुद्धं सुद्धमंबु वत्थं च। एवं परिणामवसा करेइ सो दंसणं तिविहं ॥१२२६॥

सम्मत्तम्मि उ लद्धे पलियपुहुत्तेण सावओ होइ। चरणोवसमखयाणं सागरसंखंतरा होंति ॥१२२७॥

एवं अप्परिवडिए सम्मत्ते देवमणुयजम्मेसु। अण्णयरसेढिवज्जं एगभवेणं व सव्वाइं ॥१२२८॥

अहुणा जस्सोदयओ न य लभई दंसणाइसामइयं। लद्धं व पुणो भस्सइ तदिहावरणं कसायाई ॥१२२९॥

अहवा खयाइओ केवलाइं तं जेसिं ते कइ कसाया?। को वा कस्सावरणं? को व खयाइक्कमो कस्स?॥१२३०॥

'पल्लये'त्यादि द्वाराणि नव ॥१२०९॥ आद्यद्वारव्याचिख्यासयाऽऽह–'जो पल्ले' इत्यादि। अयमस्याः सम्बन्धः, परश्चोदयति–ननूक्तं सर्वस्य संसारिणो योगवतः प्रतिसमयं कर्मणश्चयापचयौ स्यातां, तथा च मिथ्यादृष्टिरेवं, यत उक्तं–"पल्ले महइमहल्ले, कुंभं पक्खिवइ सोहए नालिं। अस्संजए अविरए बहु बंधइ निज्जरे थोवं॥१॥ पल्ले महइमहल्ले कुंभं सोहेइ पक्खिवे नालिं। जे संजए पमत्ते बहु निज्जर बंधती थोवं ॥ २ ॥ पल्ले महइमहल्ले कुंभं सोहेइ पक्खिवे किंचि। जे संजएऽपमत्ते बहुनिज्जर बंधइ न किंचि ॥३॥" (श्राव. प्र.) यतश्चैवं कथमसंयतमिथ्यादृष्टिरियत्याः कर्मस्थितेरपचेता भविष्यति येनायं ग्रन्थिदेशमवाप्नुयात्? इति, उच्यते–प्रायोवृत्तिरेषा, यदुक्तमाद्यगाथायां–'पल्ले' इत्यादिना, अन्यथोपचयावस्थानाभावेन कर्मपुद्गलपरिमाणानवस्थानतः सर्वपुद्गलबन्धप्रसङ्गः स्यात्, तथा च सति सम्यग्दृष्ट्याद्यभावः, दृश्यते च सम्यग्दृष्ट्यादयः, तस्मादिह कस्यचिद्बन्धहेतुप्रकर्षात् पूर्वोपचितकर्मानुभूतिहेतुवैकल्याच्चोपचयप्रकर्षः, कस्यचिद् बन्धानुभवहेतुसाम्यादुपचयापचयसाम्यं, कस्यचित्तु मन्दपरिणामतया बन्धहेतुवैकल्यादनुभवनहेतुप्रकर्षाच्चापचयप्रक-

पैस्तद्यथा–'जो पद्धेऽइमहल्ले' ॥१०॥ 'तहे' त्यादि सुगमं, दारं ॥११॥ कथं पुनरनाभोगतोऽपचय इति द्वितीयं द्वारमाह–'गिरी'त्यादि ॥ गिरिसरिदुपलघट्टनौपम्येनेति, यथा हि गिरिनदीपाषाणाः परस्परतः संघृष्यमाणा नैकाकृतयो जायन्ते, (तथा भव्या) अनभिप्रायवन्तोऽपि, केनेत्याह–प्रथमकरणेन, तस्यानाभोगात्कर्मक्षपणं यावद् ग्रन्थिरिति गाथार्थः ॥१२॥ दारं ॥ 'खिई'–त्यादि ॥ 'मुइंगाणं' पिपीलिकानां, किमुक्तं भवति ?–यथेह पिपीलिकानां 'खिइसाहाविपगमणं' ति पृथिव्यां स्वाभाविकमवसर्पणं प्रागवस्थायाः स्वल्पविशिष्टं इतश्चेतश्च परिभ्रमणमित्यर्थः, एवमनाभोगतो जीवस्य द्राघीयःकर्मस्थितिक्षपणं 'थाणूसरणं' ति यथा च तासां पुनः स्थाणौ सरणं–आरोहणं तथा जीवानामपूर्वकरणं, किलाप्राप्तपूर्वत्वेन विशिष्टतरत्वात् २, ततो 'समुप्पयणं' ति यथा च तासामेव ततः स्थाण्वारोहणादुत्पतनं–संजातपक्षत्वाद्विहायोगमनं, एवमनिवृत्तिकरणमिति ३ । तथा 'थाणं थाणुसिरे च'–त्ति अथवा यथा स्थाणुशिरस्येव तासां स्थानमितश्चेतश्चाजिगमिषया आसनं, एवं ग्रन्थिकमनुष्यस्य, तत्र संमोहो 'नो इत्थए नो पाराए'–त्ति कृत्वा । 'ओरुहणं च' त्ति यथा वा तासां ततः स्थाणुशिरसोऽवतरणं, तथा ग्रन्थिकमनुष्यस्य पुनरप्युत्कृष्टकर्मस्थितिपरिवृद्धेस्त एव दार्ष्टा एव भेदका इति, आह च–'खिइगमण' मित्यादि ॥ 'थाणुव्वे'त्यादि ॥ देशतश्च दृष्टान्त इति विरोधचोदना परिहर्तव्येति द्वारम् ॥१३-१४-१५॥ 'जह वे'त्यादि पुरुषदृष्टान्तस्तु सोपनयः सुगमः । दारम् ॥१६-१९॥ 'उव'इत्यादि ॥ तथा ग्रन्थिस्थानं प्राप्तो भव्यः सम्यक्त्वपथ्यानमुपदेशाद्भिन्नो लभत इति । द्वारम् ॥२०॥ 'भेस'इत्यादि ॥ भैषज्यमुपदेशः इति द्वारम् ॥२१॥ 'नासइ'इत्यादि ॥२२॥ इह चायमात्मा 'अपुव्वे'त्यादि ॥ अपूर्वकरणेन मिथ्यात्वं त्रिपुञ्जीकरोति, कथोपमयेत्याह–मदनार्द्धशुद्धशुद्धकोद्रवोपमानेन, ततोऽनिवृत्तिकरणविशेषात् त्रयेऽपि सम्यक्त्वमेवानुपतति, एष तावत् भव्यो, ग्रन्थ्यन्तः स्थितः, तत्परित्यागेऽपि पुनर्लभनित्यमेव मिथ्यात्वं करिष्यति, तत्राप्यपूर्वमिवाप्-

पल्यादिदृष्टान्ताः करणानि पुंजाः

वंमिति जिनभद्राचार्यपूज्यपादा इति गाथार्थः ॥ १२२३ ॥ तित्थ'मित्यादि ॥ अभव्यस्य तु ग्रन्थौ व्यवस्थितस्य तीर्थकरादिस्नात्रपूजासंस्कारादिदर्शनाद् (आ) हारदेवलोकप्राप्तिश्रवणाद्वा श्रुतसामायिकमात्रलाभ इति गाथार्थः ॥१२२४॥ 'अप्पुव्वेण तिपुंज'-मित्यस्य विवरणमाह-'मयणा'इत्यादि द्वारं ॥२५॥ 'जहे'त्यादि द्वारद्वयं स्पष्टं ॥२६॥ 'लाभोव' त्ति गतम् । ततः-'सम्म' इत्यादि ॥ 'सम्यक्त्व एव' सम्यक्त्वमात्रके लब्धे सति ग्रन्थिभेदप्रसादाद् पुनस्तस्याः गर्वचरमकोटीकोट्याः पल्योपमपृथक्त्वेन क्षीणेन सता श्रावकः स्यात्-देशविरतिं प्रतिपद्येत, ततः संख्येयेषु सागरोपमेषु क्षीणेषु चारित्रीस्याद्, ततः संख्येयेष्वेवोपशमीस्यात्, संख्येयेषु च क्षपीति गाथार्थः ॥ १२२७ ॥ कथमयं क्रमः ? इत्यत आह-'एव'मित्यादि ॥ एवमयं क्रम उक्तः अप्परिवडिए संमत्ते, केसु ?-देवमणुयजम्मेसु, एतदुक्तं भवति-सम्यक्त्वं लब्ध्वा मनुष्यः सन्नुपशमश्रेण्यां मृत्वा सर्वार्थं व्रजति, पुनर्मनुष्यो भूत्वा क्षपकश्रेणिमवाप्य मोक्षं गच्छति, षट्षष्टिसागरोपमविषयत्वात्सम्यक्त्वसन्ततेः, तथाऽधस्त्येष्वपि देवलोकेष्वेनां सम्यक्त्वस्थितिं नयति मनुष्यभवेषु च, विरोधाभावात्, तदेवमनया विवक्षयाऽयं क्रम उच्यते, अन्यथा 'अन्नयरे' त्यादि स्पष्टं, यदा अंते उपशमकश्रेणी तदाऽनुत्तरादौ गच्छति, यदा तु क्षपकश्रेणी तदा मोक्षमित्यभिप्राय इति गाथार्थः ॥१२२८॥ क्रमद्वारं गतम् ॥ उत्तरगाथासम्बन्धनार्थमाह-'अहुणे'त्यादि ॥ तदिहावरणं प्रतन्यते गाथायां, तच्च कषायादि, एतदुक्तं भवति-सम्यक्त्वसामायिकस्याप्यावरणं कषायादि मिथ्यादर्शनं च, श्रुतस्य ज्ञानावरणं, चारित्रमोहनीयं च चारित्रस्येति गाथार्थः ॥ १२२९ ॥ 'अथवे'त्यादि॥ अथवेति सम्बन्धान्तरप्रदर्शनार्थः, यदुक्तं क्षयादितः केवलज्ञानप्राप्त्यादि तद् येषां क्षयादितो लभ्यते, आदिशब्दात्क्षयोपशमः परिगृह्यते, ते कति कषायाः ?, को वा कषायः कस्य सामायिकस्यावरणं ?. उपरितनस्यापि सम्बन्धनार्थमाह-को वा क्षयक्षयोपशमक्रमः कस्य कषाया-

पल्यादिदृन्ताः करगानि पुंजाः

॥३६४॥

दे: ? इति गाथार्थः ॥१२३०॥ अत आह—

पढमिल्लुयाण उदये नियमा संजोणाकसायाणं। सम्मदंसणलंभं भवसिद्धियावि न लहंति॥ (नि. १०८)

खवणं पडुच पढमा पढमगुणविघाइणोत्ति वा जम्हा। संजोयणाकसाया भवादिसंजोयणाओत्ति ॥१२३२॥

कम्मं कसं भवो वा कसमाओ सिं जओ कसाया ते। कसमाययंति व जओ गमयंति कसं कसायत्ति ॥१२३३॥

आओ व उयादाणं तेण कसाया जओ कसस्साया। चत्तारि चउवयणओ एवं विइयादओऽवि मया ॥१२३४॥

भवसिद्धियावि भणिए नियमा न लहंति तयमभव्वावि। अविसट्टेण व गहिया परित्तसंसारियाईया ॥१२२५॥

'पढमी' त्यादि। प्रथमा एव प्रथमिल्लुकाः देशीवचनतो यथा 'पढमिल्लाए छप्परे (एत्थ घरे) इत्येवमादि, तेषामनन्तानुबन्धिनां क्रोधादीनामित्युक्तं भवति, प्राथम्यं चामीषां सम्यक्त्वाख्यप्रथमगुणघातित्वात् क्षपणक्रमाद्वेति। उदये उदीरणावलिकागततत्पुद्गलोद्भूतजीवाशुभभावपरिणामे, किंविशिष्टानामित्याह-कर्मणा तत्फलभूतेन वा संसारेण सह संयोजयन्तीति संयोजनाः, संयोजनाश्च ते कषायाश्चेति समासस्तेषां, किमत आह-'नियमात्' नियमेन सम्यग्दर्शनलाभं सकलकल्याणपरम्परामूलं भवे सिद्धिर्येषां ते भवसिद्धिकाः, ननुच सर्वेषामेव भवे सति सिद्धिर्भवतीति, उच्यते, एवमेतत्, किन्त्विह प्रकरणात्तद्भवोऽधिक्रियते, ततश्च भविष्यत्सिद्धिका अपि चरमशरीरा अपि, आस्तां तावदभव्यादयो, न लभन्ते नासादयन्ति अशुभदलिकोपरक्तत्वादिति गाथार्थः ॥१२३१॥ 'खवण'मित्यादि गतार्था। अथवा-'कम्म' मित्यादि। कर्म कषं, कष्यत आत्माऽस्मिन्निति कृत्वा, सुवर्णवत्, भवो वा कष्यतेऽनेनेतिकृत्वा, तथा कर्म भवो वा आयो-लाभो येषां ते कषायाः, अथवा यतः कषमाययन्ति-गमयन्त्यतः कषाया इति गाथार्थः ॥१२३३॥

'आओ' इत्यादि । अथवा यत आयः उपादानं हेतुः, तेन कषस्याया ये ते कषायाः, ते च चत्वारो भवन्ति, कुतो ज्ञायते ? इत्याह– बहुवचनतः 'पढमिल्लुयाणं'ति वचनात् , एवं द्वितीयादयोऽपि द्वितीयतृतीयचतुर्थो मताः, उत्तरोत्तरगुणघातित्वेनेति गाथार्थः ॥१२३४॥ 'भवे' त्यादि गतार्थमिति मूलगाथार्थः ॥१२३५॥

**बीयकसायाणुदए अप्पच्चक्खाणनामधेयाणं । सम्मद्दंसणलंभं विरयाविरइं न उ लहंति ॥१२३६॥ (नि.१०९)**

सव्वं देसो व जओ पच्चक्खाणं न जेसिमुदयम्मि। ते अपच्चक्खाणा सव्वनिसेहे मओऽकारो ॥१२३७॥

सम्मद्दंसणलंभं लहंति भवियत्ति वक्कसेसोऽयं। विरयाविरइविसेसणतुसद्दसंलक्खिओऽयं च ॥१२३८॥

'बीये' त्यादि । देशविरतिलक्षणद्वितीयगुणघातित्वात् क्षपणक्रमाद्वा द्वितीयाः क्रोधादय एव कषाया निरूपितनिरुक्ताः, द्वितीयाश्च ते कषायाश्चेति २ तेषामुदये, किंविशिष्टानां ?–न विद्यते प्रत्याख्यानं काकमांसभक्षणनिवृत्तिरूपमपि येषूदयप्राप्तेषु ते तथोच्यंते, प्रसज्यप्रतिषेधश्चायमत्र नञिति, त एव नामधेयं येषां ते तथोच्यन्ते, तेषां किमत आह–सम्यग्दर्शनलाभं, भव्या लभन्त इति वाक्यशेषः । अयं च वाक्यशेषो विरताविरतिविशेषात्तुशब्दादध्यवसीयते, तथा चाह–विरमणं–विरतं न विरतिरविरतिः विरमणं चाविरतिश्च यस्यां निवृत्तौ सा तथोच्यते तां विरताविरतिं, न तु लभन्ते, तुशब्दात्सम्यग्दर्शनं तु लभन्ते प्रथमकषायक्षयोपशमतः, प्रशमादिगुणोपेतत्वादिति गाथार्थः ॥१२३६॥ 'सव्व' मित्यादि, 'सम्म' मित्यादि गतार्थम् ॥१२३७–८॥

**तइयकसायाणुदए पच्चक्खाणावरणनामधेज्जाणं । देसेक्कदेसविरइं चरित्तलंभं न उ लहंति ॥१२३९॥ नि.११०**

सव्वं पच्चक्खाणं वरेंति ते जं न देसमेगं तं । पच्चक्खाणावरणा आ मज्जादीसदत्थेसु ॥१२४०॥

नासंतस्सावरणं न सतोऽभव्वाइविरमणपसंगा। पच्चक्खाणावरणा तम्हा तस्संभवावरणा ॥१२४१॥

उदए निरइपरिणई न होइ जेसिं खयाइओ होइ । पच्चक्खाणावरणा न इह जहा केवलावरणं ॥१२४२॥

'नइये' त्यादि । सर्वविरतिलक्षणतृतीयगुणघातित्वात् क्षपणक्रमाद्वा तृतीयाः, कषायाः प्राग्वत्, पुनश्च समानाधिकरणः, तेऽपि च क्रोधादय एव चत्वारस्तेषामुदये, किंविशिष्टाना ?—आवृण्वन्तीत्यावरणाः प्रत्याख्यानं—विरतिरूपं चारित्रं तस्यावरणा इति प्रत्याख्यानावरणाः, प्रत्याख्यानावरणा एव नामधेयं येषां ते तथोच्यंते तेषां, तत्रैतत्स्यात्—अप्रत्याख्याननामधेयानामुदये न प्रत्याख्यानं लभ्यते, नञा प्रतिषिद्धत्वाद्, इहापि आवरणशब्देन तस्यैव प्रतिषेधात् क एषां मिथो विशेषः ? इति, उच्यते—तत्राहि—नञ् सर्वप्रतिषेधे, इह पुनराङो मर्यादिपदर्थवचनत्वात् मर्यादया वृण्वन्तीत्यावरणास्ततश्च सर्वविरतिनिषेधार्थ एवाय वर्त्तते, न देशविरतिनिषेधार्थोऽप्यावरणशब्दः, तथा चाह—देशश्चैकदेशश्च देशैकदेशौ, तत्र देशः—स्थूरप्राणातिपातः, एकदेशः, तस्यैव यथाद्रव्यवनस्पतिकायातिपातस्तयोर्विरतिः—निवृत्तिस्ता, लभन्त इति शेषः, अत्रापि वाक्यशेषश्चारित्रविशेषणात् तुशब्दादाक्षिप्यत इति, आह—चारित्रलाभं न तु लभन्ते, देशविरतिं पुनर्लभन्ते, अन्त्यकोटाकोटीतः क्षीणपल्योपमपृथक्त्वादिति गाथार्थः ॥१२३०॥ ते हि यतः—'सव्व' मित्यादि । सर्वं प्रत्याख्यानं आवृण्वन्त्युदिताः सन्तः, न तु देश, 'एतेणे' त्यादि स्पष्टं । ननु चाऽऽवृण्वन्तीत्यावरणा इत्युक्तं अतोऽभिदध्महे—किं सतः प्रत्याख्यानस्यावरणास्ते उतासतः ?, किं चातः, यद्यसतस्ततः—'नासंत' इत्यादि । 'असतः' अविद्यमानस्य प्रत्याख्यानस्य न आवरणं, खरविषाणावरणप्रसङ्गादभावाविशेषात्, अथ चैवं पठ्यतां 'खरविषाणावरणनामधेज्जाणं'ति, सतश्चेदाह—न 'सतः' न विद्यमानस्य तेऽ-

स्यावरणं, किं कारणमित्यत आह–अभव्यस्यापि विरमणप्रसङ्गात्, तेषामप्येतत्कषायसद्भावात्, एतदुक्तं भवति–अस्ति येषामिदं यदि नामावृतमिति, उच्यते–तस्मात् पारिशेष्यात् तत्संभवावरणात्–प्रत्याख्यानपरिणत्यावरणाद्धेतोः प्रत्याख्यानावरणाः प्रतिपादिताः निर्युक्तिकृता, परिणतशब्दलोपात्, सा चाभव्यानां नास्ति, तत्त्वेनैव तदयोग्यत्वात्, तदयोग्यत्वे च तत्त्वविरोधात्, तथा च–'उदये'-त्यादि। येषामुदये विरतिपरिणतिर्न भवति, क्षयादितश्च भवति, त इह प्रत्याख्यानावरणाः, दृष्टान्तमाह–यथा हि केवलावरणे क्षीणे तत्परिणतिरनन्ती जायते, एवमियमपि प्रत्याख्यानपरिणतिः स्वावरणक्षयादिभ्यो जायत इति भावनीयं, इह केचित् केवलमपि विद्यमानमेवाम्रियत इति मन्यते, द्रव्यस्य स्वपर्यायाशून्यत्वात्, तच्च न, अभव्यादिकेवलास्तित्वप्रसङ्गात्, अस्ति तदाम्रियत इति चेन्न, अकेवलत्वप्रसङ्गात्, तथाहि–आम्रियते केवलमिति चेति व्याहन्यते, भवतु वाऽस्यावृतत्वं, तस्याप्यन्तः स्वात्मप्रकाशनप्रसङ्ग इति प्रतिजानीमहे, बहिरावृतत्वात् मल्लकसंपुटस्थगितोज्ज्वलज्वलत्प्रदीपवत्, तथाऽऽवरणपरिक्षयेऽपि च तदनन्तगुणावरणसद्भावात्, सदा नाविर्भावप्रसङ्गः, सकलसंसारिप्रतिबद्धज्ञानावरणीयादिपुद्गलेभ्य एकाकाशप्रदेशावगाढपुद्गलानामनन्तगुणत्वात्, तस्य तथाभूतासंख्येयप्रदेशावगाढत्वात्, तेषां च सकललोकापन्नज्ञानावरणादिकर्मपुद्गलाधारत्वेन तदाधारत्वात्, तस्मादसंभवी खल्वावृताविर्भावः, किन्तु तदुदये–तद्विशिष्टसंक्लेशे सति तत्परिणतिर्न भवतीति ब्रूम इति गाथार्थः ॥१२४०–४२॥ उक्तमेवार्थं संगृह्णन्नाह–

मूलगुणाणं लंभं न लहइ मूलगुणघाइणो उदए। संजलणाणं उदए न लहइ चरणं अहक्खायं (नि. १११)

सम्मत्तसमेयाइं, महव्वयाणुव्वयाइं मूलगुणा। मूलं सेसाहारो वारस तग्घाइणो एए ॥१२४४॥

निसिभत्तविरमणंपि हु ननु मूलगुणो कहं न गहियं तं?। वयधारिणो च्चिय तयं मूलगुणो सेसयस्सियरो १२४५

आहारविरमणाओ तवोव्व तव एव वा जओऽणसणं। अहव महव्वयसंरक्खणत्तणाओ समिइउ व्व ॥१२४६॥
तहवि तयं मूलगुणो भण्णइ मूलगुणपालयं जम्हा। मूलगुणग्गहणम्मिय तं गहियं उत्तरगुणव्व ॥१२४७॥
जम्हा मूलगुणचिय न होंति तव्विरहियस्स पडिपुन्ना। तो मूलगुणग्गहणे तग्गहणमिहऽत्थओ नेयं ॥१२४८॥
जइ मूलगुणो मूलव्वओवगारित्ति तं तवाईया। तो सव्वे मूलगुणा जइ व्व न तो तंपि मा होज्जा ॥१२४९॥
सव्ववओवकारी जह तं न तहा तवादओ वीसुं। जं ते तेणुत्तरिया होंति गुणा तं च मूलगुणो ॥१२५०॥
ईसिं सयराहं वा संपाए वा परीसहाईणं। जलणाओ संजलणा नाहक्खायं तदुदयम्मि ॥१२५१॥
अकसायमहक्खायं जं संजलणोदए न तं तेणं। लब्भइ लद्धं च पुणो भस्सइ सव्वं तदुदयम्मि ॥१२५२॥
नहु नवरिमहक्खाओवघाइणो सेसचरणदेसंपि। घाएंति ताणमुदये होइ जओ साइयारं तं ॥१२५३॥

'मूल'इत्यादि ॥ मूलभूता गुणा मूलगुणाः, उत्तरगुणाधारा इत्यर्थः, ते च सम्यक्त्वमूलाः पञ्चाणुव्रतमहाव्रतादयः, तेषां लाभं 'न लभते' नासादयति, मूलगुणान् घातयितुं शीलं येषां ते तथोच्यन्ते, ते चाद्या द्वादश क्रोधादयस्तेषामुदये सति, तथेषज्ज्वलना-रसंज्वलनाः सपदि परीषहादिसंपातज्वलनाद्वा क्रोधादय एव चत्वारस्तेषामुदये न लभते चारित्रं, किं सर्वमेव ?, नेत्याह—यथैवाख्यातं यथाऽऽख्यातं, अकषायमित्यर्थः, सकषायं तु लभत एव, न च यथाख्यातचारित्रमात्रोपघातिनः संज्वलनाः, किन्तु शेषचारित्रदेशोपघातिनोऽपि, तदुदये शेषचारित्रदेशातिचारसिद्धेरित्युत्तरगाथाऽभिसम्बन्ध इति गाथार्थः ॥१२४३॥ 'सम्मत्ते'त्यादि गतार्था ॥१२४४॥ अत्राऽऽर्थेन न्यायेनाक्षिप्तमनवगच्छन्नाह—'निसी'त्यादि ।४५। ननु निशिभक्तविरमणमपि मूलगुण एव अतः कथं तत्र साक्षान्मूलगुणत्वेन

गृहीतं ?, एतदुक्तं भवति–इह त्रयस्याप्युपादानं कर्त्तव्यं, अविशेषेण मूलगुणत्वाद्, अन्यतरपदवद्, उच्यते, असिद्धो हेतुः, यतो महाव्रतधारिण एव तन्मूलगुणो, गृहिणस्तूत्तरगुण एव, कुतः ? इत्याह–'आहारे'त्यादि । आहारविरमणात्तपोवत्, तथा 'तव एव व'त्ति गृहिण इदमुत्तरगुणः, तपोविशेषत्वादनशनवत्, इत्यध्याहार्यो दृष्टान्तोऽनुक्तत्वात्, कथं च तपोविशेषः ?, उच्यते–यतोऽनशनं आहारनिवृत्तिश्चतुर्थादिवत्, अथवा उत्तरगुण इदं, महाव्रतसंरक्षणहेतुत्वात् समितय इव, तदेवमस्योघत उत्तरगुणत्वं साधितमिति गाथार्थः ॥१२४६॥ अत्राह–यद्येवं व्रतधारिणोऽपि किमिति तन्मूलगुणः ? इत्यत आह–'तहवी'त्यादि ॥ तथाऽप्येवमुत्तरगुणत्वे सत्यपि तत् साधोर्मूलगुणो भण्यते, मूलगुणपालनात्, प्राणातिपातादिविरमणवत्, अन्तरङ्गत्वाच्चेति, तदनेनैतज्ज्ञापयति–एतत्सुस्थे शेषं सुस्थं, अन्यथा विपर्यय इति, प्रकृतं योजयन्नाह–'मूलगुणग्गहणे च' महाव्रतोपादाने च तद्रात्रिभोजनं संगृहीतमार्थ्येन न्यायेन, न तु शाब्देन, नैश्चयिकं दृष्टान्तमाह–उत्तरगुणवत् ।४७। किमित्यत आह–'जम्हे'त्यादि स्पष्टा, नवरमिहेति 'सम्मत्ते'त्यादिगाथायामिति ॥४८॥ एवं स्थितेऽतिप्रसङ्गविरोधावाह–'जदी'त्यादि ॥ जति तं मूलगुणो मूलव्रतोपकारित्वात् ततः सर्वे तपआदयो मूलगुणा मूलव्रतोपकारित्वादित्युच्छिन्नेदानीमुत्तरगुणवार्त्तेति, यदि च न ते मूलगुणा ननु तदपि मा भूत्, न ह्यर्द्धं कुक्कुट्याः पच्यतेऽर्द्धं प्रसवाय कल्प्यते, उपकारित्वाविशेषात्, तथा विरोधश्च, ननु स्मर्यतामुक्तं भवता–"अहव महव्वयसंरक्खणत्तणाओ समितितो व्वे"ति गाथार्थः ॥१२४९॥ उच्यते–तस्योभयधर्मकोक्तेर्न विरोधः, अथवा विशेषहेतुरभिधीयते–'सव्वे'त्यादि ॥ यथा हि तत् सर्वव्रतोपकार्यन्तरङ्गत्वात् एवं 'न तहा तवादयो वीसुं' 'यत्' यस्मादेवं तेन ते तस्योत्तरगुणा एव भवन्ति साधोः, किमिति तद्वार्त्तोच्छेद उद्घुष्यते, तच्च मूलगुण इति का नामात्र क्लिष्टतेति, एतदुक्तं भवति–साधोरारम्भजप्राणातिपातनिवृत्तत्वात् तदासेवने च तदभावाद् इतरस्तु ततो न

निवृत्त इति निशि भुञ्जानोऽपि न मूलगुणान् खण्डयत्यनिवृत्तत्वादिति गाथार्थः ॥१२५०॥ पश्चार्द्धविवृत्तिमाह–'ईसि'मित्यादि, 'अकसाय'मित्यादि, 'नहु'इत्यादि, गतार्थाः ॥१२५१–५२–५३॥

**सव्वेऽविय अइयारा संजलणाणं तु उदयओ होंति। मूलच्छेज्जं पुण होइ बारसण्हं कसायाणं। नि.११२।**

अइयारा छेदंता सव्वे संजलणहेयवो होंती। सेसकसाओदयओ मूलच्छेज्जं वयारुहणं ॥१२५५॥

अहवा संजममूलच्छेज्जं तइयकलुसोदए नियमं। सम्मत्ताई मूलच्छेज्जं पुण बारसण्हंपि ॥१२५६॥

मूलच्छेज्जे सिद्धे पुव्वद्धे मूलगुणघाइगहणेणं। इह कीस पुणो गहणं ? अइयारविसेसणत्थंति ॥१२५७॥

पगयमइक्कमायंति य अइयारे तम्मि चेव मा जोए। तो मूलच्छेज्जभिणं सेसचरित्ते निओएइ ॥१२५८॥

'सव्वे'इत्यादि ॥ इह संज्वलनानामेवोदयतः सर्वेऽपि च, अपिशब्दात्कियन्तोऽपि वाऽतिचारा भवन्ति, चारित्रपटलाञ्छनविशेषा भवन्ति, एतदुक्तं भवति–"आलोयण पडिकमणे मीस विवेगे तहा विओसग्गे। तव छेया" एतावत्प्रायश्चित्तशोध्याश्चारित्रस्खलनाः संज्वलनकृता इति, द्वादशानां पुनः कषायाणामाद्यस्त्यानामुदये मूलेन–अष्टमप्रायश्चित्तेन छिद्यते–विदार्यते यद्दोपजातं तन्मूलच्छेद्यमभिधीयते तद् भवति, किञ्च तत् पुनरपि महाव्रतारोपणमित्युक्तं भवति। अथवा मूलच्छेज्जं पुण होइ बारसण्हं कसायाणं उदये, कथं ?, यथायोगमिति सिद्धान्तपरिज्ञानात् ज्ञायते, तथाहि–प्रत्याख्यानावरणोदये सर्वचारित्रविनाशः, अप्रत्याख्यानोदये देशविरतिमनाशः, अनन्तानुबन्ध्युदये च सम्यक्त्वहानिरिति गाथार्थः ॥१२५४॥ 'अइयारा'इत्यादि ॥ 'छेदंता'इति किमुक्तं भवति ?–छेदंतेण पायच्छित्तेण अन्तो जेसिं ते छेदन्तंता इति वाच्ये छेदंता भण्णति, एकान्तशब्दलोपात्, शेषकषायोदयतस्तु मूलच्छेद्यं, क्रियत इति

वाक्यशेषः, तद्विशुद्धये च प्रायश्चित्तं व्रतारोपणम् ॥५५॥ द्वितीयं व्याख्यापक्षमधिकृत्याह–'अहवे'त्यादि ॥ संयममूलच्छेद्यं' सर्वविरते-रपनयनं तृतीयकषायोदये 'नियतं' आवश्यकं, 'सम्यक्त्वादीनां' सम्यक्त्वदेशविरतिसर्वविरतीनां पुनर्मूलच्छेद्यं भवति द्वादशानाम-प्युदये यथायोगम् ॥५६॥अथ पौर्वापर्यं शोधयन्नाह–'मूल'इत्यादि ॥ इह पूर्वमनन्तरातीतगाथापूर्वार्द्धेन मूलच्छेद्ये सिद्धे सति, केन ग्रन्थे-नेत्यत आह–मूलगुणघातिग्रहणेन 'मूलगुणघाइणं उदए' त्ति वचनात् , इह 'सव्वेऽविय'त्ति अस्यां गाथायां किमिति भूयोऽपि ग्रहणं पश्चार्द्धेन मूलच्छेद्यस्य ?, उच्यते, अतिचारविशेषणार्थ, नैते यथाख्याते, तदा हि पूर्वगाथापश्चार्द्धादारभ्य 'संजलणाणं उदये ण लहइ चरणं अहक्खायं' इति यथाख्यातं प्रकृतमनुवर्त्तते, इतोऽपि च पूर्वार्द्धमुक्तं–'सव्वेऽवि य अइयारा संजलणाणं च उदयओ होंती'-त्यतः प्रकृतस्यैव मा प्राप्नुयुः, अतो मूलच्छेद्यग्रहणात्पुनः शब्दविशेषणाच्च शेषचारित्रे क्षायोपशमिके गम्यन्ते, एतदुक्तं भवति–यस्यैव मूलच्छेद्यं चारित्रस्य तस्यैवातिचारा अप्यवस्थाभेदेनेति ॥५७॥ तथाऽमुमेवार्थमाह–'पगय'मित्यादि ॥ इहानन्तरगाथायां प्रकृतं यथा-ख्यातं, ततश्चातिचारांस्तस्मिन्नेव मा कश्चिद् योजयेद् 'सव्वेऽवी'त्यादिना, तत इदमेतद्गाथापाश्चात्यार्द्धेनापि शेषचारित्रे योजयति, न त्वौपशमिकक्षायिकयोरिति गाथार्थः ॥१२५७॥ आवरणद्वारम् ॥ यतश्चैवमतः—

बारसविहे कसाए खइए उवसामिए व जोगेहिं । लब्भइ चरित्तलंभो तस्स विसेसा इमे पंच ।नि.११३।

खविए उवसामिए वा वासद्देणं खओवसामिए वा । बारसविहे कसाए पसत्थझाणाइजोगेहिं ॥१२५८॥

खीणा निव्वायहुयासणोव्व छारपिहिउव्व उवसंता । दरविज्झायविहाडियजलणोवम्मा खओवसमा ॥

खवओ वा समओ वा खओवसमओ व तिण्णि लब्भंति । सुहुमाहक्खायाइं खयओ समओ य नऽण्णत्तो ॥

लब्भइ चरित्तलाभो खयाइओ बारसण्ह नियमोऽयं । न उ पंचविहनियमणं पंच विसेसत्ति सामण्णं ॥

जं तिण्णि बारसण्हं लब्भंति खयाइओ कसायाणं । सुहुमं पण्णरसण्हं चरिमं पुण सोलसण्हंपि ॥१२६४॥

'बारसे'त्यादि, 'खविए'इत्यादि ॥ क्षीणादीनां लक्षणमाह–'खीणा'इत्यादि प्रतीतार्था ॥५९–६१॥ 'लब्भइ'त्ति व्याचष्टे–'खय-दोवे'त्यादि पश्चानुपूर्व्या व्याख्या–'त्रीणि' सामायिकानि आद्यानि 'लभ्यन्ते' प्राप्यन्ते जीवेन, कथमित्यत आह–क्षयोपशमतो वा, प्रसिद्धमेतत्, तथा 'समतो वा' उपशमश्रेणिप्रतिपत्तेः, अत एव मध्यमतीर्थानामपीयं स्यात्, छेदोपस्थापनं तु न भवतीत्यभिप्रायः, तथा 'क्षयतो वा' सूक्ष्मसंपरायलाभादधः, एवं छेदोपस्थानं क्षयोपशमादित्रयात्, एवं परिहारविशुद्धिकं क्षयोपशमादुपशमात् क्षयाद्वा यथाऽविरोधेन सर्वमेतत्सूक्ष्मसंपरायात्प्राग् लभ्यते साम्प्रतं चेति ॥ क्षमाश्रमणटीकाऽपीयं "तत्र सामायिकादित्रयस्यापि लाभस्तावत्-स्थायः क्षयोपशमात्, श्रेणीद्वयेऽवतिष्ठमानस्य प्राक् सूक्ष्मसंपरायलाभादुपशमात् क्षयाद्वा संभवतः प्राग्लाभः साम्प्रतो वे"ति, श्रेणिद्व-यान्तर्भावात्तदपेक्षत्वाच्च, सूक्ष्मसम्पराययथाख्याते क्षयोपशमाच्च लभ्येते, एतदुक्तं भवति–श्रेणिद्वयशिखरापेक्षत्वादिति गाथार्थः ॥ १२६२॥ साम्प्रतं मूलगाथाचरमावयवसम्बन्धनार्थमाह–'लब्भई'त्यादि ॥ बारसण्ह कसायाण खयाइओ लब्भइ चरित्तलाभो, नियमोऽयं, अत्रैतावति नियमः, अतः काक्वा मूलगाथा पठ्यते–'बारसविहकसाये खविए उवसामिए य जोएहिं लब्भइ चरित्तलंभो' न लभ्यते, क्व तर्हि अनियमः? इत्यत आह–'न उ पंचविहनियमणं'ति न तु पञ्चविधमपि क्षयादिभ्यो नियम्यते, किं तर्हि ?, यतः कुतश्चिल्लब्धस्य 'पञ्च विशेषा' इति पञ्चभेदा भवन्ति, कथमित्यत आह–'सामन्नं'ति सामान्येन, विशेषस्यानियमितत्वात्, एतदुक्तं भवति–त्रयाणां त्रित्रिस्वभावत्वात्, आह–'ज'मित्यादि ॥ द्वयोर्द्विस्वभावत्वात् आह–'ज' मित्यादि, गतार्था ॥६३–६४॥ ते चामी–

सामाइय त्थ पढमं छेओवट्ठावणं भवे वीयं । परिहारविसुद्धीयं सुहुमं तह संपरायं च ॥नि, ११४॥
तत्तो य अहक्खायं खायं सव्वम्मि जीवलोयम्मि। जं चरिऊण सुविहिया वच्चंतऽयरामरं ठाणं ।नि.११५॥
सव्वभिणं सामइए छेयाइविसेसओ पुणो भिन्नं । अविसेसिय सामइयं ठियमिह सामन्नसन्नाए ॥१२६७॥
सावज्जजोगविरइत्ति तत्थ सामाइयं दुहा तं च । इत्तरमावकहं चिय पढमं पढमंतिमजिणाणं ॥१२६८॥
तित्थेसुमणारोवियवयस्स सेहस्स थोवकालीयं । सेसाणमावकहियं तित्थेसु विदेहयाणं च ॥१२६९॥
नणु जावज्जीवाए इत्तरियंपि गहियं मुयंतस्स । होइ पइण्णालोवो जहाऽऽवकहियं मुयंतस्स ॥१२७०॥
नणु भणियं सव्वं चिय सामाइयभिणं विसुद्धिओ भिन्नं। सावज्जविरइमइयं को वयलोवो विसुद्धीए? ॥१२७१॥
उज्झिज्जमओ भंगो जो पुण तं चिय करेइ सुद्धयरं । सन्नामेत्तविसिट्ठं सुहुमंपिव तस्स को भंगो? ॥१२७२॥
परियायस्स य छेओ जत्थोवट्ठावणं वएसुं च । छेओवट्ठावणमिह तमणइयारेयरं दुविहं ॥१२७३॥
सेहस्स निरइयारं तित्थंतरसंकमे व तं होज्जा । मूलगुणघाइणो साइयारमुभयं च ठियकप्पे ॥१२७४॥
परिहारेण विसुद्धं सुद्धो व तवो जहिं विसेसेण । तं परिहारविसुद्धं परिहारविसुद्धियं नाम ॥१२७५॥
तं दुवियप्पं निव्विस्समाणनिविट्ठकाइयवसेण । परिहारियाणुपरिहारियस्स कप्पट्ठियस्सऽविय ॥१२७६॥
परिहारो पुण परिहारियाण सो गिम्हसिसिरवासासु । पत्तेयं तिवियप्पो चउत्थयाई तवो नेओ ॥१२७७॥

चिह्न० (गिम्हसिसिरवासासुं चउत्थयाईणि वारसंताइं । अड्ढोक्कंतीइ जहण्णमज्झमुक्कोसय तवाणं) ॥
सेसा उ निययभत्ता पायं भत्तं च ताणमायामं। होइ नवण्हवि नियमा न कप्पए सेसयं सव्वं ॥१२७९॥
परिहारियाणुपरिहारियाण कप्पट्ठियस्सवि य भत्तं । छच्छम्मासा उ तवो अट्ठारसमासिओ कप्पो ॥
कप्पसमत्तीए तयं जिणकप्पं वा उवेंति गच्छं वा । ठियकप्पे चिय नियमा दो पुरिसजुगाइं ते होंति ॥
कोवाइ संपराओ तेण जओ संपरीइ संसारे । तं सुहुमसंपरायं सुहुमो जत्थावसेसो सो ॥१२८२॥
सेढिं विलग्गओ तं विसुज्झमाणं तओ चयंतस्स । तह संकिलिस्समाणं परिणामवसेण विन्नेयं ॥१२८३॥
अहसद्दो जाहत्थे आङोऽभिविहीए कहियमक्खायं। चरणमकसायमुदितं तहमक्खायं जहऽक्खायं॥१२८४॥
तं दुविकप्पं छउमत्थकेवलिविहाणओ पुणेक्केक्कं। खयसमज सजोगाजोगकेवलिविहाणओ दुविहं।१२८५।
भणियं खओवसमओ अहुणोवसमेणं लहइ जह जीवो। सामइयं तं भण्णइ सो जं च खओवसमपुव्वो ॥
अहवा खओवसमओ चरणतियं उवसमेण खयओ वा । सुहुमाऽहक्खायाइं तेणोवसमक्खया कमसो ॥
सेढिगयस्स व सुहुमं सेढीओ निग्गयस्सऽहक्खायं । सा ओवसमक्खयओ पढमं तत्थोवसमसेढी ।१२८८।

'सामाइये'त्यादि, तत्तो ये'त्यादि द्वारगाथा द्वयम् ॥६५–६६॥ 'सव्व'मित्यादि ॥ सर्वमेतत्पञ्चविधं चारित्रं सामायिकं, समभावलक्षणत्वाविशेषात्, किन्तु छेदादिविशेषत एव भिन्नं मदर्थतः संज्ञातश्च नानात्वं प्रतिलभते, तत्राविशेपितमाद्यम् निर्विशेपगमाद्यं चारित्रं, यतस्तत्स्थितमिह-प्रवचने सामान्यचिन्तासंज्ञायां सामायिकमिति ।६७। साम्प्रतं प्रपञ्चमभिदधत् सामायिकमङ्गीकृत्य तावदिद-

माह–'सावज्जे'त्यादि ॥ 'तित्थे'त्यादि ॥ तत्रेति निर्द्धारणार्थः, सावद्ययोगविरतिः सामायिकं, तच्च द्वेधा, इत्वरं–इत्वरकालिकं, यावदप्यात्मनः कथेति यावत्कथं, अथेदं संभवतोऽर्द्धतृतीयेषु द्वीपसमुद्रेषु, निरूपयन्नाह–पढमं–इत्तरियं सामायिकं प्रथमान्त्यजिनयोः ऋषभवर्द्धमानस्वामिनाम्नोस्तीर्थयोरनारोपितव्रतस्य शिक्षकस्य भवति, स्तोककालीयत्वात्। शेषतीर्थंकरतीर्थेषु तु २२विदेहगानां च तीर्थेष्वादावेव यावत्कथं, ऋजुप्रज्ञत्वादिति गाथाद्वयार्थः ॥१२६८–९॥ तदत्रेत्वरसद्भावे दोषमुद्भावयन्नाह–'नणु'इत्यादि ॥ ननु तेनानगारेणेत्वरमपि यावज्जीवया गृहीतं 'करेमि भंते ! सामाइय' मित्येवमाद्यभीतत्वात्, ततश्च छेदोपस्थापनीयप्रतिपत्तौ तन्मुञ्चतः प्रतिज्ञालोपो भवति, अनिर्व्यूढत्वाद्, उत्क्रिमणविधौ यथा यावत्कथिकं मुञ्चत इति गाथार्थः ॥१२७०॥ उच्यते–'नणु' इत्यादि ननूक्तं पञ्चविधमपीदं सामायिकं सामायिकं समभावलक्षणत्वादित्यादि, अतः को व्रतलोपः ? काऽत्रानिर्व्यूढता ? 'विसुद्धीए' त्ति विशुद्धतरं प्रतिपद्यमानस्येति गाथार्थः ॥१२७१॥ 'उन्नी'त्यादि ॥ उत्प्रव्रजतो भङ्गो भवति व्रतस्य, यः पुनस्तदेव प्राग्गृहीतं विशुद्धतरं गृह्णाति, किंविशिष्टं ? सञ्ज्ञामात्रविशिष्टं छेदोपस्थापनमिति सूक्ष्मसम्परायमिव परिहारविशुद्धिकमिव वा, तस्य को भङ्गो ?, नैव, उक्तं सप्रभेदं सामायिकद्वारम् ॥७२॥ द्वितीयस्य शब्दार्थमाह–'परियाये'त्यादि ॥ यतः प्राक्पर्यायस्य च्छेद उपस्थापनं च महाव्रतेषु, यतः साधोरिति गम्यते, तदपि च सातिचारमनतिचारं चेति गाथार्थः॥१२७३॥ कस्य कतमत् ? इत्याह–'सेहस्से'त्यादि, शिक्षकस्य यदारोप्यते तन्निरतिचारं, नच प्राक्पर्यायोच्छेदः, तस्यापि लब्धत्वात्, यद्वा तीर्थान्तरप्रतिपत्तौ, यथा पार्श्वनाथतीर्थात्तदपत्यानां वर्द्धमानतीर्थं संक्रमतां। द्वारम्। तथा मूलगुणघातिनः साधोः सातिचारं तच्छेदोपस्थापनं स्यात्, उभयं चैतत्सातिचारानतिचारच्छेदोपस्थापनीयचारित्रद्वयं स्थितकल्प एव स्याद्, आद्यचरमतीर्थंकरतीर्थयोरिति गाथार्थः ॥ १२७४ ॥ द्वारं ॥ तृतीयशब्दा-

र्थमाह–'परी'त्यादि ॥ परिहरणं परिहारः–तपोविशेषस्तेन 'विशुद्धं' विशुद्धो वा सो तवो विसेसेण जत्थ तत्परिहारविशुद्धं तदेव परिहारविशुद्धिकं, नामेति निपात इति गाथार्थः ॥१२७५॥ इदमाह–'त' मित्यादि ॥ तदपि द्वेधा–निर्विश्यमानकं निर्विष्टकायिकं च, तत्र निर्विश्यमानं–आसेव्यमानं ग्राप्यमानं चेति ४।४।१। अथवा तदनुष्ठातारो निर्विशमानकास्ततसहयोगादितस्तदपि निर्विशमानकं, तथा निर्विष्टः कायो यैस्ते निर्विष्टकाया निर्विष्टकाया एव निर्विष्टकायिकाः, स्वार्थे कप्रत्ययोपादानात्, तत्सहयोगादितो निर्विष्टकायिकं, तस्य च वोढारः(वोढारः) ४ अनुपरिहारिकाश्च ४ कल्पस्थितश्चैकः १ इति नवको गणः, तत्र परिहारिकाणां निर्विश्यमानकं, अनुपरिहारिकाणां निर्विष्टकायिकं, कल्पस्थितस्य चेति गाथार्थः ॥१२७६॥ कथं पुनरयं नवको गणस्तपः करोतीत्याह–'परिहार' इत्यादि ॥ परिहारः पुनरसौ ज्ञेयः 'परिहारियाणां' वोढॄणां ग्रीष्मशिशिरवर्षासु प्रत्येकं त्रिविकल्पः, किमुक्तं भवति ? परिहार इति, अत आह–तपः कर्मकञ्चुकसत्तापकारी तपोविशेष इत्यर्थः । स्थापना

| | | | |
|---|---|---|---|
| १ | २ | ३ | ग्री. |
| २ | ३ | ४ | शि. |
| ३ | ४ | ५ | वा. |

। तथा चाह–चिट्ठे (गिम्हे) त्यादि स्पष्टा, नवरं पौर्वापर्ययन्त्रभावनार्थेति बोद्धव्यम्। एवमिमेष्वायामाम्लेन षण्मासांस्तपः कुर्वत्सु इतरेषु को विधिः ? इत्यत आह–'सेसा'इत्यादि, शेषाः पुनरनुपरिहारिकाः कल्पस्थितश्च प्रायः, प्रायोग्रहणं स्वेच्छयोपवासकरणाविरोधात्, 'नियतभक्ताः' इति प्रतिदिवमायामाम्लभोजिनः, तथा चाह–'भत्त'मित्यादि, पाठसिद्धम् ॥७७-७९॥ एवम्–'परी'त्यादि ॥ परिहारियाणं ति निव्विसमाणाणं इयरे पडियरणं करंति, भक्तं चोभयोरपि यथायोगमुक्तवद् भावनीयं, तथा अनुपरिहारियाणं तं चयं चरंताणं इयरे निर्विष्टकायत्वात्प्रतिजागरणं कुर्वन्ति, भक्तं च भवितव्यत्, ततः स्थितकल्पस्यापि भक्तं तेन विधिना असेवितः, तयोर्द्वावितरे प्रतिजागरणमातन्वते, एवं नया-

णामपि 'छच्छम्मासा उ तवो'त्ति अट्ठारसमासा लग्गंतिचि गाथार्थः ॥१२८०॥ ततः किं कुर्वन्तीत्याह–'कप्पे'त्यादि ॥ तत्परिसमाप्तौ कदाचित्पुनस्तदेव प्रतिपद्येरन् जिनकल्पं चोपयन्ति, गच्छं वा प्रविशन्ति, क्वेदं पुनश्चरणमित्यत आह–स्थितकल्प एव नियमात्, नास्थितकल्प इति, तस्मिन्नपि द्वयोः पुरुषयोगयोस्ते स्युः, एतदुक्तं भवति–तीर्थकृत्समीपे चेदं प्रतिपद्येयुः तीर्थकृत्समीपप्रतिपन्नान्यसमीपे वा, णो उवट्ठावियठावगा इति गाथार्थः ॥१२८१॥ द्वारम् ॥ चतुर्थशब्दार्थमाह–'कोवादी' त्यादि ॥ कोपादी क्रोधमानमायालोभाख्यः कषायव्रातः संपरायो भण्यते, संसपर्यन्त्येभिः संसारमिति संपरायाः, तदिह यत्रासौ संपरायः सूक्ष्मोऽवशेषो लोभांशावशेषतयाऽणीयांस्तत्सूक्ष्मसंपरायमिति गाथार्थः ॥१२८२॥ तदपि द्वेधेत्यत आह–'सेढि'मित्यादि कण्ठसिद्धम् ॥८३॥द्वारम् ॥ पञ्चमस्य शब्दार्थमाह–'अहे'त्यादि । अथेत्यव्ययं याथातथ्यार्थे, आङभिविधावेव, ततश्च याथातथ्येनाभिविधिना वा ख्यातं कथितमिति यथाख्यातं अनतिचारत्वादकषायत्वादिति गाथार्थः ॥१२८४॥ 'त' मित्यादि ॥ तद् द्विविधं, छद्मस्थविधानतः केवलिविधानतश्च पुनरेकैकं द्विविधं, तत्राद्यं खयसमयविधाणदो' द्विविधं, द्वितीयं तु सजोगिकेवलिविहाणतो अजोगिकेवलिविहाणदो वेति गाथार्थः ॥१२८५॥ साम्प्रतं निगमयन्नाह–'भणिय'मित्यादि स्पष्टा, नवरं स इत्युपशमः ॥८६॥ 'अहवे'त्यादि ॥ यद्वा आद्यं चारित्रत्रयं क्षयोपशमतः, शमतः क्षपतश्चोक्तं, उपशमात् क्षयाच्च येनोपरिमे द्वे, तेनोपशमं भणित्वा क्षयं वक्ष्य इति गाथार्थः ॥१२८७॥ 'सेढी'त्यादि ॥ वा इत्यथवा श्रेण्यन्तर्भाविनः सूक्ष्मसंपरायमुक्तं, तस्या निर्गतस्य च यथाख्यातं, अतः श्रेणीद्वयमारुयेयं, उभयश्रेणिलाभे चोपशमश्रेणिरादौ ॥१२८८॥ अतः सैव तावदुपदिश्यत इत्यत आह–

अणदंसनपुंसित्थीवेयच्छक्कं च पुरिसवेयं च । दो दो एगंतरिए सरिसे सरिसं उवसमेइ ॥नि.११६॥

उवसामगसेढीए पट्ठवओ अप्पमत्तविरओ उ। पज्जवसाणे सो वा होइ पमत्तो अविरओ वा ॥१२९०॥
अन्ने भणंति अविरयदेसपमत्तापमत्तविरयाणं। अन्नयरो पडिवज्जइ दंसणसमणम्मि उ नियट्टी ॥१२९१॥
भवमणुबंधंति अओऽणंतमणंताणुबंधिणो तेणं। ते चत्तारिवि समयं समेइ अंतोमुहुत्तेणं ॥१२९२॥
तत्तो य दंसणतिगं तओऽणुइण्णं जहन्नयरवेयं। तत्तो बितियं छक्कं तओ य वेयं सयमुदिन्नं ॥१२९३॥
मज्झिल्लकसायाणं कोहाइ समाणजाइए दो दो। एक्केक्केणंतरिए संजलणेणं उवसमेइ ॥१२९४॥
संजलणाईण समो जुत्तो संजोयणादओ जे उ। ते पुव्वं च्चिय समिया नणु सम्मत्ताइलाभम्मि ॥१२९५॥
आसि खओवसमो सिं समोऽहुणा भणइ को विसेसो सिं?। नणु खीणम्मि उइण्णे सेसोवसमे खओवसमो॥
सो चेव नणूवसमो उइए खीणम्मि सेसए समिए। सुहुमोदयया मीसे न तूवसमिए विसेसोऽयं ॥१२९७॥
वेएइ संतकम्मं खओवसमिएसु नाणुभावं से। उवसंतकसाओ पुण वेएइ न संतकम्मंपि ॥१२९८॥
संजोयणाइयाणं नणूदओ संजयस्स पडिसिद्धो। सच्चमिह सोऽणुभावं पडुच्च न पएसकम्मं तु ॥१२९९॥
भणियं च सुए जीवो वेएइ नवाऽणुभावकम्मंति। जं पुण पएसकम्मं नियमा वेएइ तं सव्वं ॥१३००॥
नाणुदियं निज्जीरइ नासंतमुदेइ जं तओऽवस्सं। सव्वं पएसकम्मं वेएउं मुचए सव्वो ॥१३०१॥
किह दंसणाइघाओ न होइ संजोयणाइवेदयओ?। मंदाणुभावयाए जहाऽणुभावम्मिवि कहिंचि ॥१३०२॥
निच्चोदिन्नंपि जहा सयलचउण्णाणिणो तदावरणं। न विघाइ मंदयाए पएसकम्मं तहा नेयं ॥१३०३॥

किरियाएँ कुणइ रोगो मंदं पीलं जहाऽवणिज्जंतो । किरियामेत्तकयं चिय पएसकम्मं तहा तवसा ॥१३०४॥
दंसणमोहाईओ भण्णइ अनियट्टिबायरो परओ । जाव उ सेसो संजलणलोभसंखेज्जभागोत्ति ॥१३०५॥
दंसणतिगे पसंते करणतिगं कुणइ मोहसमणत्थं । आदिदुगंमि विसोही केवलमणियट्टिकरणस्स ॥१३०६॥
संखिज्जइमे तो सेसे लोभोवसमओ कमा कम्मे । जाव उ सेसो संजलण लोभसंखेज्ज भागोत्ति ॥१३०७॥
तयसंखेज्जइभागं समए समए समेइ एक्केक्कं । अन्तोमुहुत्तमेत्तं तस्मासंखेज्जभागंपि ॥१३०८॥

लोभाणु वेयेंतो जो खलु उवसामओ व खवओ वा । सो सुहुमसंपराओ अहखाया ऊणओ किंचि (नि.११७)

उवसामगाहिगारे तस्सभभागोत्ति खवगनिद्देसो । सुहुमसरागातीतोऽहक्खाओ होइ निग्गंथो ॥१३१०॥
यद्धाऊ पडिवन्नो सेढिगओ वा पसंतमोहो वा । जइ कुणइ कोइ कालं वच्चइ तोऽणुत्तरसुरेसुं ॥१३११॥
अनिबद्धाऊ होउं पसंतमोहो मुहुत्तमेत्तद्धं । उइयकसाओ नियमा नियत्तए सेढिपडिलोमं ॥१३१२॥

'अणे'त्यादि । 'अणे'त्यनन्तानुबन्धिनो वक्ष्यमाणशब्दार्थाश्चत्वारः क्रोधमानमायालोभाः तांश्चतुरोऽपि अन्तर्मुहूर्त्तेन युगपदुपशमयति-एकान्तनिस्फुरान् करोति तिरश्चीनरचितत्वात्, तदो 'दंस'त्ति मिथ्यादर्शनादित्रयमेवेति भावना, ततो 'नपुंस'त्ति, पुरुषस्य प्रक्रान्तत्वादनुदीर्णजघन्यतरवेदं, स्त्रीवेदस्य मध्यमतरत्वात् अतिरश्चीनत्वेनैकत्वात्, तथैव भावना, ततो 'इत्थि'त्ति स्त्रीवेदं, मध्यममित्यर्थः, ततो हास्यरत्यरतिभयशोकजुगुप्साषट्कं 'चः' समुच्चयार्थः, ततः प्रधानत्वादात्मीयत्वात्पुरुषवेदं, चः प्राग्वत्, शेषं च, ततो द्वौ द्वौ सदृशत्वेन समानजातीयौ क्रोधौ अप्रत्याख्याननामधेयप्रत्याख्यानावरणौ, एवं मानौ माये लोभौ च माय एकैकेन

सजातीयेनैव संज्वलनेन क्रोधादिनाऽन्तरितौ–व्यवहितौ सदृशमेकस्मिन्नेकस्मिन्नन्तर्मुहूर्त्ते उपशमयति, तिरश्चीनरचितावन्तर्मुहूर्त्तेनैकरचनं चेत्युक्तं भवति, सकलश्रेणीपरिसमाप्तिकालोऽप्यन्तर्मुहूर्त्तमेवेति भावनीयं, इह च किल सञ्ज्वलनलोभमुपशामयंस्त्रिधा करोति, ततो द्वौ भागौ युगपत् शमयति, ततस्तृतीयं खण्डं संख्येयभागशः कृत्वा पृथक्कालभेदेन शमयति, तच्चरमखण्डमप्यसंख्येयानि खण्डानि कृत्वा एकैकमणु समये समये उपशमयति, बलवत्त्वाल्लोभस्य, इह च दर्शनसप्तके प्रशमिते निवर्त्तिबादरः, तत ऊर्ध्वमनिवर्त्तिबादर इति गाथासमुदायार्थः ॥१२८९॥ स्थापना चेयम् ॥'उवसामे'त्यादि । कः पुनरस्याः प्रारम्भकः ? इत्यत आह–अस्याः प्रस्तो(स्था)ताऽप्रमत्तसंयत एव तावत्, अवसानमङ्गीकृत्याह–'पज्जवसाणे' तस्याः प्रतिपतन् स वा भवेद्–अप्रमत्तसंयतो वा स्यात्, प्रमत्तो वाऽविरतसम्यग्दृष्टिर्वा, वाशब्दात् सम्यक्त्वमपि जह्यादिति गाथार्थः ॥१२९०॥ 'अन्ने' इत्यादि । अन्ये भणन्ति–अविरतदेशप्रमत्ताप्रमत्तसंयतानामन्यतरः प्रतिपद्यते, इह दर्शनसप्तकोपशमे निवर्त्यभिधीयत इति गाथार्थः ॥१२९१॥ शब्दार्थं कथयन्नाह–'भवे'त्याद्युक्तार्था ॥९२॥ 'तत्तो ये'त्यादि स्पष्टा, नवरं यथायोगं पूर्वानुवृत्तिर्योज्या ॥९३॥ 'मज्झिल्ले'त्यादि । अनन्तानुबन्धिसंज्वलनयोरन्तरालवृत्तौ मध्यमकषायाविति, शेषं स्पष्टम् ॥९४॥ अत्रानिष्णातबुद्धिर्दुर्विदग्धधीश्चोदक आह–'संजलणे'त्यादि । इह श्रमणस्य संज्वलनानामादिशब्दाद्वास्यादेश्चेदानीं शमो युक्तः प्रागुदयसद्भावात् तदुदयसंभवाविरोधाद्वा, केषां तु न युक्त इत्याह–ये द्वादश संयोजनादिकषायाः, आदिशब्दान्मिथ्यात्वादि च, ते प्रागेव शमिताः, ननु कदेत्याह–सम्यक्त्वादिलाभकाले, तदनुपशमने तदलाभ इति गाथार्थः ॥१२९५॥ 'आसी'त्यादि । तस्मिन् कालेऽमीषां क्षयोपशम आसीत्, अत एव तानि क्षायोपशमिकानीति, अधुना तूपशम उच्यते, इत्युक्ते भणति चोदकः–कोऽनयोः क्षयोपशमशमयोर्भेदः ?, उच्यते–ननूदीर्णे मिथ्यात्वादौ क्षीणे सति–भस्मतां याते सति 'खीणा निव्वाण-

हुताशना'दिति लक्षणात् 'सेसोवसमे य'त्ति शेषे चोपशान्ते-प्रायोऽपनीतशक्तिके क्षयोपशम उच्यते 'दरविज्झायविहाढिये'त्यादि-वचनात् ॥९६॥ पुनर्विभागमलभमान आह-'सो चेवे'त्यादि। उदिते खीणंमि सेसए समिए जो होइ सो चेव समोऽवि भन्नइ, उच्यते-मृद। सूक्ष्मोदयता मनाग्, मनाक् स्फुरणता मिश्रेऽस्ति, 'दरे'त्यादिवचनात्, न तूपशमिते साऽस्ति, 'छारपिहिउव्व उवसंता' इत्यधस्तादेव गतत्वात्, अयमनयोर्विशेषः, आवृतानावृताभोगभोगकृत इति भावनेति गाथार्थः ॥१२९७॥ तथा चाह-'वेदेदी'त्यादि गतार्था, नवरं सत्कर्मेति प्रदेशकर्म आह, तस्मादिहैषां शम उच्यत इति प्रतिष्ठितम् ॥९८॥ पुनरप्याह-'स'मित्यादि। ननु संयोजनादेरुदयः संयतस्य निषिद्धस्तत्किमुच्यते 'समोऽधुण'त्ति, उच्यते, सत्यं, इहासावुदयोऽनुभावं प्रतीत्य प्रतिषिध्यते, न प्रदेशमङ्गीकृत्य, नियमवेद्यत्वात् प्रदेशानुभवस्येति गाथार्थः ॥१२९९॥ तथा चोक्तमागमे-"एवं खलु गोयमा! मए दुविहे कम्मे पन्नत्ते, तंजहा-पएगकम्मे य अणुभावकम्मे य, तत्थ णं जं तं पएसकम्मं तं नियमा वेएइ, तत्थ णं जं तं अणुभावकम्मं तं अत्थेगइयं वेदेइ अत्थेगतियं नो वेएइ" (भग०) तथा चाह-'भणियं चे'त्यादि प्रतीतार्था ॥१३००॥ तथाहि-'ना'इत्यादि। न कर्माणुदितं निर्जीर्यते, न चासदुदेति, किं तर्हि ?, सदुदेति, स नश्च प्रदेशानुभवफलानुभवौ, यस्मादेवं तस्मात्सर्वं सत्कर्म संवेद्य सर्वो मुच्यते, तस्मात्प्रदेशवेद्यानाममीषामधुना शम उच्यत इति ॥१३०१॥ प्रकरणं पुनरप्याह-'किहे'त्यादि, पुव्वर्द्धं कंठं, नवरं प्रदेशत इति वाच्यं, उच्यते-मन्दानुभावतया, यथेह कचिदनुभवकर्मापि नापि विघाताय दृष्टम् ॥१३०२॥ को दृष्टान्तः ? इत्यत आह-'निच्चो'इत्यादि। नित्योदितमपि मतिज्ञानावरणीयादि चतुष्टयं सकलचतुर्ज्ञानिनो न मत्यादिज्ञानविघाताय मन्दानुभावत्वात्, तद्वत्प्रदेशकर्मापीति गाथार्थः ॥१३०३॥ अपि च-'किरिए'त्यादि। जहा रोगो 'किरियाए' खीराइपाणलक्खणाए अवणिज्जंतो मंदं पीलं करेइ तत्पानकृतदुःखमात्रत्वात्, नोदय-

कृतां महतीं, एवं जहा रोगो तहा पएसकम्मं, जहा खीरपाणं तहा तवो, पीडा तुल्लादि, ततः शुभं, कथं ?, इह निरयगतिनामादि-
प्रकृतयो नहि नारकादिभावेनानुभूयन्ते यतिना, न चाननुभूय तद्विनिवृत्तिः, अतोऽवसीयते तपसा प्रदेशकर्मणोऽनुभूतिरिति गाथार्थः
॥१३०४॥स च दर्शनसप्तकोपशमात् परतस्तु क उच्यते ? इत्यत आह–अत्र गाथाद्वयमधिकं ताडपत्रपुस्तके दृश्यते–'दंसणे'त्यादि,
'तद' इत्यादि गतार्थां । 'तस्सासंखिज्जभागंपि' त्ति तस्य लोभस्यासंख्येयतममपि भागमुपशमयन् सूक्ष्मसंपरायो भण्यते ।
एतच्चोत्तरगाथासम्बन्धनार्थमभ्यधायि ॥१३०८॥ आह च–'लोभाणु' मित्यादि । लोभचरमासंखेज्जभागे खंडे वेएंतो उवसामगसे-
ढीए वा खवगसेढीए वा सुहुमसंपरायो भन्नइ, यथाख्यातात् किञ्चिन्न्यून इति गाथार्थः ॥१३०९॥ खवओ वा प्रस्तुताभिधानं
चेत्तन्न, यतः–'उव' इत्यादि । 'तस्सनभागो' तत्समानदेश इति भावना, ततः सूक्ष्मेत्यादिसम्बन्ध इति गाथार्थः
॥१३१०॥ स च– 'बद्धाऊ' इत्यादि । बद्धायुः प्रतिपन्नः श्रेणिगतो वा सामान्येन प्रशान्तमोहो वा विशेषेण यदि कश्चित् कालं
करोति ततोऽनुत्तरवैमानिकेषूत्पद्यते, बद्धस्यायुष्कस्य वेद्यमानत्वात्, च्युते त्वनियमो, नानागतित्वादिति गाथार्थः ॥१३११॥ 'अनी'-
त्यादि । अथानिबद्धायुः प्रतिपद्यते ततो भूत्वा प्रशान्तमोहो मुहूर्त्तमात्राद्धां कालं उदितकषायः प्रोद्दीप्तलोभाणुः कचिद्दण्डकादौ
विषये 'निवर्त्तते' प्रतिपतति श्रेणिप्रतिलोमं अधोमुख इत्येतावत्कालस्थितित्वादस्या इति ॥१३१२॥ महदेतदत्यद्भुतं, निधान-
लाभोऽपि न दौर्गत्यापगमोपहतजीवस्य भवतीत्यत उपदेशमाह–

**उवसामं उवणीया गुणमहया जिणचरित्तसरिसंपि । पडिवायंति कसाया किं पुण सेसे सरागत्थे ?॥नि११८॥**

**दवदूमियंजणदुमो छारच्छन्नोऽग्गिणि व्व पचयओ । दावेइ जह सरूवं तह स कसाओदए मुज्जो ॥१३१४॥**

तम्मि भवे निव्वाणं न लभइ उक्कोसओ व संसारं । पोग्गलपरियट्टद्धं देसूणं कोइ हिंडेज्जा ॥१३१५॥

जइ उवसंतकसाओ लहइ अणंतं पुणोऽवि पडिवायं । न हु भे वीससियव्वं थोवेवि कसायसेसम्मि ।नि.११९।

अणथोवं वणथोवं अग्गीथोवं कसायथोवं च । न हु भे वीससियव्वं थोवंपि हु तं बहुं होइ ।नि.१२०।

दासत्तं देइ अणं अइरा मरणं वणो विसप्पंतो । सव्वस्स दाहमग्गी देंति कसाया भवमणंतं ॥१३१८॥

ओवसमं सामाइयमुइयं खाइयमओ पवक्खामि । सुहुममहक्खायंपि य खयसेढिसमुब्भवं तं च ॥१३१९॥

अण-मिच्छ-मीस-सम्मं अट्ठ नपुंसित्थिवेयछक्कं च । पुमवेयं च खवेई कोहाईए य संजलणे ॥१३२०॥

पडिवत्तीए अविरय-देस-पमत्ता-ऽपमत्तविरयाणं । अन्नयरो पडिवज्जइ सुद्धज्झाणोवगयचित्तो ॥१३२१॥

पढमकसाए समयं खवेइ अंतोमुहुत्तमेत्तेणं । तत्तो च्चिय मिच्छत्तं तओ य मीसं तओ सम्मं ॥१३२२॥

बद्धाऊ पडिवन्नो पढमकसायक्खए जइ मरेज्जा । तो मिच्छत्तोदयओ चिणेज्ज भुज्जो न खीणम्मि ।१३२३।

तम्मि मओ जाइ दिवं तप्परिणामो य सत्तए खीणे । उवरयपरिणामो पुण पच्छा नाणामइगईओ ।१३२४।

खीणम्मि दंसणतिए किं होइ तओ तिदंसणाईओ ? । भण्णइ सम्मद्दिट्ठी, सम्मत्तक्खए कओ सम्मं ? ।१३२५।

निव्वलियमयणकोद्दवरूवं मिच्छत्तमेव सम्मत्तं । खीणं न उ जो भावो सद्दहणालक्खणो तस्स ॥१३२६॥

सो तस्स विसुद्धयरो जायइ सम्मत्तपोग्गलक्खयओ । दिट्ठिव्व सण्हसुद्धब्भपडलविगमे मणूसस्स ।१३२७।

जह सुद्धजलाणुगयं वत्थं सुद्धं जलक्खए सुतरं । सम्मत्तसुद्धपोग्गलपरिक्खए दंसणंऽप्येवं ॥१३२८॥
तम्मि य तइयचउत्थे भवंमि सिज्झंति खइयसमत्ते । सुरनरयजुगलिसु गई इमं तु जिणकालियणराणं ।१३२९।
सेसन्नाणोवगमे सुद्धयरं केवलं जहा नाणं । तह खाइयसम्मत्तं खओवसमसम्मविगमम्मि ॥१३३०॥
निव्वलियमयणकोद्दवभत्तं तेल्लाइमीसियं मदए । न उ सोऽवाओ निव्वलियमीसमयकोद्दवचाए ॥१३३१॥
तह सुद्धमिच्छ सम्मत्तपोग्गला मिच्छमीसिया मिच्छं (मीसं) । होज्ज परिणामओ वा सोऽवाओ खाइए नत्थि ॥
बद्धाऊ पडिवन्नो नियमा खीणम्मि सत्तए ठाइ । इयरो अणुवरओ चिय सयलं सेढिं समाणेइ ॥१३३३॥
बिइयतइए कसाए अट्ठारंभेइ समयमेसिं च । खवियम्मि मज्झभागे पयडीओ सोलस खवेइ ॥१३३४॥
नरयतिरियाणुपुव्वी गई उ चत्तारि आदिजाईओ । आयावं उज्जोयं थावर साहरणं सुहुमं ॥१३३५॥
तिन्नि महानिद्दाओ अट्ठगसेसं तओऽणुदिण्णाणं । वेयाण जहन्नयरं तत्तो बीयं तओ छक्कं ॥१३३६॥
तत्तो य तइयवेयं एक्केक्कं तो कमेण संजलणं । सव्वत्थ सावसेसे मग्गिल्ले लग्गइ पुरिल्ले ॥१३३७॥
दंसणमोहक्खवणे नियट्टि अनियट्टिबायरो परओ । जाव उ सेसो संजलणलोभसंखेज्जभागोत्ति ॥१३३८॥
तदसंखिज्जइभागं समए समए खवेइ एक्केक्कं । तत्थ य सुहुमसरागो लोभाणू जावमेक्कोऽवि ॥१३३९॥
खीणे खवगनिगंठो वीसमए मोहसागरं तरिउं । अंतोमुहुत्तमुदहिं तरिउं थाहे जहा पुरिसो ॥१३४०॥
छउमत्थकालदुचरिमसमए निद्दं खवेइ पयलं च । चरिमे केवललाभो खीणावरणंतरायस्स ॥१३४१॥

'उवे'त्यादि 'दवे'त्यादि, यथेह दावानलानुभूपितोऽञ्जनद्रुमः पुनरुदकासेचनादिमत्ययलाभादंकुरादिरूपतां भूयोऽप्याप्नोति, भस्मच्छन्नो वाऽनलः, तथाऽसावपि जीवो भूत्वा तथाभूतो भूयोऽपि तथा भवति येन-'तम्मी'त्यादि। अथवा स तस्मिन्नेव भवे निर्वाणं न लभते, तस्य क्षपकश्रेण्यायत्तत्वात्, द्वितीयभवे तु लभेतापि, उत्कृष्टतस्तु सम्यग्दृष्टिकाल इति। एवम्-'जदी'त्यादि। 'अण'इत्यादि, अणं ऋणं, शेषं स्पष्टम्। 'दासत्त'मित्यादि स्पष्टा॥ दारं॥१३१३-१८॥ 'ओव'इत्यादि। यतश्च 'सुहुमे'त्यादि। 'अण'इत्यादि। 'पडी'त्यादि, प्रतीतार्था, नवरं पूर्वविदप्रमत्तः शुक्लध्यान्यपि, शेषास्तु धर्मध्यातार एवेति॥१३१९-२०-२१॥ अत्र च-'पढमे'त्यादि, प्रतीतार्था। असावेतत्प्रस्तोता-'यद्धाऊ' इत्यादि। यदि नरकादौ बद्धायुः प्रतिपन्नः स्याद्, स च यद्यनियतकालत्वादायुरन्तस्य प्रथमकषायक्षयमात्रे म्रियेत ततो भूयोऽप्यसौ तांश्चिनुयात्, किं कारणमित्यत आह-मिथ्यात्वोदयकारणावस्थानात्, क्षीणे मिथ्यात्वे, किममूलं प्रवर्त्तेत? इति गाथार्थः॥१३२२-३॥ 'तम्मी'त्यादि। तस्मिन्-कषायचतुष्टये क्षीणे मृतो देवलोकं याति, तथा च सप्तके 'क्षीणे' भस्मतां याते, दिवं यातीति वर्त्तते, क्षपकश्रेणिपरिणामः सन्, न तूत्तरकालं, आह च-उपरतपरिणामः पुनः पश्चान्नानामतित्वाच्चित्रगतिः स्यात्, चतुर्गतिकत्वादिति गाथार्थः॥१३२४॥ ननु च-'खीणम्मी' त्यादि। क्षीणे दर्शनत्रये, सप्तक इत्यर्थः, किमसौ भवति?, उच्यते, त्रिदर्शनातीतः, एकवाक्यतया वा प्रश्नः, उच्यते-सम्यग्दृष्टिः, श्रेणिकवत्॥२५॥ आह-मोहनीयांशत्वात् सम्यक्त्वस्य तत्क्षये कुतः सम्यक्त्वम्?। इत्यत आह-'निव्वलिए' त्याति॥ एवंरूपं मिथ्यात्वमेव यत् क्षीणं तस्स, न तु यो भावः श्रद्धानलक्षणस्तस्य जन्तोः, तस्येदानीमेवोदिततरत्वात्॥२६॥ तथाहि-'सो'इत्यादि॥ स तस्य दृष्टिलक्षणो भावो विशुद्धतरो जायते, सम्यक्त्वपुद्गलक्षयात्, सांसिद्धिकत्वात्, 'दृष्टिरिव' चक्षुरिव॥२७॥ अनुग्रहायाह-'जहे'त्यादि, सुगमम्॥२८॥

'सेम' इत्यादि । यथा वा ज्ञानचतुष्टयापगमे शुद्धतरं क्षायिकं ज्ञानान्तरं प्रादुरस्ति, न त्वज्ञो भवति, एवं क्षायोपशमिकसम्यक्त्वाभावे क्षायिकदर्शनं भवतीति गाथार्थः ॥१३२९-३०॥ तथा चानयोः सापायानपायत्वमाह-'निव्वलि' इत्यादि । मदननिर्वलितकोद्रवभक्तं तैलक्षीरादिमिश्रितं 'मदयेत्' विदध्याद् भ्रामिं, नात्र सन्देहः, सापायत्वात्, अशुद्धप्रकृतित्वात्, न त्वसौ विपर्यये दोष इति गाथार्थः ॥१३३१॥ 'तहे'त्यादि । 'तह सुद्धमिच्छत्तपोग्गलेहिंतो जे जाया संमत्तपोग्गला ते मि(स्स)परिणामया वें ति द्वयी गतिरिति, सोऽपायः क्षायिके नास्ति, न ह्यभुञ्जानः पुद्गलेभ्योऽपराध्यतीति गाथार्थः ॥१३३२॥ इह-'बद्धाऊ'इत्यादि । आयुष्कस्य दोषादिति हृदयं, शेषं स्पष्टं ॥३३॥ ततो दर्शनमोहनीयक्षयानन्तरम्-'बिइए'त्यादि । द्वितीयतृतीयौ चतुर्णामपि मध्यमौ तौ चाद्यौ तान् ग्रस्तौति, क्षपणमङ्गीकृत्यैतेषां च स्वं तत्त्वं क्षपयति, मध्यभागोद्देशेऽन्याः षोडश प्रकृतीः प्रक्षिप्य 'क्षपयति' ग्रसते, प्रशस्तासाधारणरुचित्वाद् अर्द्धोपभुक्तग्रासाग्रकरमर्दकचिमार्द्रकशकलादिवदिति गाथार्थः ॥१३३४॥ ताश्चैताः-'नरये'त्यादि । 'नरयाणुपुव्वि'त्ति प्रथमं तावन्नरकानुपूर्वी नाम यन्नीनस्य तद्गतिबन्धनं, वृषभनासिकन्यस्तसंस्थानीयत्वाद्, यया कर्मपुद्गलसन्तत्या तत्र नीयत इत्यर्थः, यया चोद्वर्त्तो(द्धो)त्तमाङ्गाधश्चरणादिरूपो भवति, एवं सर्वत्र, तथा 'तिरियाणुपुव्वि'त्ति तिर्यगानुपूर्वीनामाप्येवमेव २, तथा 'नारकगति'त्ति यदुदयान्नारकगतावाविर्भवति ३, एवं 'तिरियगति'त्ति यया च तिर्यग्गताविति ४, तथा चतस्रश्चाद्याः प्रकृ(जा)तय एकेन्द्रियद्वित्रिचतुःसञ्ज्ञिताः, तथाऽऽतपनामादिपञ्चकम् ॥३५॥ 'तिन्नी'त्यादि । तिस्रश्च महानिद्रा-निद्रानिद्रा प्रचलाप्रचला स्त्यानर्द्धिरिति च १६ । ततोऽष्टानां शेषं, पश्चार्द्धं तु पूर्ववत् ॥१३३६॥ 'तत्तो ये'त्यादि । इह दर्शनसप्तकक्षायिनं सम्यक्त्वकषायाष्टके मुक्त्वा सर्वत्र भावविशेषे पाश्चात्ये विध्वति सति पौरस्त्ये लगति, अत्यन्तपटुत्वात्, प्रदीर्घशुष्कशष्पकाष्ठशीर्णपतितपत्रगोमयादिसंभृतदावानल-

वत्, सर्वं चैतत् पौर्वापर्येणान्तर्मुहूर्त्तमिति गाथार्थः ॥१३३७॥ स च–'दंसणे'त्यादि। दर्शनमोहनीयक्षये निवर्त्तिबादरः श्रेणिकवत्, परतस्त्वनिवर्तिबादरः आसंज्वलनलोभासंख्येयभागादिति गाथार्थः ॥१३३८॥ 'तदे'त्यादि । तस्य संज्वलनलोभान्त्यसंख्येयभागस्यासंख्येयभागं, शेषं भावितवत् ॥१३३९॥ एवम्–'खीणे'इत्यादि । क्षीणेऽष्टाविंशतिविधे मोहनीये क्षपकनिर्ग्रन्थो यथाख्यातचारित्री भण्यते, स च तस्यामवस्थायां विश्राम्यति, तीर्णमोहसागरत्वात्, कियन्तं कालं यावदित्याह–अन्तर्मुहूर्त्तं, द्रव्यसमुद्रतरितृवदिति गाथार्थः ॥१३४०॥ ततः–'छउमत्थे'त्यादि । छद्म–आवरणं छद्मनि तिष्ठतीति छद्मस्थस्तद्विषयः कालश्छद्मस्थकालः, द्विसमयन्यूनमन्तर्मुहूर्त्तमित्यर्थः, तस्माच्छद्मस्थकालाद् द्वितीयश्चरमः समयोऽस्येति छद्मस्थकालद्विचरमसमयस्तस्मिन् निद्रां क्षपयति प्रचलां च, प्रागक्षपितत्वात्, चशब्दादक्षपितं चान्यत्, उक्तञ्च–"देवगति आणुपुव्वी, विउव्वि संघयण पढमवज्जाइं। अन्नयरं संठाणं" मुक्त्वा यत्र व्यवस्थित इत्यर्थः, तथा तीर्थकरनाम योऽतीर्थकरो भवति आहारनाम चेति, इतरसमयव्यापारमाह–चरमे समये छद्मस्थकालस्य केवलज्ञानोत्पत्तिर्भवति, किंविशिष्टस्य सतः ? इत्याह–क्षीणज्ञानदर्शनावरणान्तरायस्येति, उक्तञ्च–"चरिमे नाणावरणं" इत्येवमादि, ततः 'संभिण्ण' (१३५०) मित्यत्राभिसम्बन्धो भविष्यति, इह चावरणक्षयात्केवलोद्भूतिरिति व्यवहारनिश्चयौ ब्रूतः, तत्र तावत्—

आवरणक्खयसमए नेच्छइअनयस्स केवलुप्पत्ती । तत्तोऽणंतरसमए ववहारो केवलं भणइ ॥१३४२॥

नाणं न खिज्जमाणे खीणे जुत्तं जओ तयावरणे । न य किरियानिट्ठाणं कालेगत्तं जओ जुत्तं ॥१३४३॥

जइ किरियाए न खओ को हेऊ तप्परिक्खए अन्नो ?। अह ताए किह काले अन्नत्थ तई खओऽण्णत्थ ?॥

किरियाकालम्मि खओ जइ नत्थि तओ न होज्ज पच्छावि। जइवऽकिरियस्स खओ पढमम्मिवि कीस किरियाए ?॥
जं निज्जरिज्जमाणं निज्जिण्णंति भणियं सुए जं च। नो कम्मं निज्जरिज्जइ नावरणं तेण तस्समए ॥१३४६॥
जइ नाणमणावरणेऽवि नत्थि तो तं न नाम पच्छावि। जायं च अकारणओ तमकारणओ चिय पडेज्जा ॥१३४७॥
नाणस्सावरणस्स य समयं तम्हा पगासतमसो व। उप्पायव्वयधम्मा तह नेया सव्वभावाणं ॥१३४८॥
उभयावरणाईओ केवलवरनाणदंसणसहावो। जाणइ पासइ य जिणो नेयं सव्वं सयाकालं ॥१३४९॥

'आवरणे'त्यादि। आवरणविघटनसमय एव नैश्चयिकनयस्य केवलज्ञानमुन्मुक्तिमातनुते, क्रियाकालनिष्ठाकालयोरभेदात्, क्रियमाणकृतवत्, भेदे च क्षयक्रियाअभावभावित्वेन ग्रन्थ्यभेदकालेऽपि स्यात्, ततः क्षयसमयादनन्तरे समये केवलमुत्पद्यत इति व्यवहारो भणति, क्रियाकालनिष्ठाकालयोर्भेदात् कृते कृतवत्, अभेदे च कृतत्वेन क्रियावैयर्थ्यमपि स्यात् ॥१३४२॥ तथाहि—'नाण'मित्यादि। 'ज्ञानं' केवलज्ञानाविर्भवनं 'न क्षीयमाणे' न द्राग् दश दिशो विघटति सति केवलज्ञानावरणे संभवति, किं कारणमित्यत आह—'युक्तं' घटमानकं 'तदावरणे' केवलावरणे क्षीणे सति यतः, एतदुक्तं भवति—आद्यसमयस्यावरणक्षयक्रियाकालत्वात् द्वितीयस्य निष्ठाकालत्वात् न क्रियाकाले तत्, किन्तु क्रियोत्तरकालं, न च क्रियानिष्ठयोरेकसमयता युक्ता, क्रियावैयर्थ्यप्रसङ्गात्, यतो नाद्यच समय इदं, किन्तु द्वितीय इति गाथार्थः॥१३४३॥ उच्यते-भवतो ह्यावरणक्षयः अक्रियया क्रियया वेति ?, किंचातः,—'जई'त्यादि। यदि 'क्रियया' सदनुष्ठानलक्षणया 'न क्षयः' न विघटनं तदावरणस्य ततः 'तत्परिक्षये' आवरणपरिक्षये कोऽन्यो हेतुः ?, क्षय्यं च तदाश्रयोः, सर्वज्ञाभ्युपगमात्, अथ मन्यसे तया तत् परिक्षय इति, कहं अन्नत्थ तयी क्रिया ?, प्रथम इति भावना, 'खयोऽणणत्थ'त्ति

क्षपस्त्वन्यत्र, द्वितीय इति भावना, न त्वेकसामयिक एव क्रियानिष्ठाऽभ्युपगमे क्रियासाफल्यमिति गाथार्थः ॥१३४४॥ अपिच–'किरिये'त्यादि। क्रियाकालेऽप्याद्यसमयवर्तिनि क्षयो यदि नास्ति ततोऽसौ पश्चादपि न स्याद् अक्रियत्वात् प्राग्वत्, अपि चैवं त्वदभिप्रेतसमयेऽपि केवलोत्पत्तिर्न, क्रियाशून्यत्वात्, क्षपकनिर्ग्रन्थत्वान्यतरसमयवत्, तथा यदि च द्वितीयसमयेऽक्रियस्य क्षयस्ततः प्रथमसमयेऽपि किं क्रियया ?, तामन्तरेणैव क्षयोऽस्त्विति गाथार्थः ॥१३४५॥ अपि च–न प्रतिज्ञामात्रेणैतन्नीयते, आर्षेऽप्येतदेवास्त इति, आह च–'ज'मित्यादि। यस्मान्निर्जीर्यमाणं निर्जीर्णमिति सूत्रे भणितं 'चलमाणे चलिए जाव निज्जरिज्जमाणे निज्जिण्णे' (भग०)त्ति, अतः क्षीयमाणमावरणं क्षीणमेवेति नानयोः कालभेदः, 'जं च'त्ति यस्माच्च भणितं 'सुते' इत्यनुवर्तते, नोकर्म निर्जीर्यते, किं तर्हि ?, वेद्यते, यतश्चैवं तेन कारणेन तत्समये–चरमसमये न प्रतिबन्धकमस्ति, अप्रतिबन्धकस्य तु केवलं को निरुणद्धि ?, अहं चेद्, उच्यते– ॥१३४६॥ 'जदी'त्यादि। यदि 'ज्ञानं' केवलज्ञानं 'अनावरणेऽपि' आवरणविघटनवेलायामपि 'णत्थि'त्ति नोत्पद्यते, उत्पद्यते त्वन्यकाले यदि 'तो' ततस्तज्ज्ञानं न नाम पश्चादपीति, सर्वज्ञाभावाद्, इ(इ)ष्टं यदि मीमांसकानां भवितेति, अपि च-एवं जातं च अकारणदो यथा द्वितीयसमय इति शेषः तह तं अकारणतोच्चिय पडेज्जा, एतदुक्तं भवति–कारणाज्जायमानं सद्वस्त्वास्थानियममासादयति, यदि त्वकारणाज्जायते, नन्वकारणादेव च्यवेत, निमित्ताविशेषाद्, द्वितीयेऽपि न केवलं, निरावरणत्वाद् आद्यसमयवत् ततश्च 'नित्यं सत्त्वमसत्त्वं वे'त्यादिदोषः, निर्हेतुकविनाशे निर्हेतुकोत्पादात्, न चैवमिति गाथार्थः ॥१३४७॥ 'नाणस्से'त्यादि ॥ तस्मात्कालाभेदेन चोद्व्याविमाविति वाक्यशेषः, कौ ?–उत्पादव्ययधर्मौ, कयोरित्याह–प्रकाशतमसोरिव, किं केवलस्यैवेयं गतिः ?, नेत्याह–यथाऽस्य तथा सर्वेषां भावानामेवमिमौ ज्ञेयाविति गाथार्थः ॥१३४८॥ ततश्च–'उभये'त्यादि स्पष्टा ॥१३४९॥ अत उक्तम्—

संभिन्नं पासंतो लोगमलोगं च सव्वओ सव्वं। तं नत्थि जं न पासइ भूयं भव्वं भविस्सं च ॥ नि. १२१ ॥

बाहिं जह्रा तहंतो संभिन्नं सव्वपज्जवेहिं वा। अत्तपरनिव्विसेसं सपरप्पज्जायओ वावि ॥१३५१॥

संभिन्नग्गहणेण च दव्वमिह सकालपज्जवं गहियं। लोगालोगं सव्वंति सव्वओ खित्तपरिमाणं ॥१३५२॥

तं पासंतो भूयाइं जं न पासइ तओ तयं नत्थि। पंचत्थिकायपज्जयमाणं नेयं जओऽभिहियं ॥१३५३॥

तवनियमनाणरुक्खं आरूढो जं(यं)जिणो अमियनाणी। एत्तो स परंपरओ एत्तो जिणपवयणुप्पत्ती ॥१३५४॥

निज्जुत्तिसमुत्थाणप्पसंगओ जाव पवयणुप्पत्ती। पासंगियं गयमियं वोच्छामि इओ उवग्घायं ॥१३५५॥

अच्छउ तावुग्घाओ का पुण जिणप्पवयणप्पसूइत्ति। तं किंत्तियाभिहाणं पवयणमिह को विभागो सो?॥१३५६॥

एयं पसंगसेसं वोत्तुमुवग्घायवित्थरं वोच्छं। तो सेसदाराइं कमेण तस्संगहो चेमो ॥१३५७॥

'संभिन्न'मित्यादि। 'बाहिं'मित्यादि। सं-एकीभावेन भिन्नं संभिन्नं, किमुक्तं भवति ? इत्याह-यथा बहिस्तथाऽन्तः, घटं हि यथाऽन्तरन्त्यप्रतरे पश्यत्येवं बाह्यान्त्यप्रतरेऽपि यावन्मध्यं, प्रतरद्वय इत्यर्थः। तथा सर्वपर्यायभिन्नं वा, संभिन्नमिति वर्तते, घटपरमाणून् ह्यनन्तानन्तपर्यायानुविद्धान् पश्यतीत्यभिप्रायः, तथाऽऽत्मपरनिर्विशेषं वा संभिन्नं, यथाऽऽत्मानमेवं परमपि जानतः संभिन्नं दर्शनमुच्यते, स्वपरपर्यायभेदेन वा पश्यतः संभिन्नमिति गाथार्थः ॥१३५०-५१॥ 'संभिन्ने'त्यादि। अथवा संभिन्नमिति द्रव्यं गृह्यते, कोऽत्र भावार्थः ?, कालपर्यायौ हि तत्पर्यायौ, ताभ्यां समस्ताभ्यां, समन्ताद्वा भिन्नं संभिन्नं, शेषं सुगमम् ॥५२॥ 'तं'इत्यादि च। 'तवे'त्यादि। तदेवमुक्तेन ग्रन्थकलापाटोपेन 'अयं' ति असौ जिनोऽमितज्ञानी, यस्तपोनियमज्ञानवृक्षमारूढः स उक्तः, तथा 'एत्तो' त्ति अतो

जिनात् स भावपरंपरको लग्नो येनेयं सामायिकनिर्युक्तिरायाता, एतस्माच्च वक्ष्माणा जिनप्रवचनोत्पत्तिः प्रस्तुतेति गाथार्थः ॥५३-५४॥ एतच्च प्रासङ्गिकमुक्तमिति, आह च भाष्यकारः-'निज्जुत्ती' त्यादि। निर्युक्तिसमुत्थानप्रसङ्गतः तपोनियमज्ञानवृक्षारोहणादारभ्य, कियन्तीं भुवं यावदित्याह-यावत्प्रवचनोत्पत्तिः, एतत्किमित्याह-प्रासङ्गिकमेतत्-गतं प्रसङ्गेनैतदुक्तं, इदानीं प्राक्प्रतिज्ञातव्यवहितस्फुरन्मतिर्भूयोऽप्याह-इत ऊर्ध्वं उपोद्घातं वक्ष्ये, कृतमाङ्गल्योपचार इति गाथार्थः ॥ १३५५ ॥ अथाद्याप्यपान्तराले वक्तव्यमुत्पश्यन्नन्यदेवाह-'अच्छउ' इत्यादि। तिष्ठत्वद्यापि तावदुपोद्घातः सान्न्यासिकः, अनवसरत्वात्, का पुनरियं जिनप्रवचनोत्पत्तिर्नामेति, कियदभिधानं चेह तत् प्रवचनं ?, सोऽस्य को वाऽभिधानविभागः ? ॥५६॥ 'एय'मित्यादि। 'एतत्' जिनप्रवचनोत्पत्त्यादि प्रसङ्गशेषं वक्तुं तत इमं वक्ष्ये, प्रतिज्ञातत्वात्, ततः शेषद्वाराणि 'दारविधीय' इत्येवमादीनि, तत्संग्रहश्चायं ॥५३॥तद्यथा—

जिणपवयण उप्पत्ती पवयणएगट्ठिया विभागो य। दारविही य नयविही वक्खाणविही य अणुओगो (नि.१२२)

पासंगियमाइतियं दारविहित्ति विहिउ उवग्घाओ। अणुओगद्दारं पुण चउत्थमिट्ठं नयविहित्ति ॥१३५९॥

सीसायरियपरिक्खा वक्खाणविहित्ति कहणमज्जाया। सुत्तप्फासियणिज्जुत्ति सुत्ताणुगमोऽयमणुओगो ॥१३६०॥

किं पुण चउत्थदारं नयविहिमभिधाय तोऽणुओगोत्ति। चउदारासंगहिया वक्खाणविहित्ति किं गहिया ? ॥१३६१॥

घंधाणुलोमयाए केई न जओ तई कमेणंपि। तीरइ निबंधिउं जे तेणेयं वुद्धिपुव्वत्ति ॥१३६२॥

अंतम्मि उवण्णसिउं पुव्वमणुगमस्स जं नए भणाई। तं जाणावेइ सम्मं वचंति नयाऽणुओगो य ॥१३६३॥

सुत्ताणुगमावसरे गुरुसीसाणुग्गहोवएसत्थं। वक्खाणविहिं जंपइ मूलदाराणहिक्कयंपि ॥१३६४॥

अहवा साहिकयचिय वक्खाणंगंति जं तओऽणुगमे। जं जं वक्खाणंगं तं तं सव्वं जओऽणुगमो ॥१३६५॥
सुत्ताणुगमाईए वक्खाणविही जओ तदंगं सा। जं च सुयावसरे चिय सकलाइं गवाइनायाइं ॥१३६६॥
जइ साणुगमंगं चिय दारविहीए तओ किमाईए। ओयारेउं भन्नइ ? उक्कमकरणे गुणो को णु ? ॥१३६७
दारविहीवि महत्था तत्थवि वक्खाणविहिविघियज्झासो। मा होज्ज तदाईए वक्खाणविहिं निरूवेइ ॥१३६८॥
एत्थेव गुरू सीसं सीसो य गुरुं परिच्छिउं पच्छा। वोच्छिइ सोच्छिई य सुहं मोच्छिइ व सुदिट्ठपेयालो ॥१३६९॥
साऽणुगमंगंपि इहं जइ भन्नइ किं न कीरइ इहेव ?। दाएइ पयत्तयरं वक्खाणविही य सुत्तम्मि ॥१३७०॥
अणुओगाइविभागे वक्खाणविहीवि तप्पसंगेणं। जंपंति केइ तेसिं वोत्तुं सोउं व को जोगो ? ॥१३७१॥
संगहगाहाए पुण अणुओगाईए वॅन्ति दाएंता। जो वन्निओऽणुओगो सोऽयं स विही जवत्थंति ॥१३७२॥
सुयमिह जिणपवयणं तस्सुप्पत्ती पसंगओऽभिहिया। जिणगणहरवयणाओ इमाइं तस्साभिहाणाइं ॥१३७३॥

'जिणे'त्यादि ॥ तत्र जिनात्प्रवचनोत्पत्तिः तथा तदेकार्थिकानि एकार्थिकविभागश्चैतत्त्रयं प्रसङ्गस्य शेषमास्ते, तथा द्वारविधिश्चोपोद्घातः, अयं च प्रकृतो भविष्यतीत्यभिप्रायः, तथा नयविधिश्चतुर्थं मूलद्वारं प्रकृतं, तथा व्याख्यानविधिश्च शिष्याचार्ययोरधिकृतः, अनुयोगश्च सूत्रस्पर्शसूत्रानुगमलक्षणोऽधिकृतः, इत्ययं तावत्सङ्ग्रहगाथापिण्डार्थः ॥१३५८॥ 'पासंगिय'मित्यादि ॥ 'सिरसे'त्यादि गतार्थम् ॥५९-६०॥ एवं तावत्सामान्येनायमर्थः, अथ चोदकः-उपक्रमो निक्षेपोऽनुगमो नय इति क्रमापातिनीमेनां गाथामवबुध्यमानो भावार्थं चानवबुध्यमानः क्रमोपन्यासमस्याः प्रविघट्टयन्नाह—'किं पुण'इत्यादि ॥ किं पुनश्चतुर्थं द्वारमभिधाय, कतमत्

इत्याह- नयविधिं, मूलनयद्वारमित्यर्थः 'तो' ततः पश्चादनुयोगोऽभिहितः, येनोच्यते-'नयविही अणुओगो'त्ति, नन्वेवं क्रियतां 'अणुओगो वक्खाणविही' त्येकं चोद्यम् । द्वितीयमाह-चतुर्द्वारासंगृहीतत्वाद् व्याख्यानविधिर्वा किं गृहीतः, ? नन्वेवमुच्यतां 'दारविही य णयविही अणुयोगो होइ पंचमओ' एषां च रूढ्या स्त्रीलिङ्गं, अन्यथा घुसकिरुपसर्गपूर्वः पुंसी (क्यन्तो घुः पा० लिंगा० )-ति वचनात् पुंलिङ्ग एवेति गाथार्थः ॥१३६१॥ अत्राचार्यदेशीयोऽस्याद्यचोद्यस्य परिहारमाह-'बंधे'त्यादि ॥ केचन परिहारमाचक्षते यन्धानुलोम्यादिदमभ्यधायि भद्रबाहुस्वामिना, 'दारविही य णयविही वक्खाणविही यऽणुओगो'त्ति, एतच्च ण, होढामात्रत्वात्, किमित्यत आह-'जओ तई' यतोऽसौ नयविधिः क्रमेणापि पार्यते निबन्धितुं, तद्यथा-दारविही वक्खाणविधि अणुओगो नयविही य' तेनेयं नयविधिः बुद्धिपूर्वा साभिप्रायिकी, द्वारविधेरनन्तरामिति शेषः, नयानुयोगयोर्व्यत्ययः साभिप्राय इति गाथार्थः ॥१३६२॥ कथमावभिप्रायः ? इत्याह-'अंत मित्यादि ॥ इह भद्रबाहुस्वामी अस्य च चत्वार्यनुयोगद्वाराणि भवन्तीत्यत्राध्ययनादौ 'पुव्व'त्ति पूर्वमन्ते उपन्यस्य नयद्वारं अस्यां तु गाथायामनुगमस्य-अनुयोगस्य पूर्वं यत् नयान् भणति व्यत्ययं कृत्वा तत् ज्ञापयति-नयानुयोगौ प्रतिसूत्रं युगपद् गच्छतः, तदूगर्भत्वात्, आदौ तु क्रमोपन्यासो युगपद्वक्तुमशक्यत्वादेवमादीति गाथार्थः ॥१३६३॥ द्वितीयचोद्यपरिहारमाह-'सुत्ता'इत्यादि ॥ सूत्रानुगमावसरे अनुगमद्वितीयभेदव्याख्यानवेलायां किं ? व्याख्यानविधिं शिष्याचार्यपरीक्षाप्रकारं मूलद्वारेष्वनधिकृतमपि अनुक्तमपि 'जल्पति' अभिधत्ते संग्रहगाथायां, किमर्थमित्यत आह-गुरुश्च शिष्यश्च तौ तयोरनुग्रह इति विग्रहस्तदुपलक्षित उपदेशस्तथोच्यते तदर्थं, एतदुक्तं भवति-सुश्रव्यं सुव्याख्येयं च कथं नाम शास्त्रं स्यादित्येवमर्थमिति, यदुक्तं भवति-गुणवताऽऽचार्येण गुणवते शिष्यायाऽस्खलितादिसूत्रमुच्चार्य देयमित्येवमर्थमित्यतः क इवापराधः ?, ॥६४॥ एवं तावदनधि-

कारपक्ष उक्तः, अधिकारपक्षेऽप्ययमुं दोषं परिजिहीर्षुराह–'अहवे'त्यादि ॥ 'जं साऽहिकयच्चिय' त्ति यस्मादसौ व्याख्यानविधिः अधिकृत एव–प्रस्तुत एव, क्वेत्याह–अनुगमे–तृतीये द्वारे, कुत एतत् ? इत्याह–व्याख्यानाङ्गत्वात्, ततः किमिति चेदुच्यते 'ततो'त्ति ततः तस्मान्न दोषश्चतुर्द्वारासंग्रहलक्षणः, एतदेव भावयन्नाह–यद्यद् व्याख्यानाङ्गं तत्तत्सर्वं यतोऽनुगम इत्यतोऽधिकृतैव सेति गाथार्थः ॥१३६५॥ अस्मिन्नेव च पक्षे इदमपरमाह, यतश्च–'सुत्ते'त्यादि ॥ सुत्ताणुगमादीये वक्खाणविही जओ भणिओ न्यायविदा परमेश्वरेण 'सुत्तं पयं पयत्थो' इत्याद्येतदुपलक्षकवचनाद् अतोऽनुयोगाङ्गं सेति, यस्माच्च 'श्रुतावसर एव' सूत्रानुगम-प्रस्ताव एव 'सकलानि' प्रयोजनवन्ति गवाद्युदाहरणानि भवन्ति 'गोणी चंदणकंथे'त्यादीन्युत्सर्गेण, तस्मादनुगमाङ्गं सेति को वक्तीयं चतुर्द्वारासंगृहीतेति, अयं चात्र भावार्थः–अवश्यमेव सूत्रे व्याख्यायमाने योग्यायोग्यनिभालनं कर्त्तव्यं, यत उक्तम्–"आमे घडे निहित्तं जहा जलं तं घडं विणासेइ । इय सिद्धंतरहस्सं अप्पाहारं विणासेइ ॥ १ ॥" इति गाथार्थः ॥१३६६॥ तदेवं स्थिते द्वार-भाविवस्त्वङ्गीकृत्य चिचोदयिषुराह–'जदी' त्यादि ॥ यद्यसौ व्याख्यानविधिः 'अनुगमाङ्गं' सूत्रानुगमादेः कारणमेव ततः 'द्वार-विधेः' उपोद्घातस्यादाववतार्य किं भण्यते ?, कस्माद्भणिष्यत इत्यर्थः, येनोच्यते–'गोणी चंदनकंथा' ततः उद्देसे निद्देसे यनिग्गमे' इत्यादि ॥६७॥ ननु को व्युत्क्रमकरणे गुणो लभ्यत इति ?, उच्यते–'दारे'त्यादि ॥ द्वारविधिरपि 'उद्देसे निद्देसे'इत्येवमादिका महार्था बहुवृत्तान्ता कल्याणहेतुत्वात् सूत्रवत्, ततश्च तत्रापि व्याख्यानविधिविपर्यासः अविनीतादिप्रदानलक्षणोऽतिरोपणपार्श्वश्रवणल-क्षणो वा मा भूत् अतस्तदादौ उपोद्घातविधेरादौ व्याख्यानविधिं निरूपयति अतस्ततोऽयमवतार्येह भण्यत इति गाथार्थः ॥१३६८॥ कथं नु नाम–एत्थेवे'त्यादि ॥अत्रैव' द्वारविधावाचार्यो जिज्ञासितगुणदोषाय गुणवते शिष्यायानुयोगं वक्ष्यति, शिष्यश्च

गुणभद्राचार्यसंनिधावेव श्रोष्यति मोक्ष्यति वा दोषवन्तं शिष्यमाचार्यं इति गाथार्थः ॥ १३६९ ॥ तदेवमप्युक्ते निरुक्तकारी चोदक आह–'सा'इत्यादि॥ स व्याख्यानविधिः अनुगमाङ्गमपि सन् 'इह'अस्मिन् द्वारविधेरादौ यदि भण्यते अपि बहुवृत्तान्ततनय इमा परिभ्राम्य ततः 'किं' किमिति 'इहैव' अस्यामेव संग्रहगाथायामसौ नोपन्यस्यते एवं यदुत 'जिणपवयणउप्पत्ती पवयणएगट्ठिया विभागो य। वक्खाणविही दारविही णयविही होइ अणुयोगो ॥१॥" येनोच्यते–'सुत्ताणुगमाईए सा भणिय'त्ति, उच्यते, संग्रहगाथायां षष्ठस्थानेऽस्योपन्यासं कुर्वन् 'व्याख्यानविधेः' शिष्याचार्यपरीक्षाविधेः प्रयत्नतरं दर्शयति, अवश्यमसौ कार्येत्यर्थः, क्व इ-त्याह–'सूत्रे' सूत्रानुगम इति, एतदुक्तं भवति–यद्यपि कथञ्चिदुपोद्घातादौ न कृतो नाम, सूत्रानुगमावसरे त्ववश्य कर्त्तव्य इति ज्ञाप नार्थं, उपन्यासं त्वेवं चक्रे कृतीति न दोषः, अयं तावद् भाविवस्तुसंग्रहगाथायां मध्यमभङ्ग्या अर्थ उक्तः ॥७०॥ 'अणुयोग'इत्यादि ॥ इह केचिज्जल्पन्ति, किम् ?, अत आह–व्याख्यानविधिरपि संग्रहगाथाषष्ठद्वारभावी अनुयोगादिविभागे अणुओगो य णि ओओ इत्याद्यत्र वक्ष्यमाणे तत्प्रसंगेनानुयोगाद्यवसरे भण्यते कया प्रत्यासत्त्या ? इत्याह–तेषामनुयोगादीनां को योग्यः क उचितो वक्तुं श्रोतुं वा ? इत्यनया प्रत्यासत्त्या ॥७१॥ संग्रहगाथायां तु षष्ठद्वारे मीलयन्तः किमुक्तवन्तः ? इत्यत आह–'संग' इत्यादि ॥ संग्रहगाथायां तु अनुयोगस्य सप्तमद्वारस्यादौ दर्शयन्त एतां ब्रुवते, किमित्याह–'ओवे'त्यादि, यः सविभागद्वारे 'वर्णितः' व्याव-र्णितः अनुयोगः सूत्रार्थयोरनुकूलः सम्बन्धः, 'वच्छगे'त्यादिना सोऽयमिति स इदानीमुच्यते, क्व ?, सूत्रानुगमादाविति सामर्थ्याद्-गम्यते, किंविशिष्टः ? इत्याह–स विधिः व्याख्यानविधिर्यदर्थं, मूलद्वारासंगृहीतोऽप्यस्यामभिधीयते निर्युक्तिकृतेति गाथार्थः ॥ ॥१३७२॥ 'सुय'इत्यादि ॥ यदुक्तं केयं जिनप्रवचनोत्पत्तिरिति, ननूक्तमर्हद्वचनं जिनप्रवचनं, अस्य च निर्युक्तिसमुत्थानप्रसङ्गत

एवोत्पत्तिरुक्ता जिनगणधरेभ्यः सकाशात्, यत्पुनरुक्तं तद्वा जिनप्रवचनं कियदभिधानं ? अभिधानविभागो वाऽस्य कः ? इति ॥१३७२॥ अत्रोच्यते–

एगट्ठियाइं तिन्नि उ पवयण सुत्तं तहेव अत्थो य। एक्केक्कस्स य एत्तो नामा एगट्ठिया पंच ॥ [नि.१२३]
एगट्ठियाइं तिन्नि उ पवयण सुत्तं तहेव अत्थो य। सामन्नं सुयनाणं विसेसओ सुत्तमत्थो य ॥१३७४॥दारं
जमिह पगयं पसत्थं पहाणवयणं व पवयणं तं च। सूएइ सवइ सुव्वइ सिव्वइ सरए व जेणत्थं ॥१३७५॥
सिंचइ खरइ जमत्थं तम्हा सुत्तं निरुत्तविहिणा वा। जो सुत्ताभिप्पाओ सो अत्थो अज्जए जम्हा ॥१३७६॥
अविवरियं सुत्तं पिव सुट्ठिय वावित्तओ व सुत्तंति। जं सुत्तं वक्खेयं अत्थो जं तस्स वक्खाणं ॥ १३७७ ॥
सह पवयणेण जुत्ता न सुयत्थेगत्थया परोप्परओ। एगत्थाणंपि पुणो किमिहेगत्थाभिहाणेहिं ? ॥१३७८॥
जुज्जइ य विभागाओ तिण्हवि भिन्नत्थया न चेयरहा। अत्थेणाभिन्नाइं कमलं सामण्णओ चेगं ॥ १३७९ ॥
मउलं फुल्लंति जहा संकोयवियोहमित्तभिन्नाइं। किंचिम्मत्तविभिन्ना सामन्नं पवयणं नेयं ॥१३८०॥
अविवरियं तह सुत्तं विवरियमत्थोत्ति बोहकालम्मि। तदुभयमत्थो य जहा वीसुं बहुपज्जवा ते य ॥ १३८१ ॥
सामन्नविसेसाणं जह वेगाणेगया ववत्थाए। पवयणमुभयं च तयं तियं च बहुपज्जयं वीसुं ॥ १३८२ ॥
एवं सुत्तत्थाणं एगाणेगत्थया ववत्थाए। इयरस्साभिन्नत्थं संववहारो य तदवेक्खो ॥ १३८३ ॥
अहवा सव्वं नामं वंजणसुद्धियनयस्स भिन्नत्थं। तो जुत्ताइं तेसिं वीसुं पज्जायनामाइं ॥१३८४॥
संववहारट्ठाए जम्हा जेणेगया न निच्छयओ।

'एगट्ठिये'त्यादि ॥ अभिन्नैकार्थवाचकानि वचनान्येकार्थकानि, तानि च त्रीण्येव भवन्ति, न द्वे चत्वारि वेति, कस्य ?, श्रुतज्ञानस्येति गम्यते, कानि च तानीत्यत आह–प्रवचनं सूत्रं तथैवार्थश्च, सर्व एते त्रयस्तद्वाचका इति भावनीयं, तथा एकैकस्य च प्रवचनादेः 'नामानि' अभिधानानि पञ्च पञ्च भवन्ति, एकाधिकविभागा इत्यर्थः, यद्वक्ष्यति 'सुतधम्मे'त्येवमादि 'सुत्तं तंत' मित्येवमादि 'अणियोगो ये'त्येवमादि, अयं तावत्समुदायार्थ इति द्वारगाथार्थः ॥१३७३॥ प्रवचनद्वारं व्याचिख्यासुराह–'जमिहे'त्यादि ॥ इह हि यत् प्रगतं जीवादिषु श्रद्धेयज्ञेयचरणरूपतया तत्प्रवचनं, प्रशस्तं वा यद्वचनं माङ्गलिकत्वात्, प्रधानवचनं वा परमसकलसत्त्वहितप्रवृत्तत्वात् 'तं च'त्ति तच्च 'सामन्नं' ति सामान्येन श्रुतज्ञानमुच्यते, विशेषतस्तु सूत्रमर्थश्चेति गाथार्थः ॥१३७४॥ इति द्वारम् ॥ द्वितीयं द्वारमाह–'सिन्चनी'त्यादि ॥ 'षिञ् क्षरणे' इत्यर्थक्षरणात् श्रुतं, तथा 'निरुत्तविहिणा वा' सुयं विउप्पाइज्जइ'त्ति, तत्राह–'सूते'-इत्यादि, 'सूत्रं' अर्थसूचनात्सूत्रम् ॥७५॥ 'अवी'त्यादि ॥ अविच्छियमाणमर्थतः सुप्तमिवास्ते सुप्तपुरुषवदिति प्राकृताभिधानात् सुत्तं, तथा गुम्फितत्वात्सूक्तं, व्याणित्वार्थेषु सूक्तं पुनः 'सुत्तं'ति द्वारम् । अर्थद्वारमाह–यत्सूत्राभिप्रायः सोऽर्थोऽर्थ्यमाणत्वादिति, अत उक्तम्–'एगट्ठियाणि तिन्नि उ पवयण सुत्तं तहेव अत्थो य।" त्ति गाथार्थः ॥१३७६॥ आह–'सहे'त्यादि ॥ 'प्रवचनेन सह' प्रवचनेन सार्द्धं युक्ता, कयोः का इति ?, उच्यते–मिथः सूत्रार्थयोरेकार्थतेति गम्यते, कुतः ?, सूत्रत्वाद(सूत्रा)र्थस्य प्रवचनत्वात् प्रवचनस्यापि चा(च सूत्रा)र्थत्वात्, का तर्हि न युक्तेत्यत आह–'न सुत्तत्थेगया परोप्परओ'त्ति कुतः ?, सूत्रस्यानर्थत्वात् अर्थस्यापि चासूत्रत्वात्, तथा चाह–'ज'मित्यादि स्पष्टमित्येकं चोद्यमिति गाथार्थः ॥१३७७॥ पर एवाह–'जुज्जइ वे'त्यादि ॥ 'युज्यते वा' घटते वा, त्रयाणामपि प्रवचनादीनां 'भिन्नार्थता' पृथगर्थतैव युज्यते, न केवलं सूत्रार्थयोः, कुतः ?–'विभागात्' विभागसद्भावात्,

न चेद् भिन्नार्थता युज्यते तत 'इतरथा' अन्यथा एकार्थिकत्वे त्रयाणामपि पुनरेकार्थिकाभिधानमनर्थकं, यत्प्रतिज्ञातम् 'इक्केक्कस्स ये'-त्यादिना पश्चार्द्धेनेति गाथार्थः ॥१३७८॥ सर्वत्राचार्यो भावार्थमाह–'मउल'मित्यादि ॥ 'जहे'ति यथा येन प्रकारेण 'मउलं फुल्लं'ति मुकुलफुल्ले अविकसितौ पद्मविशेषौ ते च सङ्कोचविकाशमात्रपर्यायभिन्ने कमलात्, अर्थेन त्वभिन्ने कमलसामान्येनैकत्वात्, नचैतेषां पुनरेकार्थिकविभागो न युक्तः, किं तर्हि ?, इष्ट एव, तद्यथा–कमलस्यैकार्थिकानि पद्मारविन्दपङ्कजसरोजतामरसजलरुहादीनि, मुकुलस्य तु सङ्कुचितवृन्द कुड्मलपोण्डाप्रविबुद्धमित्यादि, फुल्लस्य तु विकचं विकसितमुत्फुल्लं बुद्धमुद्भिन्नमेवमादीनि, अतः सर्वं युक्तमित्येष दृष्टान्त इति गाथार्थः ॥१३७९॥ दार्ष्टान्तिक माह–'अवी'त्यादि ॥ 'तथा' तेन प्रकारेण अविवृतं सच्छब्दवस्तुसूत्रमाख्यायते, संवृणाकारत्वात्, कुड्मलादिवत्, तदेव 'बोधकालंमि'त्ति बोधकाले व्याख्यानकाले विवृतं सदर्थं उच्यते, प्रकटीभूतत्वाद्विकचादिवत्, तथा किञ्चिन्मात्रविभिन्नौ सूत्रार्थौ सामान्यं प्रवचनं ज्ञेयं उभयतटस्पर्शित्वात् पद्मादिवत्, न चैतेषां प्रवचनसूत्रार्थानां पुनरेकार्थिकाभिधानं न युक्तं, किं तर्हि ?, युक्तमेव, यद्वक्ष्यति 'सुयधम्मे'त्येवमादीति गाथार्थः ॥१३८०॥ अस्यैवार्थस्य विवेचनार्थमुदाहरणान्तरमाह–'सामन्ने'त्यादि ॥ यथा चेह सामान्यविशेषयोरेकता दृष्टा तथाऽनेकता च दृष्टा, कुत एतत् ? इत्युच्यते–सामान्यस्य विशेषेभ्योऽन्यत्वाभावात् विशेषमात्रस्य चाभावात्, एवं विशेषाणामपि सामान्यान्यत्वाभावात् सामान्यमात्रस्य चाभावात्, कथमेतदित्याह–'व्यवस्थया', विवक्षयेत्यर्थः, तथा यथा चैतत्सामान्यविशेषोभयमर्थाभिधानादवरुध्यते–अर्थशब्देनोच्यते, उभयपरिणामसंनिधानरूपत्वादर्थस्य, यथा च ते सामान्यविशेषार्थाः 'बीसुं'ति प्रत्येकं २ बहुपर्याया दृष्टास्तद्यथा–सामान्यं सत्ता भाव इति, तथा विशेषो भेदः पर्याय इति, द्रव्यं वस्त्वर्थ इति गाथार्थः ॥१३८१॥ एवं किमित्यत आह–'एव'मित्यादि ॥ एवं सूत्रार्थयोः सामान्यविशेष-

कल्पयोः व्यवस्थया एकताऽनेकता च वर्तते, पवयणमुभयं च तयंति, तच्चोभयं सूत्रार्थलक्षणं प्रवचनाभिधानादवरुध्यते—प्रवचनमुच्यते, उभयसंनिध्युपचितत्वात्तस्य, 'तियं च' सूत्रार्थप्रवचनलक्षणं 'वीसुं२' प्रत्येकं२ बहुपर्यायं वर्तत इति, 'सुयधम्म' इत्यादिना प्रकारेण कोऽत्र विरोधः ? इति गाथार्थः ॥ १३८२ ॥ 'अहवे' त्यादि । यद्वा 'सर्वं नाम' सर्वमभिधानं व्यञ्जनशुद्धिकनयस्य मतेन भिन्नार्थं अपूर्वापूर्वार्थं, शब्दभेदे त्वर्थभेदात्, घटपटकटशकटवटखटध्वजादिवत्, इतरनयाभिप्रायात्तु अभिन्नार्थं किञ्चिद्वचनं, शब्दभेदेऽप्यर्थाभेदाद्, इन्द्रशक्रपुरन्दरादिवत्, अथवा संव्यवहारमन्ययदर्शनाद्, घटकुटकुम्भादिवत्, प्रायोवृत्त्या च व्यवहारनयापेक्षया लोकसंव्यवहारप्रसिद्धेरिति गाथार्थः ॥१३८३॥ 'संवे' त्यादि । 'यस्मात्' येन कारणेन 'एकता' एकार्थता संव्यवहारार्थतया, न तु निश्चयतः, 'तो' तस्माद् 'युक्तानि' घटमानकानि 'तेषां' प्रवचनसूत्रार्थानां 'वीसुं' प्रत्येकं२ 'पर्यायनामानि' एकार्थिकानि व्यवहारनयादेशत इति ॥१३८४॥ अत आह—

सुयधम्म तित्थ मग्गो पावयणं पवयणं च एगट्ठा । सुत्तं तंतं गंथो पाढो सत्थं च एगट्ठा । नि. १२४ ।

थोहो सुयस्स धम्मो सुयं व धम्मो स जीवपज्जाओ । सुगईए संजमम्मि य धरणाओ वा सुयं धम्मो ॥१३८६॥

तित्थंति पुव्वभणियं संघो जो नाणचरण संघाओ । इह पवयणंपि तित्थं तत्तोऽणत्थंतरं जेण ॥१३८७॥

मज्जिज्जइ सोहिज्जइ जेणं तो पवयणं तओ मग्गो । अहवा सिवस्स मग्गो मग्गणमन्नेसणं पंथो ॥१३८८॥

पगयाइ अभिविहीए पवयणं पावयणमाइ वयणं वा । सिवपावयवयणं वा पावयणं पवयणं भणियं ॥१३८९॥

सुत्तं भणियं तंतं तणिज्जए तेण तम्मि व जमत्थो । गंथिज्जइ तेण तओ तम्मि व तो तं मयं गंथो ॥१३९०॥

पढणं पाढो तं तेण तम्मि व पढिज्जएऽभिधेयंति । सासिज्जए तेण तहिं व नेयमाया व तो सत्थं ॥१३९१॥

अणुओगो य निओगो भास विभासा य वत्तियं चेव । एए अणुओगस्स उ नामा एगट्ठिया पंच । नि. १२५।

अणुओयणमणुओगो सुयस्स नियएण जमभिधेएणं । वावारो वा जोगो जो अणुरूवोऽणुकूलो वा ॥१३९३॥

अहवा जमत्थओ थोवपच्छभावेहिं सुयमणुं तस्स । अभिधेए वावारो जोगो तेणं व संबंधो ॥१३९४॥

'सुय' इत्यादि । प्रवचनं श्रुतधर्मोऽभिधीयते, श्रुतस्य धर्मः–स्वभावः श्रुतधर्मो, बोधस्वभावत्वात्, श्रुतस्य बोधो धर्म उच्यते, जीवपर्यायत्वाद्वा समानाधिकरणः, सुगतिधरणाद्वा श्रुतं धर्म उच्यते, 'तित्थं' प्राग्वत्, मृज्यते–शोध्यतेऽनेनात्मेति मार्गः, शिवान्वेषणं वा, तथा प्रगतमभिविधिना च जीवादिष्विति वचनं प्रावचनं, प्रवचनं तु प्राग्वत्, प्रवचनविभाग उक्त इति । 'सुत्त'त्ति प्राग्वत्, 'तनु विस्तारे' तन्यतेऽनेनार्थ इति तन्त्रमित्येवमादिकारकयोजना, अर्थग्रन्थनाद् ग्रन्थ इत्येवमादि, अभिधेयपठनात्पाठः, शासनाच्च शास्त्रमिति सूत्रविभाग इति द्वारगाथोघार्थः ॥१३८५॥ 'बोधो'इत्यादि । सर्वं भाष्यमुक्तार्थं सुगमं चेति ॥१३८६–८७–८८–८९–९०–९१॥ अधुनाऽनुयोगादिविभागमाह–'अणुओगे'त्यादि द्वारगाथा, तत्रानुयोजनमनुयोगः, किञ्च तत्?, श्रुते निजाभिधेयसम्बन्धनं, अथवा योग इति व्यापार उच्यते, ततश्चानुरूपोऽनुकूलो वा योगो, यथा घटशब्देन घटो भण्यते, अणुना वा योगो ऽणुयोग इत्येवमादि, तथा निश्चितो योगो, यथा घटध्वनिना घट एवोच्यते, नान्य इत्येवमादि, भाषणं भाषा, व्यक्तीकरणमित्यर्थः, तद्यथा-घटनाद् घटः, चेष्टावानित्यर्थः, विविधा भाषा विभाषा, यथा घटः कुटः कुम्भ इत्येवमादि, 'वार्तिकं' वृत्तौ भवं वार्तिकं, अशेषपर्यायकथनमित्यर्थः, अनुयोगस्य पुनरमूनि एकार्थिकानि पञ्चेति समुदायार्थः ॥१३९२॥ आद्यं द्वारं तावद् भाष्यकार आह–'अणु'इत्यादि,

'अहवे'त्यादि, उक्तार्थम् ॥१३९३-९४॥ साम्प्रतमाद्यद्वारे प्रतिद्वारगाथामाह-

**नामं ठवणा दविए खेत्ते काले य वयण भावे य। एसो अणुओगस्स उ निक्खेवो होइ सत्तविहो ।नि. १२६।**

नामस्स जोऽणुओगो अहवा जस्साभिहाणमणुओगो। नामेण व जो जोग्गो जोगो नामाणुओगो सो ॥१३९६॥
ठवणाए जोऽणुओगोऽणुओग इति वा ठविज्जए जं च। जा वेह जस्स ठवणा जोग्गा ठवणाणुओगो सो ॥१३९७॥
दव्वस्स जोऽणुओगो दव्वे दव्वेण दव्वहेऊ वा। दव्वस्स पज्जवेण व जोगो दव्वेण वा जोगो ॥१३९८॥
बहुवयणओऽवि एवं नेओ जो वा कहे अणुवउत्तो। दव्वाणुओग एसो एवं खेत्ताइयाणंपि ॥१३९९॥
दव्वस्स उ अणुओगो जीवदव्वस्स[वा अ]ऽजीवदव्वस्स। एक्केक्कम्मिवि भेया हवंति दव्वाइया चउरो ॥१४००॥
दव्वेणेगं दव्वं संखाईयप्पएसमोगाढं। कालेऽणाइ अनिहणो भावे नाणाइयाऽणंता ॥१४०१॥
एमेव अजीवस्सवि परमाणू दव्व एगदव्वं तु। खेत्ते एगपएसे ओगाढो सो भवे नियमा ॥१४०२॥
समयाइठिइ असंखा ओसप्पिणीओ हवंति कालम्मि। वण्णाइ भावऽणंता एवं दुपएसमाईवि ॥१४०३॥
दव्वाणं अणुओगो जीवाजीवाण पज्जवा नेया। तत्थवि य मग्गणाओऽणेगा सट्ठाणपरठाणे ॥१४०४॥
वत्तीए अक्खेण व करंगुलाईण वावि दव्वेणं। अक्खेहि य दव्वेहिं अहिगरणे कप्प-कप्पेहिं ॥१४०५॥
पन्नत्ति जंबुदीवे खेत्तस्सेमाइ होइ अणुओगो। खेत्ताणं अणुओगो दीवसमुद्दाण पन्नत्ती ॥१४०६॥
जंबुद्दीवपमाणं पुढविजियाणं तु पत्थयं काउं। एवं मविज्जमाणा हवंति लोगा असंखेज्जा ॥१४०७॥

खेत्तेहिं बहू दीवे पुढविजियाणं तु पत्थयं काउं। एवं मविज्जमाणा हवंति लोगा असंखेज्जा ॥१४०८॥ दारं॥
खेत्तम्मि उ अणुओगो तिरियं लोगम्मि जम्मि वा खेत्ते। अड्ढाइयदीवेसु छलद्धवीसाए खेत्तेसु ॥१४०९॥
कालस्स समयरूवण कालाण तदाइ जाव सव्वद्धा। कालेणऽनिलाऽवहारो कालेहिं उ सेसकायाणं ॥१४१०॥
कालम्मि बीयपोरिसि समासु तिसु दोसु वावि कालेसु। वयणस्सेगवयाई वयणाणं सोलसण्हं तु ॥१४११॥
वयणेणायरियाइ एक्केणुत्तो बहूहिं वयणेहिं। वयणे खओवसमिए वयणेसु उ नत्थि अणुओगो ॥१४१२॥
भावस्सेगयरस्स उ अणुओगो जो जहट्ठिओ भावो। दोमाइसंनिगासे अणुओगो होइ भावाणं ॥१४१३॥दारं।
भावेण संगहाईणऽण्णयरेणं दुगाइभावेहिं। वयणे खओवसमिए भावेसु य नत्थि अणुओगो ॥१४१४॥
अहवा आयाराइसु भावेसुवि एस होइ अणुओगो। सामित्तं आसज्ज य परिणामेसुं बहुविहेसुं ॥१४१५॥दारं॥
दव्वे नियमा भावो न विणा ते यावि खेत्तकालेहिं। खेत्ते तिण्हवि भयणा कालो भयणाए तीसुंपि ॥१४१६॥
आधारो आधेयं च होइ दव्वं तहेव भावो य। खेत्तं पुण आहारो कालो नियमाउ आहेओ ॥१४१७॥
एसोऽणुरूवजोगो गओऽणुओगो अओ विवज्जत्थं। जो सो अणणुओगो तत्थेमे होंति दिट्ठंता ॥१४१८॥

'नाम'मित्यादि॥ आद्यद्वारव्याचिख्यासयेदमाह—'नामस्से'त्यादि स्पष्टा, नवरं 'योग्यः' अनुकूल इत्येवं सर्वत्र ॥९५-६॥द्वारम्॥ 'ठवणे'त्यादि, सुगमा ॥द्वारम्॥९७॥ द्रव्यानुयोगद्वारमाह—'दव्वस्से'त्यादि॥ 'बहू'इत्यादि॥ द्रव्यस्य योऽनुयोगः, सो दव्वाणुयोग इत्यत्र सम्बन्धः, तथा 'द्रव्ये' निषद्यादावधिकरणभूते 'द्रव्येण' करणभूतेन क्षीरपाषाणदलकेन, इह च द्रव्यस्य द्रव्येण द्रव्य इत्येव

पूर्वकत्वाद्, आत्मानमन्तरेण च तदभावात्, न च स्कन्धा एव प्रयत्नवन्तः, तेषां प्रतिक्षणभङ्गुरत्वादनुसन्धानाभावाद्, वासनाया अपि द्वयोर्वास्यवासकयोर्दर्शनात्, तिलमालतीपुष्पयोरिवेति ॥२०५८॥ उत आह—

संसारीयरथावरतसाइभेयं मुणे जीवं ॥२०५९॥

एवमुवओगलिंगं गोयम ! सव्वप्पमाणसंसिद्धं । संसारीयरथावरतसाइभेयं मुणे जीवं ॥२०६०॥

जइ पुण सो एगो चिय हवेज्ज वोमं व सव्वपिंडेसु । गोयम ! तदेगलिंगं पिंडेसु तहा न जीवोऽयं ॥२०६१॥

नाणाजीवा कुंभादयो व्व भुवि लक्खणाइभेयाओ । सुहदुक्खबंधमोक्खाभावो य जओ तदेगत्ते ॥२०६२॥

जेणोवओगलिंगो जीवो भिन्नो य सो पइसरीरं । उवओगो उक्करिसावगरिसओ तेण तेऽणंता ॥२०६३॥

एगत्ते सव्वगयत्तओ न मोक्खादओ नभस्सेव । कत्ता भोत्ता मंता न य संसारी जहाऽऽगासं ॥२०६४॥

एगत्ते नत्थि सुही बहुवघाउत्ति देसनिरुउव्व । बहुतरबद्धत्तणओ न य मुक्को देसमुक्को व्व ॥२०६५॥

जीवो तणुमेत्तत्थो जह कुंभो तग्गुणोवलंभाओ । अहवाऽणुवलंभाओ भिन्नम्मि घडे पडस्सेव ॥२०६६॥

तम्हा कत्ता भोत्ता बंधो मोक्खो सुहं च दुक्खं च । संसरणं च बहुत्तासव्वगयत्तेसु जुत्ताइं ॥२०६६॥

'एव'मित्यादि सुखोन्नेयेति ॥ आह–'यदी'त्यादि । यदि पुनः संसार्यसंसारित्रसस्थावरादिभेदभिन्नो जीवसङ्घातः सर्वपिण्डेषु–सर्वमूर्तिमत्स्वेक एव स्याद् व्योमवत् क इव दोषः स्यात्, न चैतत्स्वाभिप्रायमात्रेण पृच्छ्यते, यत उक्तम्–"एक एव हि भूतात्मा, भूते भूते प्रतिष्ठितः । एकधा बहुधा चैव, दृश्यते जलचन्द्रवत् ॥१॥ यथा विशुद्धमाकाशं, तिमिरोपप्लुतो जनः । सङ्कीर्णमिव मात्राभिर्भिन्नाभिरभिमन्यते ॥२॥ तथेदममलं ब्रह्म, निर्विकल्पमविद्यया । कलुषत्वमिवापन्नं, भेदरूपं प्रकाशते ॥३॥ ऊर्ध्वमूलमधःशाख-

मश्वत्थं प्राहुरव्ययम् । छन्दांसि यस्य पर्णानि, यस्तं वेद स वेदवित् ॥४॥ पुरुष एवेदग्निं सर्वं यद् भूतं यच्च भाव्यं उतामृतत्वस्ये-
शानो यदन्नेनातिरोहति यदेजति यन्नेजति यद्दूरे यदन्तिके यदंतरस्य सर्वस्य यदु सर्वस्यास्य बाह्यतः" इत्येवमादि, उच्यते, गौतम !
तद्व्योम एकलिङ्गं-एकस्वभावं पिण्डेषु-मूर्तिमत्सु भावेषु यथा तथा नायं जीवः सर्वपिण्डेष्वेकलिङ्ग इति गाथार्थः ॥२०५९-६०॥
प्रयोगः-'नाणे'त्यादि । भुवि नाना जीवाः लक्षणादिभेदात् कुम्भादय इव व्यतिरेकेण खं, यतश्च तदेकत्वे सुखदुःखबन्धमो-
क्षादेरभावः प्राप्नोति, नारकेन्द्रजीवयोरेकत्वात् तदभावः, संसारमुक्तजीवयोश्चैकत्वादेकभावः, चशब्दात्कर्त्रभाव इति गाथार्थः ।२०६१।
कथं न लक्षणभेदः ? इत्यत आह-'जेणे'त्यादि । जीवो ह्युपयोगचिह्नः, स चोपयोगः प्रतितनु भिन्नोऽनुभूयते, कथं ?-उत्क-
र्षापकर्षदर्शनात्, तेन तद्भेदात्तेऽनन्ताः, उपयोगो नैकस्ततश्च जीवा अपि अनन्ता इति । प्राग्गाथापश्चार्द्धं व्याचिख्यासुराह-'एगत्ते'
इत्यादि । एकत्वे न सुखदुःखबन्धमोक्षाः सर्वगतत्वान्नभस इव, व्यतिरेकेणास्य देवदत्तः, न च सर्वजगत्सर्वैकत्वे कर्त्ता भोक्ता मन्ता
संसारी वा, अत एव हेतोस्तद्वत् । 'एगत्ते'इत्यादि । अपि चैकानेकत्वे मुक्तामुक्तजीवराशेरभ्युपगम्यमाने नत्थि सुहीति पक्षः, बहू-
पघातत्वात्, यो यो बहुतरोपघातः न स न सुखी, यथा सर्वाङ्गमपवरोगाहृतोऽन्यत्रैकाङ्गुल्यग्रमात्राद्, व्यतिरेकेण संनिहितसुख-
साधनसामग्रीको निरुजो देवदत्तः, न चात्मैकत्वे मुक्तः, बहुतरबद्धत्वात्, संसारिजीवापेक्षया, इह यो बहुतरबद्धो नासौ मुक्त इति
व्यपदिश्यते, न चामुक्तः सुखमश्नुते, यथा सर्वाङ्गकीलितः पुमानन्यत्राङ्गुल्यग्रैकदेशात्, यश्च मुक्तो नासौ बहुतरोपनिबद्धो, न च स्व-
च्छनिबन्धनो, यथाऽकीलितो विष्णुमित्र इति गाथार्थः ॥२०६२-६४॥ अपि चाद्वैतवादिन् ! 'जीव'इत्यादि ॥ त्वक्पर्यन्तदेहमात्रव्यापी
जीवः, तद्गुणोपलब्धेः, घटवत्, तन्मात्र इत्यर्थः, यश्च यत्रासन् न तस्य तत्र गुणोपलब्धिर्यथाऽग्रेरम्भसि, यद्वा तनुमात्रव्यापी जीवो

बहिस्तद्गुणानुपलब्धेः घटात्मनि पटवत्, यश्च यत्रास्ते न तस्य तत्र गुणानुपलम्भो, यथा स्वाकारे घटस्येति गाथार्थः ॥२०६५॥ 'तम्हा'इत्यादि । तस्मात्कर्तृत्वादयो बहुत्वासर्वगतत्वयोः सतोर्युक्ताः, तदेवं प्रमाणसिद्धमेवंविशिष्टं 'च गृहाण जीवमिति गाथार्थः ॥ २०६६॥ यदा तु मन्यसे यद्यपि वेदपदविहितो जीवस्तथाऽपि पुनर्वाक्यान्तरेण बाधितत्वात्संशय एव मे श्रेयानिति, तदपि मा कृथाः, यतो वेदपदानामर्थं नैव जानासि त्वं, तस्यगर्थ एव विपरीतार्थप्रतिपत्तेः, कथं पुनरिदमेवं ?, अत आह भाष्यकारः—

गोयम ! वेयपयाणं इमाणमत्थं च तं न याणासि । जं विन्नाणघणो च्चिय भूएहिंतो समुत्थाय ॥२०६७॥

मण्णसि मज्जंगेसु व मयभावो भूयसमुदउब्भूओ । विन्नाणमेत्तमाया भूएऽणु विणस्सइ स भूओ ॥२०६८॥

अत्थि न य पेचसण्णा जं पुव्वभवेऽभिहाणममुगोत्ति । जं भणियं न भवाओ भवंतरं जाइ जीवोत्ति ॥२०६९॥

गोयम ! पयत्थमेवं मन्नंतो नत्थि मन्नसे जीवं । वक्कंतरेसु य पुणो भणिओ जीवो जमत्थित्ति ॥२०७०॥

अग्गिहवणाइकिरियाफलं च तो संसयं कुणसि जीवे । मा कुरु न पयत्थोऽयं इमं पयत्थं निसामेहि ॥२०७१॥

विण्णाणाओऽणण्णो विण्णाणघणोत्ति सव्वसो वाऽवि । स भवइ भूएहिंतो घडविण्णाणाइभावेणं ॥२०७२॥

ताइं च्चिय भूयाइं सोऽणु विणस्सइ विणस्समाणाइं । अत्थंतरोवओगे कमसो विण्णेयभावेणं ॥२०७३॥

पुव्वावरविण्णाणोवओगओ विगमसंभवसहावो । विण्णाणसंतईए विण्णाणघणोऽयमविणासी ॥२०७४॥

न य पेच्चनाणसण्णाऽवतिट्ठए संपओवओगाओ । विण्णाणघणाभिक्खो जीवोऽयं वेयपयभिहिओ ॥२०७५॥

एवंपि भूयधम्मो नाणं तब्भावभावओ बुद्धी । तं नो तदभावम्मिवि जं नाणं वेयसमयम्मि ॥२०७६॥

अत्थमिए आइच्चे चन्दे संतासु अग्गिवायासु। किंजोइरयं पुरिसो ? अप्पज्जोइत्ति निद्दिट्ठो ॥२०७७॥
तदभावे भावाओ भावे चाभावओ न तद्धम्मो । जह घडभावाभावे विवज्जयाओ पडो भिन्नो ॥२०७८॥
एसिं वेयपयाणं न तमत्थं वियसि अहव सव्वेसिं । अत्थो किं होज्ज सुई विण्णाणं वत्थुभेओ वा ॥२०७९॥
जाइं दव्वं किरिया गुणोऽहवा संसओ तवाजुत्तो । अयमेवेति नवायं न वत्थुधम्मो जओ जुत्तो ॥२०८०॥
सव्वं चिय सव्वमयं सपरप्पज्जायओ जओ निययं। सव्वमसव्वमयंपि य विचित्तरूवं विवक्खाओ ॥२०८१॥
सामन्नविसेसमओ तेण पयत्थो विवक्खया जुत्तो । वत्थुस्स विस्सरूवो पज्जायावेक्खया सव्वो ॥२०८२॥
छिन्नम्मि संसयम्मी जिणेण जरमरणविप्पमुक्केणं । सो समणो पव्वइओ पंचहिँ सह खंडियसएहिं ॥२०८३॥
एयं कम्माईसुवि जं सामण्णं तयं समाउज्जं। जो पुण एत्थ विसेसो समासओ तं पवक्खामि ॥२०८४॥
'गोयमे' त्यादि । 'मन्नसी'त्यादि । 'अत्थी'त्यादि । गौतम ! इत्यामन्त्रणं 'वेदपदानां' श्रुतिवाक्यानां 'अमीषां' विरुद्धानां 'न य जाणासि'त्ति नैवावबुध्यसे, किमित्यत आह–'अर्थं' अभिप्रायं, किं कारणमित्याह–जं मन्नसित्ति संबन्धः, यस्मान्मन्यसे–यस्मादवबुध्यसे त्वं, किमित्यत आह–'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्यसञ्ज्ञाऽस्ती'ति, अस्य वाक्यस्यार्थ एवं, यदुत 'विन्नाणघणोच्चिय'त्ति, अस्य व्याख्या–पृथिव्यादिभूतविज्ञानलवसमुदायो विज्ञानघनः, पृथिव्यादिविज्ञानदेशानां पिण्डीभवनमितियावत्, अवधारणं त्वात्मनो भूतातिरिक्तस्य विज्ञानगुणाश्रयस्याभावोपदर्शनार्थं, एतेभ्यो भूतेभ्य इति पृथिव्यादिभ्यः अन्यथा जीवपर्यायवचनोऽपि भूतशब्दः श्रूयते, ततस्तेभ्यो मा भूत्, एतदुक्तं भवति–न जैनानामिवाने-

कसत्वसंघातघनो विज्ञानघनोऽभिगृह्यते वनस्पताविव, यदाहुः—"चक्राकं भज्यमानस्ये" (प्रज्ञा पद १) त्येवमादि, 'समुत्थाय' इति संभूय, अनेनाभूतविज्ञानप्रादुर्भावस्ते चेतसि विपरिवर्त्तते, पृथिव्यादिविज्ञानदेशानामपि समुदायनिमित्तपरिणामाङ्गीकरणं, न व्यस्तानामितियावत्, तान्येवानु विनश्यतीति तान्येव अनुविनश्यन्ति सत्यसावप्यनुम्रियते, न पुनरात्मवादिनामिव शरीरे विनश्यति समुत्थायान्यत्र यातीति, अत एवोच्यते—'न प्रेत्यसञ्ज्ञाऽस्ति' प्रेत्यभवो नाम नरकादिः, य एवायं प्रेत्य नारको देवो वाऽभवत् स मनुष्योऽधुना संवृत्त इत्येवं न भवाद्भवान्तरमस्तीत्युक्तं भवति, अतः—'गोयमे'त्यादि ॥ गौतम ! अमुं पदार्थं मन्यमानोऽस्य वाक्यस्य'मन्यसे' अवबुध्यसे 'जीव' आत्मा यदुत नास्ति भूताधिकः इत्येकमाशङ्कास्थानं, 'जं च पुणो' त्ति यद्–यस्माच्च पुनर्वाक्यान्तरेषु भणितः पुनरस्ति जीवः "न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति, अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशतः" इति वचनात्, अग्निहवनफलश्रुतेश्च "अग्निहोत्रं जुहुयात्स्वर्गकामः" इति वचनादिति । आह च–'अग्गी'त्यादि पुव्वद्धं कंठं । उच्यते–'मा कुरु' त्ति मा कृथाः संशयं, यतो न पदार्थोऽयमस्य, तस्मादमुं पदार्थं सम्यगर्थमस्य शृणु वक्ष्य इति गाथार्थः ॥२०७१॥

'विन्नाणे'त्यादि ॥ विशिष्टं ज्ञानं विज्ञानं, ज्ञानदर्शनोपयोग इत्यर्थः, तस्माद्विज्ञानात् आत्माऽनन्य इतिकृत्वा विज्ञानघनः, 'सव्वसो वावि' त्ति पदिना सर्वतः प्रतिप्रदेशमनन्तानन्तविज्ञानपर्यायसंघातघटितत्वाद्विज्ञानघन एवेति, एवशब्दाद्विज्ञानघन एवेति नियम्यते, विज्ञानघनानन्यत्वात्, अथवा शेषात्मधर्माणामपि सुखादीनां चेतोवृत्त्यविरोधात् विज्ञानघनान्तर्भावोपदर्शनार्थं सर्वात्मलिङ्गोपसंग्रहार्थं वा, स विज्ञानघनः 'भवति' उत्पद्यते 'भूतेर्हिंतो' त्ति 'भूतेभ्यो' घटपटकटरथाश्वाग्न्यादिभ्यो द्रव्येभ्यः सहकारिभ्यः, कथं भवतीत्याह–घटविज्ञानादिभावेन, 'किममूलं प्रवर्त्तत' इति वचनात् ॥ तान्येवानुविनश्यतीत्यस्यार्थः–'ताइं चिये'त्यादि ॥

स च विज्ञानघनस्तान्येव भूतान्यालम्बनभूतानि विनश्यन्ति सन्ति विनाशव्यवधानभाञ्जि सन्त्यावृतिभाञ्जि वा सन्ति 'क्रमशः' परिपाट्या 'विज्ञेयभावेन' नीलाद्यवबोधेन 'विनश्यति' व्येति, कदेत्याह–'अर्थान्तरोपयोगे' पीताद्यवबोधोत्पत्तौ सत्यां, आत्मना त्वजहद्वृत्तिरेवास्त इति, तथा हेतुरुक्तः अयं त्रिस्वभावस्थितिरिति, आह च–'पुव्वावरे'त्यादि गतार्था। 'न प्रेत्ये'त्यादि व्याचष्टे 'नय' इत्यादि ॥ न च प्रेत्यज्ञानसञ्ज्ञा' न च प्रगेतनी नीलादिविज्ञानसञ्ज्ञाऽवतिष्ठते 'संपओवओगाओ' त्ति वार्त्तमानिकपीताद्याकारोत्पत्ताविति, अर्थाद्विभक्तिपरिणतिः, एतद्विमितत्वात्तस्याः, अतः 'विन्नाणे'त्यादि भावार्थकथनम् ॥ 'एवंपी'त्यादि ॥ स्याद् बुद्धिः– एवमपीति एतेभ्य इत्यनेन प्रकारेण भूतधर्मो विज्ञानघनः प्रसजति, विषयभावभावित्वादिति, तन्न, यतः 'तदभावेऽपि' विषयात्ययेऽपि विज्ञानं श्रुतावुक्तम् "अस्तमिते आदित्ये याज्ञवल्क्यः चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुषः ?, आत्मज्योतिः सम्राडिति होवाच" ज्योतिरिति ज्ञानमाह, आत्मैव ज्योतिरस्य सोऽयमात्मज्योतिर्ज्ञानात्मक इतियावत्, अतो न ज्ञानं भूतधर्मः, अमुमेवार्थमाह–'अत्थमिते'इत्यादि गतार्था ॥ इतश्च–'तद'इत्यादि ॥ न भूतधर्मो विज्ञानघनः, तदभावे भावात् तद्भावेऽपि चाभावात्, दृष्टान्तमानमाह–यथा घटस्य न पटो धर्मो, विपर्ययात्, प्रयोगः–विवक्षितधर्मिधर्म एव विज्ञानघनः, तद्भावभावित्वाद् घटरक्ततावद्, व्यतिरेकेण तु शून्यत्वमिति गाथार्थः ॥२०७८॥ 'एसिं'गाहा ॥ 'जाई'त्यादि ॥ एवममीषां गौतमेत्यादि, हे गौतम ! त्वं वेदपदानामर्थं न वेत्सि, अथवा सर्वेषामपि, यतोऽभिमन्यसे 'अत्थो एएसिं होज्ज किं श्रुतिः ?, किं वेदपदस्य शब्दपदमेवार्थो, यथा भेरीशब्दोऽयमित्येतावन्मात्रं, उत विज्ञानं, यथा भेरीशब्दो, घट इति वा, उत वस्तुभेदो यथा श्रुतिज्ञानानन्तरमूर्ध्वकुण्डलौष्ठायतवृत्तरूपाय घट इति प्रत्ययः, उत जातिर्यथा गौरिति, उत द्रव्यं यथा दण्डी, उत क्रियां यथा धावतीति, उत गुणः यथा शुक्ल इति,

'इति' एवं तव संशय एतेषु, स चायुक्तः, वस्तुन एवमनवस्थानात्, कथमिति चेदुच्यते–'यतः' यस्माद् 'वस्तुधर्मः' वस्तुपर्यायः 'न युक्तः' न घटते, कथमित्याह–अयमेवैवं नैवायमिति चेत्येन, किमिति चेदुच्यते–सर्वात्मकत्वाद्वस्तुनः, स्वपरपर्यायद्वारेण, वस्तुविशेषश्च शब्दस्तस्मात्र तद्धर्मावधारणं युक्तं, स्पष्टयन्नाह–'सव्वं चिय' इत्यादि ॥ 'यतो' यस्मात् 'नियतं' निश्चितं सर्वमेव वस्तु सर्वात्मकं, कयाऽपेक्षयेत्यत आह–स्वपरपर्यायापेक्षया, सामान्यापेक्षयेत्यर्थः, तथा सर्वं वस्तु असर्वमयमपि, विशेषविवक्षया, स्वपर्यायाऽपेक्षयेत्यर्थः, एवं विविक्तरूपं वस्तु, अनेकान्तव्यवस्थानादिति गाथार्थः ॥२०७९–८१॥ निगमयन्नाह–'सामन्ने'त्यादि ॥ तेन पदार्थो गमौर्वो युक्तः, किंविशिष्टः ? इत्यत 'आह–विश्वरूपः' नानाकारः, स्वपरपर्यायापेक्षयेत्यर्थ इति गाथार्थः ॥२०८२॥ तदेवमपनीताक्षेपाशङ्क इन्द्रभूतिर्विस्मयमगमत्–अहो भगवान् सर्वज्ञ इति, दुरुक्तं प्राक् चिन्तितं भाषितं चासीत्, करोति च ममायमधुना नेत्रयोः शरच्छशीकोत्सवमिति निर्भिन्नग्रन्थिरवोचत्–भगवन् ! यद्यहं योग्यः, प्रव्रज्यायास्त्वयेक्षितः । मह्यं प्रदीयतामेषा, ततः का कालयापना ? ॥१॥ 'छिन्नम्मी'त्यादि पुनरर्द्धं कण्ठ्यम् । 'सः' गौतमस्वामी 'प्रव्रजितः' पापाद् व्रजितः प्रव्रजितो–दीक्षां प्रतिपन्नः, किंविशिष्टः ? इत्याह– श्रमणः 'नासंयतः प्रव्रजती'ति वचनात्, किमेकाकी ?, नेत्याह–पञ्चभिः शतैः सह परिवृतः खण्डिकानां छात्राणां, अनेन तेषामन्तात् अन्तानुयायिनं वर्द्धमानमाहेति गाथार्थः ॥ एकादशैतानि वादस्थानकानि भविष्यन्त्यत आह–'एव'मित्यादि ॥ अनेन जीवप्रगमनेन कर्मादिष्वपि यत्तुल्यं तुल्ययोगक्षेमं तत् स्वधिया समायोज्यं, न तु साक्षादभिधास्यते. ग्रन्थगौरवभयात्, यः पुनर्यत्र कर्मादिद्वारे विशेषः संक्षेपतस्तं तु वक्ष्याम्येवेति गाथार्थः ॥२०८३–८४॥ 'जीवे'त्ति दारं ॥ पढमो गणधरो गओ ॥१॥

स च विज्ञानघनस्तान्येव भूतान्यालम्बनभूतानि विनश्यन्ति सन्ति विनाशव्यवधानभाञ्जि सन्त्यावृतिभाञ्जि वा सन्ति 'क्रमशः' परिपाट्या 'विज्ञेयभावेन' नीलाद्यवबोधेन 'विनश्यति' च्योति, कदेत्याह–'अर्थान्तरोपयोगे' पीताद्यवबोधोत्पत्तौ सत्यां, आत्मना त्वजहद्वृत्तिरेनास्त इति, तथा होकएवायं त्रिस्वभावस्थितिरिति, आह च–'पुव्वावरे'त्यादि गतार्था। 'न प्रेत्ये'त्यादि व्याचष्टे 'नय' इत्यादि ॥ न च प्रेत्यज्ञानसञ्ज्ञा' न च प्रेतनी नीलादिविज्ञानसञ्ज्ञाऽवतिष्ठते 'संपओवओगाओ' त्ति वार्त्तमानिकपीताद्याकारोत्पत्ताविति, अर्थाद्विभक्तिपरिणतिः, एतद्विभितत्वात्तस्याः, अतः 'विन्नाणे'त्यादि भावार्थकथनम् ॥ 'एवंपी'त्यादि ॥ स्याद् बुद्धिः– एवमपीति एतेभ्य इत्यनेन प्रकारेण भूतधर्मो विज्ञानघनः प्रसजति, विषयभावभावित्वादिति, तन्न, यतः 'तदभावेऽपि' विषयात्ययेऽपि विज्ञानं श्रुतावुक्तम् "अस्तमिते आदित्ये याज्ञवल्क्यः चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुषः ?, आत्मज्योतिः सम्राडिति होवाच" ज्योतिरिति ज्ञानमाह, आत्मैव ज्योतिरस्य सोऽयमात्मज्योतिर्ज्ञानात्मक इतियावत्, अतो न ज्ञानं भूतधर्मः, अमुमेवार्थमाह–'अत्थमिते'इत्यादि गातार्था ॥ इतश्च–'तद'इत्यादि ॥ न भूतधर्मो विज्ञानघनः, तदभावे भावात् तद्भावेऽपि चाभावात्, दृष्टान्तमात्रमाह–यथा घटस्य न पटो धर्मो, विपर्ययात्, प्रयोगः–विवक्षितधर्मिधर्म एव विज्ञानघनः, तद्भावभावित्वाद् घटरक्ततावद्, व्यतिरेकेण तु शून्यत्वमिति गाथार्थः ॥२०७८॥ 'एसिं'गाहा ॥ 'जाई'त्यादि ॥ एवममीषां गौतमेत्यादि, हे गौतम ! त्वं वेदपदानामर्थं न वेत्सि, अथवा सर्वेषामपि, यतोऽभिमन्यसे 'अत्थो एएसिं होज्ज किं श्रुतिः ?, किं वेदपदस्य शब्दपदमेवार्थो, यथा मेरीशब्दोऽयमित्येतावन्मात्रं, उत विज्ञानं, यथा भेरीशब्दो, घट इति वा, उत वस्तुभेदो यथा श्रुतिज्ञानानन्तरमूर्ध्वकुण्डलौष्ठायतवृत्तरूपाय घट इति प्रत्ययः, उत जातिर्यथा गौरिति, उत द्रव्यं यथा दण्डी, उत क्रियां यथा धावतीति, उत गुणः यथा शुक्ल इति,

सुधासोदरसर्वज्ञागमशोधितान्तःकरणश्रीजिनभद्रगणिक्षमाश्रमणकृते
श्रीकोट्याचार्यकोडीकृते

विशेषावश्यकभाष्ये प्रथमो भागः समाप्तः ॥